जगाम त्रिदिवं देवस् तक्षाऽपि स्वगृहान् ययौ ॥ ४७॥

[1]तक्षाऽपि स्वगृहं गत्वा नैव शंसति कस्यचित् ।
अथैनं नाभिजानन्ति वर्षमेकं तथागतम् ॥ ४८॥

अथ संवत्सरे पूर्णे भूताः पशुपतेः प्रभो ।
समाक्रोशन्त मघवान् नः प्रभुर्ब्रह्महा इति ॥ ४९॥

तत इन्द्रो व्रतं घोरम् आचरत् पाकशासनः ।
तपसा च सुसंयुक्तस् सह देवैर्मरुद्गणैः ॥ ५०॥

समुद्रेषु पृथिव्यां च वनस्पतिषु स्त्रीषु च ।
विभज्य ब्रह्महत्यां च तान् वरैरप्ययोजयत् ॥ ५१॥

वरदस्तु वरं दत्त्वा पृथिव्यै सागराय च ।
वनस्पतिभ्यस्त्रीभ्यश्च ब्रह्महत्यां नुनोद ताम् ॥ ५२॥

ततस्तु शुद्धो भगवान् देवैर्लोकैश्च पूजितः ।
इन्द्रस्थानमुपातिष्ठत् पूज्यमानो महर्षिभिः ॥ ५३॥

मेने कृतार्थमात्मानं हत्वा शत्रून् सुरारिहा ॥ ५४

त्वष्टा प्रजापतिश्श्रुत्वा शक्रेणाथ सुतं हतम् ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ५५

त्वष्टा—

तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम् ।

---

1. अ-क—कोशयोः श्लोकषट्कं नास्ति ।

विनाऽपराधेन यतः पुत्रं हिंसितवान् मम ॥ ५६
तस्मादिन्द्रविनाशाय वृत्रमुत्पादयाम्यहम् ॥ ५६॥
लोकाः पश्यन्तु मे वीर्यं तपसश्च बलं महत् ।
स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः ॥ ५७॥
उपस्पृश्य ततः क्रुद्धस् तपस्वी सुमहायशाः ।
अग्नौ हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह ॥ ५८॥
इन्द्रशत्रो विवर्धस्व प्रभावात् तपसो मम ॥ ५९
सोऽवर्धत दिवं स्तब्ध्वा सूर्यवैश्वानरोपमः ।
किं करोमीति चोवाच कालसूर्य इवोदितः ॥ ६०
शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः ॥ ६०॥
[1]ग्रस्ता लोकाश्च वृत्रेण सर्वे भरतसत्तम ।
त्वष्टुस्तेजोविवृद्धेन वृत्रेण सुमहात्मना ॥ ६१॥
सर्वगन्धेन्द्रियरसा हृता भारत तेन वै ॥ ६२
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
हृतमेतन्महाराज वृत्रेण सुमहात्मना ॥ ६३
ततो युद्धं समभवद् वृत्रवासवयोर्महत् ।
सङ्क्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम ॥ ६४
ततो जग्राह देवेन्द्रं वृत्रो वीरश्शतक्रतुम् ।
अपावृत्याक्षिपद्वक्त्रे शक्रं कोपसमन्वितः ॥ ६५
ग्रस्ते वृत्रेण शक्रे तु सम्भ्रान्तास्त्रिदिवेश्वराः ।

---

1. मा—कोश एकस्मिन्नेवेदमर्धपञ्चकमस्ति ।

अस्रृजंस्ते महासत्वा जृम्भिकां वृत्रनाशिनीम् ॥ ६६

विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात् ।
[1]स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलसूदनः ॥ ६७

ततःप्रभृति लोकस्य जृम्भिका प्राणिसंश्रिता ।
जहृषुश्च सुरास्सर्वे शक्रं दृष्ट्वा विनिस्सृतम् ॥ ६८

ततः प्रववृधे युद्धं वृत्रवासवयोः पुनः ।
संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ ॥ ६९

यदा व्यवर्धत रणे वृत्रो बलसमन्वितः ।
त्वष्टुस्तेजोबलाविद्धस् तदा शक्रो न्यवर्तत ॥ ७०

निवृत्ते च तदा देवा विषादमगमन् पुनः ।
समेत्य सह शक्रेण त्वष्टुस्तेजोविमोहिताः ॥ ७१

अमन्त्रयन्त ते सर्वे मुनिभिस्सह भारत ।
किं कार्यमिति वै राजन् विचिन्त्य भयमोहिताः ॥ ७२

जग्मुस्सर्वे महात्मानं मनोभिर्विष्णुमव्ययम् ।
उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ॥ ७३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि नवमोऽध्यायः ॥ ९ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये ७३ श्लोकाः]

---

1. मा—ह्रस्वं रूपमथो कृत्वा निर्गतो बलनाशनः । [पाठान्तरम्]

## ॥ दशमोऽध्यायः ॥

विष्ण्वाज्ञया ऋषिभिर्वृत्रस्य आयुधाद्यवध्यत्ववरदानपूर्वकं इन्द्र-वृत्रयोः सन्धिकरणम् ॥१॥ कदाचन समुद्रतीरे वृत्रं दृष्टवता इन्द्रेण वृत्रोपरि सवज्रे फेने प्रक्षिप्ते तत्प्रविष्टेन विष्णुना वृत्रहननम् ॥ २ ॥ वृत्रवधजन्यब्रह्महत्यापीडितस्येन्द्रस्य स्वर्गात् प्रवासः ॥ ३ ॥

**शल्यः—**

[1]आख्यानमुत्तममिदम् इतिहासं पुरातनम् ।
शृणु मे भ्रातृभिस्सार्धं सर्वशत्रुजयावहम् ॥ १
वृत्रभूतेषु लोकेषु भयमिन्द्रमुपागमत् ॥ १॥
अथेन्द्रो हि महातेजास् समेत्य सह दैवतैः ।
आमन्त्रयत तेजस्वी वृत्रस्य वधकारणात् ॥ २॥

**इन्द्रः—**

सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम् ।
न ह्यस्य सदृशं किञ्चित् प्रतिघाताय यद्भवेत् ॥ ३॥

समर्थो ह्यभवं पूर्वम् असमर्थोऽस्मि साम्प्रतम् ।
कथं कुर्याम भद्रं वो दुर्धर्षस्सहि मे मतः ॥ ४॥

तेजस्वी च महात्मा च युद्धे चामितविक्रमः ।
ग्रसेत् त्रिभुवनं सर्वं सदेवासुरमानुषम् ॥ ५॥

1. मा—कोश एवेदं सार्धश्लोकद्वयं वर्तते ।

[1]तस्माद्विनिश्चयमिमं शृणुध्वं मे दिवौकसः ॥ ६

विष्णोः क्षयमुपागम्य समेत्य च महात्मना ।

तेन सम्मन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः ॥ ७

शल्यः—

[2]एवमुक्ता मघवता देवास्सर्षिगणास्तदा ।

शरण्यं शरणं देवं जग्मुर्विष्णुं महाबलम् ॥ ८

ऊचुश्च सर्वे देवेशं विष्णुं वृत्रभयार्दिताः ॥ ८॥

देवाः—

त्रयो लोकास्त्वया क्रान्तास् त्रिभिर्विक्रमणैः पुरा ।

अमृतं च हृतं विष्णो दैत्याश्च निहता रणे ॥ ९॥

बलिं बद्ध्वा महादैत्यं शक्रो देवाधिपः कृतः ।

त्वं प्रभुस्सर्व[3]लोकानां त्वया सर्वमिदं ततम् ॥ १०॥

त्वं हि देवो महादेवस् सर्वलोकनमस्कृतः ।

गतिर्भवसि देवानां सेन्द्राणाममरोत्तम ॥ ११॥

जगद्व्याप्तमिदं सर्वं वृत्रेणारिनिषूदन ॥ १२

विष्णुः—

अशक्यकरणीयं मे भवतां हितमुत्तमम् ।

---

1. मा—अर्धत्रयं न ।
2. मा—एवमुक्ता महेन्द्रेण सर्वदेवास्सवासवाः ।
प्रणिपत्य महाविष्णुं पुरुषं पुरुषोत्तमम् ॥ [पाठान्तरम्]
3. अ-क—देवानां ।

तस्मादुपायं वक्ष्यामि यथाऽसौ न भविष्यति ॥ १३

गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक् ॥ १३॥

[1]साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ।

[2]भविष्यति जयो देवाश् शक्रस्य मम तेजसा ॥ १४॥

अदृश्यश्च प्रवेक्ष्यामि वज्रमेवायुधोत्तमम् ।

गच्छध्वमृषिभिस्सार्धं गन्धर्वैश्च सुरोत्तमाः ॥ १५॥

वृत्रस्य सह शक्रेण सन्धिं कुरुत मा चिरम् ॥ १६

शल्यः—

[3]एवमुक्ते तु देवेन ऋषयस्त्रिदशास्तदा ।

ययुस्समेत्य विभुना शक्रं कृत्वा पुरस्सरम् ॥ १७

[4]समीपमेत्य च तदा सर्व एव दिवौकसः ॥ १७॥

तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश ।

ग्रसन्तमिव लोकांस्त्रीन् सूर्याचन्द्रमसौ तथा ॥ १८॥

ददृशुस्ते तपोवृद्धं शक्रेण सह देवताः ॥ १९

[5]ऋषयश्च ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः ॥ १९॥

---

1. अ-क—सन्धिं
मा—साम एवात्र कुर्वाणास् तत एनं वधिष्यथ । [अधिकः पाठः]

2. मा—वर्धिष्यते बलं देवा इन्द्रस्य मम तेजसा । [पाठान्तरम्]

3. मा—विष्णुनाऽप्येवमुक्तास्ते देवाश्शक्रपुरोगमाः । [पाठान्तरम्]

4. मा—श्लोकद्वयं नास्ति

5. मा—ऋषयश्च सगन्धर्वा वृत्रमूचुः प्रियंवदाः । [पाठान्तरम्]

ऋषयः—

व्याप्तं जगदिदं सर्वं तेजसा तव दुर्जय ।
न च शक्नोषि निर्जेतुं [1]वासवं भूरिविक्रमम् ॥ २०॥

[2]युध्यतोश्चापि वां कालोऽप्यतीतस्सुमहानिह ।
पीड्यन्ते च प्रजास्सर्वास् सदेवासुरमानुषाः ॥ २१॥

[3]सख्यं भवतु ते पुत्र शक्रेण सह नित्यदा ।
अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च शाश्वतान् ॥ २२॥

शल्यः—

ऋषिवाक्यं निशम्याथ वृत्रस्स तु महाबलः ।
उवाच तानृषीन् सर्वान् प्रणम्य शिरसाऽसुरः ॥ २३॥

वृत्रः—

सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः ।
यद्ब्रूथ तच्छ्रुतं सर्वं ममापि शृणुतानघाः ॥ २४॥

सन्धिः कथं वै भविता मम शक्रस्य चोभयोः ।
तेजसोर्ह्यावयोर्देवास् सख्यं वै भविता कथम् ॥ २५॥

ऋषयः—

सकृत् सतां सङ्गतमीप्सितव्यं
ततः परं भविता भव्यमेव ।

---

1. अ-क—बलिनां वरम् ॥
मा—वासवं भूरितेजसम् ॥
2. मा—युध्यतश्चापि ते कालस्सुमहानत्यवर्तत ।	[पाठान्तरम्]
3. ख—नास्तीदमर्धम् ।

नातिक्रमेत् सत्पुरुषेण सङ्गतं
तस्मात् सतां सङ्गतमीप्सितव्यम् ॥ २६॥

[1]दृढं सतां सङ्गतं चापि नित्यं
ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीरः ।
महार्थवत् सत्पुरुषेण सङ्गतं
तस्मात् सतो न जिघांसेत धीरः ॥ २७॥

इन्द्रस्सतां सम्मतश्च निवासश्च महात्मनाम् ।
सत्यवादी ह्यदीनश्च धर्मवित् सूक्ष्मनिश्चयः ॥ २८॥

तेन ते सह शक्रेण सन्धिर्भवतु नित्यदा ।
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥ २९॥

शल्यः—

महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः ॥ ३०

वृत्रः—

अवश्यं भगवन्तो मे माननीयास्तपस्विनः ॥ ३०॥

ब्रवीमि यदहं देवास् तत् सर्वं क्रियते यदि ।
ततस्सर्वं करिष्यामि यदूचुर्मां द्विजर्षभाः ॥ ३१॥

न शुष्केण नचार्द्रेण नाश्मना न च दारुणा ।

---

1 मा—सकृत् सङ्गतं चेत् पुरस्ताद् अर्थं ब्रूयादर्थकृच्छ्रेष्वभीतः ।
अमोघं वै सत्पुरुषेण सङ्गतं तस्मात् कृतं न जिघांसेत धीरः ॥
[पाठान्तरम्]

न शस्त्रेण नचास्त्रेण न दिवा नापि वा निशि ॥ ३२॥

वध्यो भवेयं विप्रेन्द्राश् शक्रस्य सह दैवतैः ॥ ३३

एवं मे रोचते सन्धिश् शक्रस्य सह नित्यदा ॥ ३३॥

शल्यः—

बाढमित्येव ऋषयस् तमूचुर्भरतर्षभ ।
एवं वृत्ते तु सन्धाने ततः प्रमुदितोऽभवत् ॥ ३४॥

[1]ततस्सन्धिं मिथः कृत्वा ऋषयो दीप्ततेजसः ।
शक्रस्य सह वृत्रेण पुनर्जग्मुर्यथागतम् ॥ ३५॥

अथ दीर्घस्य कालस्य शक्रस्सञ्चिन्त्य भारत ।
यत्तस्सदाऽभवच्चापि क्रुद्धोऽमर्षसमन्वितः ॥ ३६॥

वृत्रस्य वधसंयुक्तान् उपायानन्वचिन्तयत् ॥ ३७

अभिसन्धिर्महेन्द्रस्य सन्धिकर्मणि यः कृतः ।
ऋषिभिस्त्वीरितं यच्च महेन्द्रस्तदनुस्मरन् ॥ ३८

छिद्रान्वेषी समुद्विग्नस् सदा वसति देवराट् ॥ ३८॥

स कदाचित् समुद्रान्ते तमपश्यन्महासुरम् ।
सन्ध्याकाल उपावृत्ते मुहूर्ते चातिदारुणे ॥ ३९॥

ततस्सञ्चिन्त्य मघवान् वरदानं महात्मनः ॥ ४०

1. मा—श्लोकोऽयं नास्ति

सन्ध्येयं वर्तते रौद्रा न रात्रि र्न च वासरः ।
[1]वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ४१

यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम् ।
महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ४२

एवं सञ्चिन्तयन्नेव शक्रो विष्णुमनुस्मरन् ।
अथ फेनं तदाऽपश्यत् समुद्रे पर्वतोपमम् ॥ ४३

नायं शुष्को न चार्द्रोऽयं न च शस्त्रमिदं तथा ।
एनं क्षिपामि वृत्रस्य क्षणादेव नशिष्यति ॥ ४४

[2]जग्राह च स तं फेनम् इन्द्रो वृत्रनिबर्हणम् ।
निगृह्य शक्रो बाहुभ्यां प्राहिणोद्वृत्रमस्तके ॥ ४५

सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् ।
प्रविश्य फेनं तं विष्णुर् अथ वृत्रं व्यनाशयत् ॥ ४६

निहते तु ततो वृत्रे दिशो वितिमिराऽभवन् ।
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तदा ॥ ४७

ततो देवास्सगन्धर्वा यक्षरक्षोमहोरगाः ।
ऋषयश्च महेन्द्रं तम् अस्तुवन् विविधैस्स्तवैः ॥ ४८

नमस्कृतस्सर्वभूतैस् सर्वभूतानि सान्त्वयन् ॥ ४८॥

हत्वा शत्रुं प्रहृष्टात्मा वासवस्सह दैवतैः ।
विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ॥ ४९॥

ततो हते महावीर्ये वृत्रे देवभयङ्करे ।

---

1. मा—अर्धत्रयं नास्ति
2. मा—कोश एवायं श्लोको वर्तते ।

अनृतेनाभिभूतोऽभूच् छक्रः परमदुर्मनाः ॥ ५०॥
त्रैशीर्षयाऽभिभूतश्च स पूर्वं ब्रह्महत्यया ।
[1]महादेवस्य भूतैस्तु स पुनर्ब्रह्महा इति ॥ ५१॥
आक्रुष्टो निर्भयैर्भूयः प्रार्थितो बलवृत्रहा ।
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ॥ ५२॥
न प्राज्ञायत देवेन्द्रस् त्वभिभूतस्सकलमषैः ॥ ५३
प्रतिच्छन्नोऽवसच्चाप्सु वेष्टमान इवोरगः ॥ ५३॥
ततः प्रनष्टे देवेन्द्रे ब्रह्महत्याभयार्दिते ।
भूमिः प्रध्वस्तसङ्काशा निर्वृक्षा शुष्ककानना ॥ ५४॥
विच्छिन्नस्रोतसो नद्यस् सरांस्यनुदकानि च ।
संक्षोभश्चापि सत्वानाम् अनावृष्टिकृतोऽभवत् ॥ ५५॥
देवाश्चापि भृशं त्रस्तास् तथा सर्वे महर्षयः ।
अराजकं जगत् सर्वम् अभिभूतमुपद्रवैः ॥ ५६॥
ततो भीताऽभवन् देवाः को नो राजा भवेदिति ।
दिवि देवर्षयश्चापि देवराजविनाकृताः ॥ ५७॥
न स्म कश्चन देवानां राज्ये वै कुरुते मतिम् ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
उद्योगपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ४९ ॥ सेनोद्योगपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ५८ श्लोकाः]

---

1. म-मा—कोशयोः अयं श्लोको न ।

## ॥ एकादशोऽध्यायः ॥

ऋषिभिर्देवैश्च नहुषस्य वरदानपूर्वकमिन्द्रराज्ये अभिषेचनम् ॥ १ ॥ कदाचन स्वावलोकनेन कलुषितमनसा नहुषेण काम्यमानायै इन्द्राण्यै बृहस्पतिना अभयप्रदानम् ॥ २ ॥

शल्यः—

ऋषयोऽथाब्रुवन् सर्वे देवाश्च त्रिदिवेश्वराः ।
अयं वै नहुषश्श्रीमान् देवराज्येऽभिषिच्यताम् ॥ १

[1]तेजस्वी च यशस्वी च धार्मिकश्चैव नित्यदा ।
[2]ते गत्वा त्वब्रुवन् सर्वे राजन् नो भव पार्थिवः ॥ २

स तानुवाच नहुषो देवानृषिगणांस्तथा ।
पितृभिस्सहितान् राजन् परीप्सन् हितमात्मनः ॥ ३

नहुषः—

दुर्बलोऽहं न मे शक्तिर् भवतां परिपालने ।
बलवाञ्जायतां राजा बलं शक्रे हि नित्यदा ॥ ४

शल्यः—

तमब्रुवन् पुनस्सर्वे देवा ऋषिपुरोगमाः ॥ ४॥

देवाः—

अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ५

1. ख-घ-ङ-म-मा—नास्तीदमर्धम् ।
2. ग-घ-ङ—ते गत्वा देवगन्धर्वा राजा नो भव पार्थिव । [पाठान्तरम्]

परस्परभयं घोरम् अस्माकं हि न संशयः ।
अभिषिञ्चस्व राजेन्द्र भव राजा त्रिविष्टपे ॥　　६

देवदानवयक्षाणाम् ऋषीणां रक्षसां तथा ।
पितृगन्धर्व [1]भूतानां चक्षुर्विषयवर्तिनाम् ॥　　७

तेज आदास्यसे पश्यन् बलवांश्च भविष्यसि ।
धर्मं पुरस्कृत्य सदा सर्वलोकाधिपो भव ॥　　८

ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे ॥　　८॥

शल्यः—

[2]अभ्यषिच्यत राजेन्द्र ततो राजा त्रिविष्टपे ।
धर्मं पुरस्कृत्य तदा सर्वलोकाधिपोऽभवत् ॥　　९॥

सुदुर्लभतरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ।
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ॥　　१०॥

देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ॥
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते ।　　११॥

सह्ये महेन्द्रमलये समुद्रेषु सरित्सु च ।
अप्सरोभिः परिवृतो देवकन्यासमावृतः ॥　　१२॥

नहुषो देवराजोऽथ क्रीडन् बहुविधं तदा ।

1. ग-घ-ङ-म-मा—देवानां दृष्ट्वा विषयवासिनाम् ।
2. ख-घ-मा—नास्त्ययं श्लोकः ।

शृण्वन् दिव्या बहुविधाः कथाश्श्रुतिमनोहराः ॥ १३॥
वादित्राणि च सर्वाणि गीतं च मधुरस्वरम् ॥ १४
विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः ।
ऋतवष्षट् च देवेन्द्रं मूर्तिमन्तमुपासते ॥ १५
मारुतस्सुरभिर्वाति मनोज्ञस्सुखशीतलः ॥ १५॥
एवं हि क्रीडतस्तस्य नहुषस्य दुरात्मनः ।
सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ॥ १६॥
स तां सन्दृश्य दुष्टात्मा प्राह सर्वान् सभासदः ॥ १७

नहुषः—

इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ।
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः ॥ १८
आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् ॥ १८॥

शल्यः—

तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ॥ १९

इन्द्राणी—

रक्ष मां नहुषाद्ब्रह्मंस् त्वामस्मि शरणं गता ।
सर्वलक्षणसम्पन्नां ब्रह्मंस्त्वं मां प्रभाषसे ॥ २०
देवराजस्य दयिताम् अत्यन्तसुखभागिनीम् ।
अवैधव्येन युक्तां वाऽप्येकपत्नीं पतिव्रताम् ॥ २१

क्तवानसि मां पूर्वम् ऋतां तां कुरु वै गिरम् ॥ २१॥

नोक्तपूर्वं च भगवन् [1]मृषा ते किञ्चिदीश्वर ॥ २२

तस्मादेतद्भवेत् सत्यं त्वयोक्तं द्विजसत्तम ॥ २२॥

शल्यः—

बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम् ॥ २३

बृहस्पतिः—

यदुक्ताऽसि मया देवि तत् सत्यं भविता ध्रुवम् ।
द्रक्ष्यसे देवराजानम् इन्द्रं शीघ्रमिहागतम् ॥ २४

न भेतव्यं च नहुषात् सत्यमेतद्ब्रवीमि ते ।
समागमिष्ये शक्रेण न चिराद्भवतीमहम् ॥ २५

शल्यः—

अथ शुश्राव नहुषश् शक्राणीं शरणागताम् ।
बृहस्पतिं चाङ्गिरसं चुक्रोध नहुषस्तदा ॥ २६

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
उद्योगपर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये २६ श्लोकाः]

---

1. अ-क—वृथा ।

## ॥ द्वादशोऽध्यायः ॥

नहुषप्रसादनाय देवादिभिः प्रार्थितेनापि बृहस्पतिना शच्या अत्याजनम् ॥१॥ बृहस्पत्यनुमत्या समयकरणाय शच्या नहुषसमीपगमनम् ॥२॥

शल्यः—

क्रुद्धं तु नहुषं दृष्ट्वा देवा ऋषिपुरोगमाः ।
अब्रुवन् देवराजानं नहुषं घोरदर्शनम् ॥ १

देवाः—

देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो ।
त्रस्तं सासुरगन्धर्वं सकिन्नरमहोरगम् । २

जहि क्रोधमिमं साधो न कुप्यन्ति भवद्विधाः ।
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ३

निवर्तय मनः पापात् परदाराभिमर्शनात् ।
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ४

शल्यः—

एवमुक्तो न जग्राह तद्वचः कालचोदितः ।
अथ देवानुवाचेदम् इन्द्रं प्रति सुराधिपः ॥ ५

नहुषः—

अहल्या धर्षिता पूर्वम् ऋषिपत्नी यशस्विनी ।

[1]पत्यौ जीवति सेन्द्रेण स घ किं न निवारितः ॥ ६

बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा ।
वैधर्म्या[2]ण्यपथा चैव स वः कस्मान्न वारितः ॥ ७

उपतिष्ठतु देवी माम् एतदस्या हितं परम् ।
युष्माकं च सदा देवाश् शिवमेवं भविष्यति ॥ ८

देवाः—

इन्द्राणीमानयिष्यामो सुराधिप यदीच्छसि ।
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ९

शल्यः—

इत्युक्त्वा तं तदा देवा ऋषिभिस्सह भारत ।
जग्मुर्बृहस्पतिं वक्तुम् इन्द्राणीं चाशुभं वचः ॥ १०

देवाः—

जानीमश्शरणं प्राप्ताम् इन्द्राणीं तव वेश्मनि ।
दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ॥ ११

ते त्वां देवास्सगन्धर्वा ऋषयश्च महाद्युते ।
प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥ १२

इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः ।
वृणोत्वियं वरारोहा भर्तृत्वे वरवर्णिनी ॥ १३

1. अ-क—जीवतो भर्तुरि ।
2. ख-ग-घ-ङ-मा—ण्युपधाश्चैव ।　　क—ण्यपथाच्चैव ।

शल्यः—

एवमुक्ता तु सा देवी बाष्पमुत्सृज्य सस्वनम् ।
उवाच रुदती दीना बृहस्पतिमिदं वचः ॥ १४

इन्द्राणी—

नाहमिच्छामि नहुषं पतिं देवर्षिसत्तम ।
शरणागताऽस्मि ते ब्रह्मंस् त्रायस्व महतो भयात् ॥ १५

बृहस्पतिः—

शरणागतां न त्यजेयम् इन्द्राणि मम निश्चयः ।
धर्मज्ञां सत्यशीलां च न त्यजेयमनिन्दिते ॥ १६

नाकार्यं कर्तुमिच्छामि ब्राह्मणस्सन् विशेषतः ।
श्रुतधर्मा सत्यशीलो जानन् धर्मानुशासनम् ॥ १७

नाहमेतत् करिष्यामि गच्छध्वं वै सुरोत्तमाः ।
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् ॥ १८

न तस्य बीजं रोहति [1]रोहकाले
न चास्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
[2]न स त्रातारं लभते त्राणमिच्छन् ॥ १९

मोघमन्नं विन्दति चाप्यचेताः
स्वर्गाल्लोकाद्भ्रश्यति भ्रष्टचेष्टः ।

1. अ-क—बीज ।
2. ख-घ-ङ—न सोऽन्तरं

भीतं प्रपन्नं प्रददाति [1]यो वै
न तस्य हव्यं प्रतिगृह्णन्ति देवाः ॥ २०

[2]प्रमीयते चास्य प्रजा ह्यकाले
सदा विवादं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं प्रददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ २१

एतदेवं विजानन् वै न दास्यामि शचीमिमाम् ।
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियाम् ॥ २२

अस्या हितं भवेद्यच्च मम चापि हितं भवेत् ।
क्रियतां तत् सुरश्रेष्ठा न हि दास्याम्यहं शचीम् ॥ २३

शल्यः—
अथ देवास्सगन्धर्वा गुरुमाहुरिदं वचः ॥ २३॥

देवाः—
कथं सुनीतं नु भवेन्मन्त्रयस्व बृहस्पते ॥ २४

बृहस्पतिः—
नहुषं याचतां देवी किञ्चित् कालान्तरं शुभा ।
हितमेतद्धि वै मन्ये तथाऽस्माकं भविष्यति ॥ २५

[3]बहुविघ्नकरः कालः कालस्तं घातयिष्यति ।
गर्वितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ २६

---

1. ख-ग-घ-ङ-मा—शत्रवे सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ।
2. ख-घ-ङ-मा—श्लोकोऽयं न दृश्यते ।
3. अ-क—विघ्नास्सुरास्सुबहवः कालः कालं नयिष्यति ।

शल्यः—

ततस्तेन तथोक्ते तु प्रीता देवास्तमब्रुवन् ॥ २६॥

देवाः—

ब्रह्मन् साध्विदमुक्तं ते हितं सर्वं दिवौकसाम् ।
एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् ॥ २७॥

शल्यः—

ततस्समस्ता इन्द्राणीं देवास्साग्निपुरोगमाः ।
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया ॥ २८॥

देवाः—

त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम् ।
एकपत्न्यसि साध्वी च गच्छ त्वं नहुषं प्रति ॥ २९॥

क्षिप्रं त्वामभिकामश्च विनशिष्यति पापकृत् ।
नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ३०॥

शल्यः—

एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये ।
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ३१॥

दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम् ।
समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[अस्मिन्नध्याये ३२॥ श्लोकाः]

## ॥ त्रयोदशोऽध्यायः ॥

शच्या नहुषं प्रति इन्द्रस्यान्वेषणेऽप्यपरिज्ञाने त्वामुपस्थास्य इति समयकरणम् ॥ १ ॥ देवैर्विष्णवाज्ञया इन्द्रस्य ब्रह्महत्यापनोदनायाश्वमेधयाजनम् ॥ २ ॥ ध्वस्तपाप्मनोऽपीन्द्रस्य पुनर्नहुषभयाददर्शने शोचन्त्या शच्या उपश्रुतिदेवीपूजनम् ॥ ३ ॥

शल्यः—

अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा । ॥

नहुषः—

त्रयाणामपि लोकानाम् अहमिन्द्रश्शुचिस्मिते ।
भजस्व मां वरारोहे पतित्वे वरवर्णिनि ॥ १॥

शल्यः—

एवमुक्ता तु सा देवी नहुषेण पतिव्रता ।
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा ॥ २॥

प्रणम्य सा हि ब्रह्माणं शिरसा तु कृताञ्जलिः ।
देवराजमथोवाच नहुषं घोरदर्शनम् ॥ ३॥

इन्द्राणी—

कालमिच्छाम्यहं लब्धुं त्वत्तः कञ्चित् सुरेश्वर ।
न हि विज्ञायते शक्रः किं वा प्राप्तः क्व वा गतः ॥ ४॥

तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते विभो ।

ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते ॥ ५॥

शल्यः—

एवमुक्तस्स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ६

नहुषः—

एवं भवतु सुश्रोणि यथा मामिह भाषसे ।
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मर ॥ ७

शल्यः—

नहुषेण विसृष्टा सा निश्चक्राम ततश्शुभा ।
बृहस्पतिनिकेतं च सा जगाम यशस्विनी ॥ ८

तस्यास्संश्रुत्य च वचो देवास्साग्निपुरोगमाः ।
[1]मन्त्रयामासुरेकाग्राश् शक्रार्थं राजसत्तम ॥ ९

देवदेवेन सङ्गम्य विष्णुना प्रभविष्णुना ।
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥ १०

देवाः—

ब्रह्महत्याभिभूतो वै शक्रस्सुरगणेश्वरः ।
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ॥ ११
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ ११॥

त्वद्वीर्यान्निहते वृत्रे वासवो ब्रह्महत्यया ।
वृतस्सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ॥ १२॥

1. अ-क—चिन्तयामासु ।

शल्यः—

तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥ १३

श्रीभगवान्—

मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥ १३॥

पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ।
पुनरेष्यति देवानाम् इन्द्रत्वमकुतोभयः ॥ १४॥

स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ।
कञ्चित् कालमिमं देवा मर्षयध्वमतन्द्रिताः ॥ १५॥

शल्यः—

श्रुत्वा विष्णोश्शुभां वाणीं तां सत्याममृतोपमाम् ।
ततस्सर्वे सुरगणास् सोपाध्यायमहर्षिभिः ॥ १६॥
यत्र शक्रो भयोद्विग्नस् तं देशमुपचक्रमुः ॥ १७

तत्राश्वमेधस्सुमहान् महेन्द्रस्य महात्मनः ।
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ॥ १८

विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च ।
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर ॥ १९

संविभज्य च भूतेषु विसृज्य च नरेश्वर ।
विज्वरो धूतपाप्मा च वासवोऽभवदात्मवान् ॥ २०

अकम्प्यं नहुषं स्थानाद् दृष्ट्वा बलनिषूदनः ।

तेजोऽग्निं सर्वभूतानां वरदानाच्च दुस्सहम् ॥ २१

ततश्शचीपतिर्देवः पुनरेव व्यनश्यत ।
अदृश्यस्सर्वभूतानां कालाकाङ्क्षी चचार ह ॥ २२

प्रनष्टे तु ततश्शक्रे शची शोकसमन्विता ।
हा शक्रेति तदा देवी विललाप सुदुःखिता ॥ २३

इन्द्राणी—

यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृकता मेऽस्तु सत्यं यद्यास्ति वा मयि ॥ २४

पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे ।
देवीं रात्रिं नमस्यामि सिद्ध्यतां मे मनोरथः ॥ २५

शल्यः—

प्रयता च निशां देवीम् उपातिष्ठत तत्र सा ।
पतिव्रतात्वात् सत्येन सोपश्रुतिमथाकरोत् ॥ २६

यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।
इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यताम् ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये २७ श्लोकाः]

———

## ॥ चतुर्दशोऽध्यायः ॥

स्तुत्या प्रत्यक्षीभूतया उपश्रुतिदेव्या सह पद्मनालभेदनेन तद्विवरं गतया शच्या तत्रस्थेन्द्रदर्शनम् ॥ १ ॥ तथा इन्द्रं स्तुत्वा नहुषवृत्तान्तकथनम् ॥ २ ॥

---

शल्यः—

अथैनां रूपिणी साध्वीम् उपातिष्ठदुपश्रुतिः ॥ ॥

तां वयोरूपसम्पन्नां दृष्ट्वा देवीमुपस्थिताम् ।

[1]इन्द्राणी सम्प्रहृष्टात्मा सम्पूज्यैनामथाब्रवीत् ॥ १॥

इन्द्राणी—

इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ २

उपश्रुतिः—

उपश्रुतिरहं देवि तवान्तिकमुपागता ।

दर्शनं चैव सम्प्राप्ता तव सत्येन भामिनि ॥ ३

पतिव्रता च युक्ता च यमेन नियमेन च ।

दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम् ॥ ४

क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ॥ ४॥

शल्यः—

ततस्तां प्रस्थितां देवीं इन्द्राणी सा समन्वगात् ॥ ५

---

1. घ—इतः सार्धश्लोको न दृश्यते ।

तैर्वारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः ।
हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ॥ ६
समुद्रं च समासाद्य बहुयोजनविस्तृतम् ।
आससाद महाद्वीपं नानाद्रुमलतायुतम् ॥ ७
तत्रापश्यत् सरो दिव्यं नानाशकुनिभिर्वृतम् ।
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ॥ ८
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत ।
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ॥ ९
पद्मस्य भित्त्वा नालं च विवेश सहिता तया ।
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ॥ १०
तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम् ।
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ ११
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः ।
स्तूयमानस्ततो देवश् शचीमाह पुरन्दरः ॥ १२

इन्द्रः—

किमर्थमासि सम्प्राप्ता विज्ञातश्च कथं त्वहम् ॥ १२॥

शल्यः—

ततस्सा कथयामास नहुषस्य विचेष्टितम् ॥ १३

इन्द्राणी—

इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्यसमन्वितः ।
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो ॥ १४

उपतिष्ठेति स क्रूरः कालं च कृतवान् मम ।
यदि न त्रास्यसि विभो करिष्यति स मां वशे ॥ १५

एतेन चाहं सम्प्राप्ता नूनं शक्र तवान्तिकम् ।
जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ॥ १६

प्रकाशयात्मनाऽऽत्मानं दैत्यदानवसूदन ।
तेजस्समाप्नुहि विभो देवराज्यं प्रशाधि च ॥ १७

यथैव च महाराज त्वया वृत्रो निषूदितः ॥ १७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ४९ ॥ सेनोद्योगपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये १७॥ श्लोकाः ]

---

## ॥ पञ्चदशोऽध्यायः ॥

इन्द्रबोधितशचीवचनात् नहुषेण अगस्त्यादिसप्तर्षीणां स्वशिबिकायां वाहकतया योजनम् ॥ १ ॥ शचीप्रार्थनया बृहस्पतिना होमेन सन्तोषिताग्नेरिन्द्रान्वेषणाय प्रेषणम् ॥ २ ॥ अग्निना बृहस्पतिं प्रति जलवर्जं सर्वत्रान्वेषणेऽपीन्द्रानधिगमकथनम् ॥ ३ ॥

---

शल्यः—

एवमुक्तस्स भगवाञ् शच्या तां पुनरब्रवीत् ॥ ॥-

इन्द्रः—

विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ।

विवर्धितश्च ऋषिभिर् हव्यैः कव्यैश्च भामिनि ॥ १॥

नीतिमत्र विधास्यामि देवि तां कर्तुमर्हसि ।
[1]गुह्यमेतत् त्वया कार्यं नाख्यातव्यं शुचिस्मिते ॥ २॥

गत्वा नहुषमेकान्ते ब्रवीहि च सुमध्यमे ॥ ३

ऋषियानेन दिव्येन मामुपैहि जगत्पते ।
एवं तव वशे प्रीता भविष्यामीति तं वद ॥ ४

शल्यः—

इत्युक्ता देवराजेन पत्या सा कमलेक्षणा ।
एवमस्त्वित्यथोक्त्वा तु जगाम नहुषं प्रति ॥ ५

नहुषस्तां ततो दृष्ट्वा सास्मितो वाक्यमब्रवीत् ॥ ५॥

नहुषः—

स्वागतं ते वरारोहे किं करोमि शुचिस्मिते ॥ ६

भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि ।
तव कल्याणि यत् कार्यं तत् करिष्ये सुमध्यमे ॥ ७

न च व्रीडा त्वया कार्या सुश्रोणि मयि विश्वसेः ।
सत्येन वै शपे देवि करिष्ये वचनं तव ॥ ८

इन्द्राणी—

यो मे कृतस्त्वया कालस् तमाकाङ्क्षे जगत्पते ।
ततस्त्वमेव भर्ता मे भविष्यसि सुराधिप ॥ ९

---

1. अ-क—गुर्वीत्वेतत् त्वया कार्यं ।

कार्यं च हृदि मे यत्तद् देवराजावधारय ।
वक्ष्यामि यदि मे राजन् प्रियमेतत् करिष्यसि ॥ १०

वाक्यं प्रणयसंयुक्तं ततस्त्वं कर्तुमर्हसि ॥ १०॥

इन्द्रस्य वाजिनो वाहा हस्तिनोऽथ रथास्तथा ।
इच्छाम्यहमथापूर्वं वाहनं ते सुराधिप ॥ ११॥

यन्न विष्णोर्न रुद्रस्य नासुराणां न रक्षसाम् ।
वहन्तु त्वां महाभागा ऋषयस्सङ्गता विभो ॥ १२॥

सर्वे शिबिकया राजन्नेतद्धि मम रोचते ॥ १३

नासुरेषु न देवेषु तुल्यो भवितुमर्हसि ।
सर्वेषां तेज आधत्स्व स्वेन वीर्येण दर्शनात् ॥ १४

न ते प्रमुखतस्स्थातुं कश्चिच्छक्नोति वीर्यवान् ॥ १४॥

शल्यः—

एवमुक्तश्च नहुषः प्राहृष्यत तदा किल ।
उवाच वचनं चापि सुरेन्द्रस्तामनिन्दिताम् ॥ १५॥

नहुषः—

अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
दृढं मे रुचिरं देवि त्वद्वशोऽस्मि वरानने ॥ १६॥

न ह्यल्पवीर्यो भवति यो वाहान् कुरुते मुनीन् ॥ १७

अहं तपस्वी बलवान् भूतभव्यभवत्प्रभुः ।

यि क्रुद्धे जगन्न स्यान्मयि सर्वं प्रतिष्ठितम् ॥ १८

देवदानवगन्धर्वाः किन्नरोरगराक्षसाः ।
न मे क्रुद्धस्य पर्याप्तास् सर्वलोकाश्शुचिस्मिते ॥ १९
चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहम् ॥ १९॥
[1]अहमिन्द्रोऽस्मि देवानां लोकानां च महेश्वरः ।
मयि हव्यं च कव्यं च लोकाश्चैव सनातनाः ॥ २०॥
तस्मात्ते वचनं देवि करिष्यामि न संशयः ॥ २१
सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा ।
पश्य माहात्म्यमस्माकम् ऋद्धिं च वरवर्णिनि ॥ २२
[2]हतौजसो मया सर्वे देवगन्धर्वदानवाः ।
यद्यस्य तेजः पश्यामि तस्य तेजो हराम्यहम् ॥ २३

शल्यः—

एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।
[3]अथ सञ्चिन्त्य नहुषो बलवीर्येण भारत ॥ २४
विसृज्य सुप्रतीकं च नागमैरावतं तथा ।
हंसयुक्तं विमानं च हरियुक्तं तथा रथम् ॥ २५
स तु दर्पेण महता परिभूय महामुनीन् ।
विमाने योजयित्वा स ऋषीन् नियममास्थितान् ॥ २६

1. अ-क-मा—नास्त्ययं श्लोकः। 2. अ-क-मा—नास्त्ययं श्लोकः।
3. मा—श्लोकोऽयं नास्ति।

अब्रह्मण्यो बलोपेतो मत्तो वरमदेन च ।
कामवृत्तस्स दुष्टात्मा वाहयामास तानृषीन् ॥ २७

नहुषेण विसृष्टा सा बृहस्पतिमथाब्रवीत् ॥ २७॥

इन्द्राणी—

समयोऽल्पावशेषो मे नहुषेण हि यः कृतः ।
शक्रं मृगय शीघ्रं तं भक्तायाः कुरु मे दयाम् ॥ २८॥

शल्यः—

बाढमित्येव भगवान् बृहस्पतिरुवाच ताम् ॥ २९

बृहस्पतिः—

न भेतव्यं त्वया देवि नहुषादुष्टचेतसः ।
न ह्येष स्थास्यति चिरं गत एष नराधमः ॥ ३०

अधर्मज्ञो महर्षीणां वाहनाच्च हतश्शुभे ।
इष्टिं चाहं करिष्यामि विनाशायास्य दुर्मतेः ॥ ३१

शक्रं चाधिगमिष्यामि मा भैस्त्वं भद्रमस्तु ते ॥ ३१॥

शल्यः—

ततः प्रज्वाल्य विधिवज् जुहाव सघृतं हविः ।
बृहस्पतिर्महातेजा देवराजोपलब्धये ॥ ३२॥

तस्मात् स भगवान् देवस् स्वयमेव हुताशनः ।
स्त्रीवेषमद्भुतं कृत्वा सहसाऽन्तरधीयत ॥ ३३॥

दिशः प्रदिशश्चैव पर्वतांश्च वनानि च ।
पृथिवीं चान्तरिक्षं च विचित्याथ मनोगतिः ॥ ३४॥

निमेषान्तरमात्रेण बृहस्पतिमुपागमत् ॥ ३५

अग्निः—

बृहस्पते न पश्यामि देवराजमहं क्वचित् ।
आपश्शेषास्सदा चापः प्रवेष्टुं नोत्सहाम्यहम् ॥ ३६

न मे तत्र गतिर्ब्रह्मन् किमन्यत् करवाणि ते ॥ ३६॥

शल्यः—

तमब्रवीद्देवगुरुर् अपो विश महाद्युते ॥ ३७

अग्निः—

नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति ।
शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते ॥ ३८

अद्भ्योऽग्निर्ब्रह्मणः क्षत्रम् अश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजस् स्वासु योनिषु शाम्यति ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ॥ षोडशोऽध्यायः ॥

बृहस्पतिना ब्राह्ममन्त्रसंवर्धितेनाग्निना पद्मनालस्थेन्द्रं दृष्ट्वा बृहस्पतये तन्निवेदनम् ॥ १ ॥ बृहस्पतिना तत्र गत्वा इन्द्रे स्तूयमाने कुबेरादीनां तत्रागमनम् ॥ २ ॥ इन्द्रेण नहुषजये साहाय्यायाग्नेर्भागदानपूर्वकं कुबेरादीनां तत्तद्दिगाधिपत्येऽभिषेचनम् ॥ ३ ॥

बृहस्पतिः—

त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तस्सर्वभूतानां गूढश्चरासि साक्षिवत् ॥ १

त्वामाहुरेकं कवयस् त्वामाहुस्त्रिविधं पुनः ।
त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन ॥ २

कृत्वा तुभ्यं नमो विप्रास् स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिस् सुतैरपि च शाश्वतीम् ॥ ३

त्वमेवाग्ने हव्यवाहस् त्वमेव परमं हविः ।
यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे ॥ ४

सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह
प्राप्ते काले पचसि पुनस्समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूतिस्
त्वमेव [illegible] पुनः प्रतिष्ठा ॥ ५

त्वामग्ने जल[illegible]तश्च मनीषिणः ।

[illegible] यो वै लोका[illegible]

[1]दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य [2]रश्मयः ॥　६

त्वय्यापो निहितास्सर्वास् त्वयि सर्वमिदं जगत् ।
न तेऽस्त्यविदितं किञ्चित् त्रिषु लोकेषु पावक ॥　७

स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः ।
अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैस्सनातनैः ॥　८

शल्यः—

एवं स्तुतो हव्यवाट् स भगवान् कविरुत्तमः ।
बृहस्पतिमथोवाच प्रीतिमान् वाक्यमुत्तमम् ॥　९

अग्निः—

दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते ॥　९॥

शल्यः—

प्रविश्य [illegible]पस्ततो वह्निस् ससमुद्रास्सपल्वलाः ।
आजगाम [illegible]सरस्तच्च गूढो यत्र शतक्रतुः ॥　१०॥

अथ तत्रापि प[illegible] देवेशानि विचिन्वन् भरतर्षभ ।
अन्वपश्यत् स देवेशं तमेद्रं बिसमध्यगतं तदा ॥　११॥

आगत्य च ततस्तूर्णं तमेद्रं बिसमध्यगतं तदा ॥

अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् ॥
गत्वा देवर्षिगन्धर्वैस् सहितोऽथ बृहस्पतिः ।　१२॥

पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥　१३॥

---

1. अ—वहन्ति. 2. अ-क—हेतयः ग—[illegible] [illegible]ग—हायनाः

बृहस्पतिः—

महासुरो हतश्शक्र नमुचिर्दारुणस्त्वया ।
शम्बरश्च बलश्चैव तथोभौ घोरदर्शनौ ॥ १४॥

शतक्रतो विवर्धस्व सर्वाञ्शत्रून् निषूदय ।
उत्तिष्ठ शक्र सम्पश्य देवर्षींश्च समागतान् ॥ १५॥

महेन्द्र दानवान् हत्वा लोकास्त्रातास्त्वया विभो ॥ १६

अपां फेनं समासाद्य विष्णुतेजोपबृंहितम् ।
त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥ १७

त्वं सर्वभूतेषु शरण्य ईड्यस्
त्वया समं विद्यते नेह भूतम् ।
त्वया धार्यन्ते सर्वभूतानि शक्र
त्वं देवानां महिमानं चकर्थ ॥ १८

पाहि सर्वानिमाँल्लोकान् महेन्द्र बलमाप्नुहि ॥ १८॥

शल्यः—

एवं संस्तूयमानश्च सोऽवर्धत शनैश्शनैः ।
स्वं चैव वपुरास्थाय बभूव स बलान्वितः ॥ १९॥

अब्रवीच्च गुरुं देवो बृहस्पतिमवस्थितम् ॥ २०

इन्द्रः—

किं कार्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः ।
वृत्रश्च सुमहाकायो [1]ग्रस्तुँल्लोकानियेष यः ॥ २१

1. अ-क-ग—यो वै लोकाननाशयत् ।

बृहस्पतिः—

मानुषो नहुषो राजा देवर्षिगणतेजसा ।

देवराज्यमनुप्राप्तस् सर्वान् नो बाधते भृशम् ॥ २२

इन्द्रः—

कथं नु नहुषो राज्यं देवानां प्राप दुर्लभम् ।

तपसा केन वा युक्तः किंवीर्यो वा बृहस्पते ॥ २३

[1]तत् सर्वं कथयध्वं मे यथेन्द्रत्वमुपेयिवान् ॥ २३॥

बृहस्पतिः—

[2]त्वयि प्रनष्टे देवेशे विश्वं प्रव्यथितं जगत् ।

परस्परभयोद्विग्नं बभूवार्तमराजकम् ॥ २४॥

ततो देवैस्सगन्धर्वैस् सर्षिसङ्घैस्सपावकैः ।

मानुषो नहुषो राजा देवराज्येऽभिषेचितः ॥ २५॥

देवा भीताश्शक्र न कामयन्ते

त्वया त्यक्तं महदैन्द्रं पदं तत् ॥ २६

[3]तदा देवाः पितरोऽथर्षयश्च

गन्धर्वमुख्याश्च समेत्य सर्वे ।

गत्वाऽब्रुवन् नहुषं शक्र तत्र

त्वं नो राजा भुवनस्य गोप्ता ॥ २७

तानब्रवीन्नहुषो नास्मि शक्त

आप्यायध्वं तपसा तेजसा माम् ॥ २७॥

---

1. अ-क-म-मा—नास्तीदमर्धम् ।

2. अ-क—श्लोकद्वयं न दृश्यते ।

3. ग-घ-ङ-म-मा—ततो ।

एवञ्चोक्तैर्वर्धितश्चापि देवै-
राजाऽभवन्नहुषो घोरवीर्यः ।
[1]त्रैलोक्ये च प्राप्य राज्यं महर्षीन्
कृत्वा वाहान् याति लोकान् दुरात्मा ॥ २८॥

तेजोहरं दृष्टिविषं सुघोरं
मा त्वं पश्येर्नहुषं वै कदाचित् ।
देवाश्च सर्वे नहुषं भृशार्ता
न पश्यन्ते गूढरूपाश्चरन्तः ॥ २९॥

शल्यः—

एवं वदत्यङ्गिरसां वरिष्ठे
बृहस्पतौ लोकपालः कुबेरः ।
वैवस्वतश्चैव यमः पुराणो
देवश्च सोमो वरुणश्चाजगाम ॥ ३०॥

ते वै समागम्य महेन्द्रमूचुर्
दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः ।
दिष्ट्या त्वां कुशलिनमक्षतं च
पश्यामो वै निहतारिं च शक्र ॥ ३१॥

[2]स तान् यथावच्च हि लोकपालान्
समेत्य वै प्रीतमना महेन्द्रः ।

---

1. ख—नास्तीदमर्धम्।
2. ङ-म-मा—स तान् यथावत् प्रतिभाष्य शक्रस्
सञ्चोदयन् नहुषस्यान्तरायम्। [पाठान्तरम्]

[1]उवाच चैतान् प्रतिभाष्य शक्रस्
सञ्चोदयिष्यन् नहुषस्यान्तरेण ॥ ३२॥

इन्द्रः—
राजा देवानां नहुषो घोररूपस्
तत्र साह्यं दीयतां मे भवद्भिः ॥ ३३

शल्यः—
ते चाब्रुवन् नहुषो घोररूपो
दृष्टीविषस्तस्य बिभीम शक्र ।
त्वं चेद्राजा नहुषं पराजयेस्
ततो वयं भागमर्हाम शक्र ॥ ३४

इन्द्रोऽब्रवीद् भवतु भवानपांपतिर्
यमः कुबेरश्च मयाऽभिषेकम् ।
[2]सम्प्राप्नुवन्त्वद्य सहैव ते रिपुं
जयाम तं नहुषं घोरदृष्टिम् ॥ ३५

ततश्शक्रं ज्वलनोऽप्याह भागं
प्रयच्छ मह्यं तव साह्यं करिष्ये ॥ ३५॥

तमाह शक्रो भविताऽग्ने तवापि
चेन्द्राग्न्योर्वै भाग एको महाक्रतौ ॥ ३६

---

1. ङ-म—इदमर्धं नास्ति ।
2. ख-ग-घ-ङ-म-मा—अवाप्नुतं सहिता देवताभी
रिपुं जयाम नहुषं घोरदृष्टिम् ।
ततस्त्वग्निः प्राब्रवीदिन्द्र भागं
प्रयच्छ मह्यं तव साह्यं करिष्ये ॥
[पाठान्तरम्]

एवं सञ्चिन्त्य भगवान् महेन्द्रः पाकशासनः ।
कुबेरं सर्वयक्षाणां धनानां च प्रभुं तथा ॥ ३७

वैवस्वतं पितॄणां च वरुणं चाप्यपां तथा ।
आधिपत्यं ददौ शक्रस् सत्कृत्य वरदस्तथा ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ४९ ॥ सेनोद्योगपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ सप्तदशोऽध्यायः ॥

लोकपालैः सह नहुषनिषूदनोपायं मन्त्रयन्तमिन्द्रमेत्य अगस्त्येन नहुषस्य देवराज्यात् परिभ्रंशनिवेदनम् ॥ १ ॥

---

शल्यः—

अथ सञ्चिन्तयानस्य देवराजस्य धीमतः ।
नहुषस्य वधोपायं लोकपालैस्सदैवतैः ॥ १

तपस्वी तत्र भगवान् अगस्त्यः प्रत्यदृश्यत ॥ १॥

सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्धते भवान् ।
विश्वरूपविनाशेन वृत्रासुरवधेन च ॥ २॥

[1]दिष्ट्या हतारिं पश्यामि देवराजं शतक्रतुम् ।
दिष्ट्या धर्मस्थितो लोके दिष्ट्या लोकाः प्रतिष्ठिताः ॥ ३॥
दिष्ट्या पश्यामि देवेन्द्रं दिष्ट्या लोकान् पुनर्नवान् ॥ ४
दिष्ट्याऽद्य नहुषो भ्रष्टो देवराज्यात् पुरन्दर ।
दिष्ट्या भवन्तं पश्यामि हतारिं बलसूदन ॥ ५

इन्द्रः—
स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात् तव ।
पाद्यमाचमनीयं च गामर्घ्यं च प्रतीच्छ मे ॥ ६

शल्यः—
पूजितं चोपविष्टं तम् आसने मुनिसत्तमम् ।
पर्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ॥ ७
एतदिच्छामि भगवन् कथ्यमानं द्विजोत्तम ।
परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ॥ ८

अगस्त्यः—
शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् ।
स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलवत्तरः ॥ ९
श्रमार्ताश्च वहन्तस्तं नहुषं पापकारिणम् ।
देवर्षयो महाभागास् तथा ब्रह्मर्षयोऽमलाः ॥ १०
पप्रच्छुर्नहुषं देव संशयं जयतां वरम् ॥ १०॥

ऋषयः—
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ।

1. अ-क—कोशयोरर्धद्वयमिदं न दृश्यते ।

एते प्रमाणं भवत उताहो नेति वासव ॥　११॥

अगस्त्यः—

नहुषो नेति तानाह तमसा मूढचेतनः ॥　१२

ऋषयः—

अधर्मे सम्प्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥　१३

अगस्त्यः--

ततो विवदमानस्स मुनिभिस्सह वासव ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥　१४

तेनाभूद्धततेजाश्च निश्श्रीकश्च शचीपते ।
तत[1]स्तमहमाविग्नम् अवोचं भयपीडितम् ॥　१५

यस्मात् पूर्वैः कृतं मार्गं ब्रह्मर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यन्मे मूर्ध्न्यस्पृशः पदा ॥　१६

यच्चापि त्वमृषीन् मूढ ब्रह्मकल्पान् दुरासदान् ।
वाहान् कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥　१७

ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतले ॥　१७॥

दशवर्षसहस्राणि सर्परूपधरो महान् ।
विचरिष्यसि पूर्णेषु पुनस्स्वर्गमवाप्स्यसि ॥　१८॥

---

1. अ-क-म-मा—स्तं सहसा

[1]दृष्ट्वा युधिष्ठिरं नाम तव वंशसमुद्भवम् ।
निहतो ब्रह्मशापेन प्रपद्यस्व त्रिविष्टपम् ॥ १९॥

एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम ।
दिष्ट्या वर्धामहे शक्र हतो ब्राह्मणकण्टकः ॥ २०॥

त्रिविष्टपं प्रपद्यस्व पाहि लोकान् शचीपते ।
जितेन्द्रियो जितामित्रस् स्तूयमानो महर्षिभिः ॥ २१॥

शल्यः—

ततो देवा भृशं तुष्टा महर्षिगणसंवृताः ।
पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा ॥ २२॥

गन्धर्वा [2]राजकन्याश्च सर्वे चाप्सरसां गणाः ।
सरांसि सरितश्शैलास् सागराश्च विशाम्पते ॥ २३॥

उपागम्याब्रुवन् सर्वे दिष्ट्या वर्धसि शत्रुहन् ।
हतश्च नहुषः पापो दिष्ट्याऽगस्त्येन धीमता ॥ २४॥

दिष्ट्या पापसमाचारः कृतस्सर्पो महीतले ॥ २५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

---

1. मा—श्लोकोऽयं नोपलभ्यते ।
2. ग-घ-ङ—:किन्नराश्चैव क—देवकन्याश्च

## ॥ अष्टादशोऽध्यायः ॥

इन्द्रेण पुनर्देवलोकमेत्य त्रैलोक्यराज्यपालनम् ॥ १ ॥ शल्येनेन्द्रवृत्तान्तकथनपूर्वकं युधिष्ठिरादीनाश्वास्य पुनर्दुर्योधनसमीपगमनम् ॥ २ ॥

शल्यः—

ततश्शक्रस्स्तूयमानो गन्धर्वाप्सरसां गणैः ।
[1]ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥ १

पावकस्सुमहातेजा महर्षिश्च बृहस्पतिः ।
यमश्च वरुणश्चैव कुबेरश्च धनेश्वरः ॥ २

सर्वैर्देवैः परिवृतश्श शक्रो वृत्रनिषूदनः ।
[2]गन्धर्वैरप्सरोभिश्च प्रयातस्त्रिदिवं प्रभुः ॥ ३

स समेत्य महेन्द्राण्या देवराजश्शतक्रतुः ।
मुदा परमया युक्तः पालयामास देवराट् ॥ ४

ततस्स भगवांस्तत्र अङ्गिरास्समदृश्यत ।
अथर्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत् ॥ ५

ततस्तु भगवानिन्द्रः प्रहृष्टस्समपद्यत ।
वरं च प्रददौ तस्मा अथर्वाङ्गिरसे तदा ॥ ६

इन्द्रः—

अथर्वाङ्गिर[3]सो नाम वेदेऽस्मिन् वै भविष्यति ।

---

1. अ-क—ऐरावणं । 2. ग-घ-ङ—सर्वाभि ।
3. घ-म-मा—सं नाम त्वस्मिन् वेदे भविष्यति ।

उदाहरणमेताद्धि यज्ञभागं च लप्स्यसे ॥ ७

शल्यः—

एवं सम्पूज्य भगवान् अथर्वाङ्गिरसं तथा ।
व्यसर्जयन्महाराज देवराजश्शतक्रतुः ॥ ८

सम्पूज्य सर्वांस्त्रिदशान् ऋषींश्चापि तपोधनान् ।
इन्द्रः प्रमुदितो राजन् धर्मेणापालयत् प्रजाः ॥ ९

एवं दुःखमनुप्राप्तम् इन्द्रेण सह भार्यया ।
अज्ञातवासश्च कृतश् शत्रूणां वधकाङ्क्षया ॥ १०

नात्र मन्युस्त्वया कार्यो यत् क्लिष्टोऽसि महावने ।
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ ११

एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत ।
वृत्रं हत्वा यथा प्राप्तश् शक्रः कौरवनन्दन ॥ १२

दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः ।
अगस्त्यशापाभिहतो विनष्टश्शाश्वतीस्समाः ॥ १३

एवं तव दुरात्मानश् शत्रवश्शत्रुसूदन ।
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः ॥ १४

ततस्सागरपर्यन्तां भोक्ष्यसे पृथिवीमिमाम् ।
भ्रातृभिस्सहितो वीर द्रौपद्या च सहानया ॥ १५

उपाख्यानमिदं शक्रविजयं वेदसम्मितम् ।
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ॥ १६

तस्मात् संश्रावयामि त्वां विजयं जयतां वर ।
संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर ॥ १७

क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनाम् ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १८

आख्यानमिन्द्रविजयं य इदं नियतः पठेत् ।
धूतपाप्मा जितस्वर्गः परत्रेह च मोदते ॥ १९

न चारिजं भयं तस्य नापुत्रो वा भवेन्नरः ।
नापदं प्राप्नुयात् काञ्चिद् दीर्घमायुश्च विन्दति ॥ २०

सर्वत्र जयमाप्नोति न कदाचित् पराजयम् ॥ २०॥

वैशम्पायनः—

एवमाश्वासितो राजा शल्येन भरतर्षभ ।
पूजयामास विधिवच् छल्यं धर्मभृतां वरः ॥ २१॥

श्रुत्वा तु शल्यवचनं कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युवाच महाबाहुर् मद्रराजमिदं वचः ॥ २२॥

युधिष्ठिरः—

भवान् कर्णस्य सारथ्यं करिष्यति न संशयः ।
तव तेजोवधः कार्यः कर्णस्यार्जुनसंस्तवे ॥ २३॥

शल्यः—

एवमेतत् करिष्यामि यथा मां सम्प्रभाषसे ।

यच्चान्यदपि शक्ष्यामि तत् करिष्याम्यहं तव ॥ २४॥

वैशम्पायनः—

ततस्त्वामन्त्र्य कौन्तेयान् शल्यो मद्राधिपस्तदा ।
जगाम सबलश्श्रीमान् दुर्योधनमरिन्दमः ॥ २५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

## ॥ एकोनविंशोऽध्यायः ॥

सात्यकिप्रमुखानां राज्ञां स्वस्वसेनानयनपूर्वकं युधिष्ठिरं प्रत्यागमनम् ॥ १ ॥ भगदत्तादीनां राज्ञां दुर्योधनसाहाय्यकरणाय आगमनम् ॥ २ ॥

---

वैशम्पायनः—

युयुधानस्ततो वीरस् सात्वतानां महारथः ।
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ १

तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणा वीराश् शोभयाञ्चक्रिरे बलम् ॥ २

परश्वधैर्भिण्डिवालैश् शूलतोमरमुद्गरैः ।
परिघैर्यष्टिभिः प्रासैः करवालैश्च निर्मलैः ॥ ३

खड्गकार्मुकनिर्यूहैश् शरैश्च विविधैरपि ।
तैलधौतैः प्रकाशद्भिस् तदशोभत वै बलम् ॥ ४

तस्य मेघप्रकाशस्य शस्त्रैस्तैश्शोभितस्य च ।
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ५

अक्षौहिणी हि सा सेना तदा यौधिष्ठिरं बलम् ।
प्रविश्यान्तर्दधे राजन् सागरं कुनदी यथा ॥ ६

तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्छत् पाण्डवानमितौजसः ॥ ७

मागधश्च जयत्सेनो जारासन्धिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ८

तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः ।
वृतो बहुविधैर्योधैर् युधिष्ठिरमुपागमत् ॥ ९

तथा माहिष्मतीवासो नीलो नीलायुधैस्सह ।
महीपालो महावीर्यो दक्षिणापथवासिभिः ॥ १०

तस्य सैन्यमतीवासीत् तस्मिन् बलसमागमे ।
प्रेक्षणीयतरं राजन् सुवेषं बलवत् तदा ॥ ११

[1]केकयाश्च नरव्याघ्रास् सोदराः पञ्च पार्थिवाः ।
संहर्षयन्तः कौन्तेयान् अक्षौहिण्या समागताः ॥ १२

---

1. म-मा—अयं श्लोको न दृश्यते ।

द्रुपदस्याप्यभूत् सेना नानादेशसमागतैः ।
शोभिता पुरुषैश्शूरैः पुत्रैश्च सुमहारथैः ॥ १३

तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैस् सहितः पाण्डवानयात् ॥ १४

इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैता विविधध्वजसङ्कुलाः ॥ १५

युयुत्समानाः कुरुभिः पाण्डवान् समहर्षयन् ॥ १५॥

तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन् ।
भगदत्तो महीपालस् सेनामक्षौहिणीं ददौ ॥ १६॥

तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ।
बभौ बलमनाधृष्यं कर्णिकारवनं यथा ॥ १७॥

तथा भूरिश्रवाश्शूरश् शल्यश्च कुरुनन्दन ।
दुर्योधनमुपायातावक्षौहिण्या पृथक् पृथक् ॥ १८॥

कृतवर्मा च हार्दिक्यो भोजान्धककुकुरैस्सह ।
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् ॥ १९॥

तस्य तैः पुरुषव्याघ्रैर् वनमालाधरैर्बलम् ।
अशोभत यथा मत्तैर् वनं प्रक्रीडितैर्गजैः ॥ २०॥

जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ।
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् ॥ २१॥

तेषामक्षौहिणी सेना बहुला विबभौ तदा ।

विधूयमानो वातेन बहुरूप इवाम्बुदः ॥ २२॥

सुदक्षिणश्च काम्भोजो यवनैश्च शकैस्तथा ।
उपाजगाम कौरव्यम् अक्षौहिण्या विशाम्पते ॥ २३॥

तस्य सेनासमावायश् शलभानामिवाबभौ ।
स च सम्प्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ॥ २४॥

आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ।
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ॥ २५॥

इतस्ततस्तु सर्वेषां भूमिपानां महात्मनाम् ।
तिस्रोऽन्यास्समवर्तन्त वाहिन्यो भरतर्षभ ॥ २६॥

एवमेकादशावृत्तास् सेना दुर्योधनस्य ताः ।
युयुत्समानाः कौन्तेयान् नानाध्वजसमाकुलाः ॥ २७॥

[1]न हास्तिनपुरे राजन्नवकाशोऽभवत् तदा ।
राज्ञां स्वबलमुख्यानां प्राधान्येनापि भारत ॥ २८॥

ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम् ।
तथा रोहितकारण्यं मरुभूमिश्च केवला ॥ २९॥

अहिच्छत्रं कालकूटं गङ्गातीरं च भारत ।
वरणावाटधानं च यामुनश्चैव पर्वतः ॥ ३०॥

एष देशस्सुविस्तीर्णः प्रभूतधनधान्यवान् ।

1. अ-क-ग—नास्त्ययं श्लोकः ।

बभूव कौरवेयाणां बलेन सुसमाकुलम् ॥ ३१॥

तत्र सैन्यं तथायुक्तं ददर्श स पुरोहितः ।

यस्स पाञ्चालराजेन प्रेषितः कौरवान् प्रति ॥ ३२॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ४९ ॥ सेनोद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

[ समाप्तं च सेनोद्योगपर्व ]

---

## ॥ विंशोऽध्यायः ॥

(सञ्जययानपर्व)

हास्तिनपुरं गतेन द्रुपदपुरोहितेन राज्ञां सभामध्ये द्रुपदवचनकथनम् ॥ १ ॥

---

**वैशम्पायनः—**

स च कौरव्यमासाद्य द्रुपदस्य पुरोहितः ।

सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च ॥ १

सर्वं कौशल्यमुक्त्वाऽऽदौ पृष्ट्वा चैवमनामयम् ।

सर्वसैन्यप्रणेतॄणां मध्ये वाक्यमुवाच ह ॥ २

**पुरोहितः—**

सर्वैर्भवद्भिर्विदितो राजधर्मस्सनातनः ।

वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ॥ ३

धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ।
तयोस्समानं द्रविणं पैतृकं नात्र संशयः ॥ ४

धृतराष्ट्रस्य ये पुत्रास् तैः प्राप्तं पैतृकं धनम् ।
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ॥ ५

एवं गते पाण्डवेयैर् विदितं वः पुरा यथा ।
न प्राप्तं पैतृकं द्रव्यं धार्तराष्ट्रेण संवृतम् ॥ ६

प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।
[1]शेषवन्तो न शकिता गमितुं यमसादनम् ॥ ७

पुनश्च वर्धितं राज्यं स्वबलेन महात्मभिः ।
छद्मनाऽपहृतं क्षुद्रैर् धार्तराष्ट्रैस्ससौबलैः ॥ ८

तदप्यनुमतं कर्म यथायुक्तमनेन वै ।
विवासिता महारण्ये वर्षाणीह त्रयोदश ॥ ९

सभायां क्लेशितैर्वीरैस् सहभार्यैस्तथा भृशम् ।
अरण्ये विविधाः क्लेशास् सम्प्राप्तास्तैस्सुदारुणाः ॥ १०

तथा विराटनगरे योन्यन्तरगतैरिव ।
प्राप्तः परमसंक्लेशो यथा पापैर्महात्मभिः ॥ ११

ते सर्वे पृष्ठतः कृत्वा तत् सर्वं पूर्वकिल्बिषम् ।

1. म—कोशे इदमर्धं नास्ति ।

[1]सामैव कुरुभिस्सार्धम् इच्छन्ति कुरुपुङ्गवाः ॥ १२

तेषां च वृत्तमाज्ञाय वृत्तं दुर्योधनस्य च ।
अनुनेतुमिहार्हन्ति धृतराष्ट्रं सुहृज्जनाः ॥ १३

न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिस्सह ।
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवास्स्वकम् ॥ १४

यश्चापि धार्तराष्ट्रस्य हेतुस्स्याद्विग्रहं प्रति ।
स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते ॥ १५

अक्षौहिण्यश्च सप्तैव [2]धर्मराजस्य सङ्गताः ।
युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् ॥ १६

अपरे पुरुषव्याघ्रास् सहस्राक्षौहिणीसमाः ।
सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ ॥ १७

एकादशैताः पृतना एकतस्ते समागताः ।
एकतश्च महाबाहुर् बहुरूपो धनञ्जयः ॥ १८

यथा किरीटी सर्वाभ्यस् सेनाभ्योऽप्यतिरिच्यते ।
एवमेव महाबाहुर् वासुदेवो महाद्युतिः ॥ १९

बहुलत्वं च सेनानां विक्रमं च किरीटिनः ।
बुद्धिमत्त्वं च कृष्णस्य बुद्ध्वा युध्येत को नरः ॥ २०

---

1. ग-घ-ङ—साम्नैव कुरुभिस्सन्धिम्
2. अ-क—धर्मपुत्रेण ।

ते भवन्तो यथाधर्मं यथानामयमेव च ।
[1]प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ २१

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि विंशोऽध्यायः ॥ २० ॥

॥ ५० ॥ सञ्जययानपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥

भीष्मेण पुरोहितवाक्येऽनुमोदिते कर्णेन तदाक्षेपपूर्वकं सङ्केतकालस्य सशेषतया पुनर्वनवासादिना तत्समापने राज्यदानोक्तिः ॥ १ ॥ भीष्मेण कर्णाधिक्षेपः ॥२॥ धृतराष्ट्रेण पाण्डवान् प्रति स्वेन सञ्जयप्रेषणकथनपूर्वकं पुरोहितस्य प्रतियापनम् ॥ ३ ॥

---

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः ।
सम्पूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ १

भीष्मः—

दिष्ट्या कुशलिनस्सर्वे सह दामोदरेण ते ।
दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः ॥ २

दिष्ट्या च सन्धिकामास्ते भ्रातरः कुरुनन्दनाः ।
दिष्ट्या न युद्धमनसः पाण्डवास्सह बान्धवैः ॥ ३

---

1. म-मा—पाण्डवानां प्रयच्छन्तु धर्मेणैवं नरोत्तम । [पाठान्तरम्]

भवता सत्यमुक्तं तु सर्वमेतन्न संशयः ।
अतितीक्ष्णं तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ॥ ४

असंशयं क्लेशितास्ते वने चैवं च पाण्डवाः ।
प्राप्ताश्च धर्मतस्सर्वं पितुर्धनमसंशयम् ॥ ५

किरीटी बलवाञ्छूरः कृतास्त्रश्च महाद्युतिः ।
को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयम् ॥ ६

अपि वज्रधरस्साक्षात् किमुतान्ये धनुर्भृतः ।
त्रयाणामपि लोकानां समर्थ इति मे मतिः ॥ ७

**वैशम्पायनः—**

भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना ।
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ ८

**कर्णः—**

न तन्न विदितं ब्रह्मँल्लोके भूतेन केनचित् ।
पुनरुक्तेन किं तेन भाषितेन पुनः पुनः ॥ ९

दुर्योधनार्थे शकुनिर् द्यूते निर्जितवान् पुरा ।
समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः ॥ १०

स तं समयमुत्सृज्य राज्यमिच्छति पैतृकम् ।
बलमाश्रित्य मत्स्यानां पाञ्चालानां युधिष्ठिरः ॥ ११

दुर्योधनो भयाद्विद्वन् न दद्यात् पादमन्ततः ।
धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च ॥ १२

यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः ।
यथाप्रतिज्ञं तं कालं चरन्तु वनमाश्रिताः ॥ १३

ततो दुर्योधनस्याङ्के वर्तन्तामकुतोभयाः ।
[1]अधार्मिकीं त्विमां बुद्धिम् मौर्ख्यात् कुर्वन्ति केवलात् ॥ १४

अथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः ।
आसाद्येमान् कुरुश्रेष्ठान् स्मरिष्यन्ति वचो मम ॥ १५

भीष्मः—

किं नु राधेय वाचा ते कर्म तत् स्मर्तुमर्हसि ।
एक एव यदा पार्थष् षड्रथाञ्जितवान् युधि ॥ १६

विराटनगरे धीरः किं त्वं तत्रैव नागतः ।
बहुशो जीयमानस्य कर्म दृष्टं तदैव ते ॥ १७

न चेदिदं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् ।
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान् ॥ १८
[2]दुर्योधनस्सहामात्यो विनङ्क्ष्यति न संशयः ॥ १८॥

---

1. ख—नास्तीदमर्धम् ।
2. अ-क-ख-म-मा—कोशेषु इदमर्धं नास्ति ।

वैशम्पायनः—

धृतराष्ट्रस्ततो भीष्मम् अनुमान्य प्रसाद्य च ।
अवभर्त्स्य च राधेयम् इदं वचनमब्रवीत् ॥ १९॥

धृतराष्ट्रः—

अस्मद्धितमिदं वाक्यम् उक्तवाञ्जाह्नवीसुतः।
पाण्डवानां हितं चैव सर्वस्य जगतस्तथा ॥ २०॥

चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ।
स भवान् प्रतियात्वद्य पाण्डवानेव मा चिरम् ॥ २१॥

वैशम्पायनः—

[1]स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान् ।
सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

॥ ५० ॥ सञ्जययानपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये २२॥ श्लोकाः]

---

## ॥ द्वाविंशोऽध्यायः ॥

धृतराष्ट्रेण यथाक्रमं दुर्योधनपाण्डवनिन्दाप्रशंसनपूर्वकं पाण्डवान् प्रति सञ्जयप्रेषणम् ॥ १ ॥

---

धृतराष्ट्रः—

प्राप्तानाहुस्सञ्जय पाण्डुपुत्रान्
उपप्लाव्ये तान् विजानीहि गत्वा ।

---

1. अ-क—कोशयोरिदमर्धं नास्ति ।

अजातशत्रुं च सभाजयेथा
दिष्ट्या वनाद्ग्राममुपस्थितस्त्वम् ॥ १

[1]सर्वान् वदेस्सञ्जय स्वस्तिमन्तः
कृच्छ्रं वासमतदर्हं निरुष्य ।
तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं
[2]मिथ्यापेतानामुपकारिणां सताम् ॥ २

नाहं क्वचित् सञ्जय पाण्डवानां
मिथ्यावृत्तिं काञ्चन जात्वपश्यम् ।
सर्वां श्रियं ह्यात्मवीर्येण लब्धां
पर्याकार्षुः पाण्डवा मह्यमेव ॥ ३

दोषं ह्येषां नाधिगच्छेत् परीप्सन्
नित्यं कञ्चिद्येन [3]गर्हाम पार्थान् ।
धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं
सुखप्रिया नानुरुध्यन्ति कामान् ॥ ४

घर्मं शीतं क्षुत्पिपासे तथैव
निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् ।
धृत्या चैवं प्रज्ञया चाभिभूय
धर्मार्थयोगान् प्रतिपद्यन्ति पार्थाः ॥ ५

---

1. मा—पुत्रो मह्यं मृत्युवशं जगाम दुर्योधनस्सञ्जय रागबुद्धिः ।
[अधिकः पाठः].

2. ख-ग-घ-ङ-म-मा – मिथ्योपेतानामपकारिणां च ।

3. ङ—गर्हेय म—गर्हेम ।

त्यजन्ति मित्रेषु धनानि काले
न सन्त्रासाज्जीर्यते मैत्रमेषाम् ।
यथार्हमानार्थकरा हि पार्थास्
त्वेषां द्वेष्टा नास्त्यजमीढपक्षे ॥ ६

अन्यत्र पापाद्विषमान्मन्दबुद्धेर्
दुर्योधनात् क्षुद्रतराच्च कर्णात् ॥ ६॥

[1]पुत्रो मह्यं मृत्युवशं जगाम
दुर्योधनस्सञ्जय रागबुद्धिः ।
[2]भागं हर्तुं घटते मन्दबुद्धिर्
महात्मनां सञ्जय दीप्ततेजसाम् ॥ ७॥

[3]येषां लोको हीनसुखप्रियाणां
महात्मनां वर्धयते हि तेजः ॥ ८

उत्थानवीर्यस्सुखमेधमानो
दुर्योधनस्सुकृतं मन्यते तत् ।
तेषां भागं मन्यते यच्च बालश्
शक्यं हर्तुं जीवतां पाण्डवानाम् ॥ ९

यस्यार्जुनः पदवीं केशवश्च
वृकोदरस्सात्यकोऽजातशत्रोः ।

1. ग-ब-ङ-कोशेष्वेवेदमर्धं वर्तते ।
2. अ-क-ङ—कोशेष्विदमर्धं न दृश्यते ।
3. म-मा—तेषां हि मे हीनसुखप्रियाणां
महात्मनां सञ्जय पाण्डवानाम् ॥ [पाठान्तरम्]

माद्रीपुत्रौ सृञ्जयाश्चापि यान्ति
पुरा युद्धात् साधु तस्य प्रदानम् ॥ १०

स ह्येवैकः पृथिवीं सव्यसाची
गाण्डीवधन्वा प्रणुदेद्रथस्थः ।
तथा विष्णुः केशवोऽप्यप्रधृष्यो
लोकत्रयस्याधिपतिर्महात्मा ॥ ११

तिष्ठेत कस्तस्य मर्त्यः पुरस्ताद्
यस्सर्वलोकेषु वरेण्य एकः ।
पर्जन्यघोषान् प्रवपञ्छरौघान्
पतङ्गसङ्घानिव शीघ्रवेगान् ॥ १२

दिशं ह्युदीचीमपि चोत्तरान् कुरून्
गाण्डीवधन्वैकरथो जिगाय ।
धनं चैषामाहरत् सव्यसाची
सेनानुगान् बलिदांश्चैव चक्रे ॥ १३

यश्चैव देवान् खाण्डवे सव्यसाची
गाण्डीवधन्वा प्रजिगाय सेन्द्रान् ।
उपाहरत् फल्गुनो जातवेदसे
यशो मानं वर्धयन् पाण्डवानाम् ॥ १४

गदाभृतां नास्ति समोऽद्य भीमा-
द्धस्त्यारोहे नास्ति समश्च तस्य ।

रथेऽर्जुनादाहुरदीनमेनं
बाह्वोर्बलेनायुतनागवीर्यम् ॥ १५

स शिक्षितः कृतवैरस्तरस्वी
दहेत् क्रुद्धस्तरसा धार्तराष्ट्रान् ।
सदाऽत्यमर्षी बलवान् न शक्यो
युद्धे जेतुं वासवेनापि साक्षात् ॥ १६

सुतेजसौ बलिनौ शीघ्रहस्तौ
सुशिक्षितौ भ्रातरौ फल्गुनेन ।
श्येनौ यथा पक्षिपूगान् रुजन्तौ
[1]न शेषयेतां प्रविभज्य शत्रून् ॥ १७

[2]एतद्बलं पूर्णमस्माकमेवं
यत् सर्वं तान् प्राप्य नास्तीति मन्ये ॥ १७॥

तेषां मध्ये वर्तमानस्तरस्वी
धृष्टद्युम्नः पाण्डवानामिहैकः ।
सहामात्यस्सोमकानां प्रबर्हस्
सन्त्यक्तात्मा [3]पाण्डवार्थे श्रुतो मे ॥ १८॥

---

1. ग-घ-ङ-म-मा—पुत्रौ माद्र्या नेह कुरून् विशेताम् ।
2. ख-घ-ङ-म-मा—नास्तीदमर्धम्
3. ग-घ-ङ-म-मा—पाण्डवानां जयाय ।

[1]अजातशत्रुं प्रसहेत कोऽन्यो
येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ १९

सहोषितश्चरितार्थो वयस्थो
मात्स्येयानामधिपो वै विराटः ।
स वै सपुत्रः पाण्डवार्थे च शश्वद्
युधिष्ठिरे भक्त इति श्रुतं मे । २०

अथावरुद्धा रथिनः पञ्च सन्ति
महेष्वासा भ्रातरः केकयेषु ।
केकयेभ्यो राज्यमाकाङ्क्षमाणा
युद्धार्थिनश्चानुवसन्ति पार्थान् ॥ २१

सर्वे च वीराः पृथिवीपतीन्द्रास्
समानीताः पाण्डवार्थे निविष्टाः ।
शूरानहं भक्तिमतश्शृणोमि
प्रीत्या युक्तान् संश्रितान् धर्मराजम् ॥ २२

गिर्याश्रया दुर्गनिवासिनश्च
योधाः पृथिव्यां कुलजाश्च वृद्धाः ।
म्लेच्छाश्च नानायुधवीर्यवन्तस्
समागताः पाण्डवार्थे निविष्टाः ॥ २३

1. घ-ङ-म-मा नास्तीदमर्धम् ।

पाण्ड्यश्च राजाऽमितवीर्यविक्रमो
युधि प्रवीरैर्बहुभिस्समेतः ।
समागतः पाण्डवार्थे महात्मा
लोकप्रवीरोऽप्रतिवीर्यतेजाः ॥ २४

अस्त्रं द्रोणादर्जुनाद्वासुदेवात्
कृपाद्भीष्माद् येन वृतं श‍ृणोमि ।
[1]यत्तश्च कृष्णप्रतिमप्रभावस्
स सात्यकिः पाण्डवार्थे निविष्टः ॥ २५

[2]उपाश्रिताश्चेदिकरूशकाश्च
सर्वोद्योगैर्भूमिपालास्समेताः ॥ २५॥

तेषां मध्ये सूर्यमिवातपन्तं
श्रिया वृतं चेदिपतिं ज्वलन्तम् ।
अस्तम्भनीयं युधि मन्यमानं
ज्यां कर्षतां श्रेष्ठतमं पृथिव्याम् ॥ २६॥

सर्वोत्साहं क्षत्रियाणां निहत्य
प्रसह्य कृष्णस्तरसा सम्ममर्द ॥ २७

यशो मानं वर्धयन् पाण्डवानां
पुराऽभिनच्छिशुपालं समीक्ष्य ॥ २७॥

1. अ-क—यं तं कार्ष्णिप्रतिममाहुरेकं ।
2. ख-ग-घ-ङ-मा—उपाश्रितश्चैव करूशराजः सर्वोत्साहैर्भूमिपालै-स्समेतः ।

यस्य सर्वे वर्धयन्ति स्म मानं
कर्ूशराजप्रमुखा नरेंद्राः ॥ २८

तमसह्यं केशवं तत्र मत्वा
सुग्रीवयुक्तेन रथेन कृष्णम् ।
सम्प्राद्रवंश्चेदिपतिं विहाय
सिंहार्दिता क्षुद्रमृगा इवान्ये ॥ २९

यस्तं प्रतीपस्तरसा प्रत्युदीयाद्
आशंसमानो द्वैरथे वासुदेवम् ।
सोऽशेत कृष्णेन हतः परासुर्
वातेनेवोन्मथितः कर्णिकारः ॥ ३०

पराक्रमं ते यदवेदयन्त
तेषामर्थे सञ्जय केशवस्य ।
अनुस्मरंस्तस्य कर्माणि विष्णोर्
गावल्गणे नाधिगच्छामि शान्तिम् ॥ ३१

न जातु तान् छत्रुरन्यस्सहेत
येषां स स्यादग्रणीर्वृष्णिसिंहः ।
प्रवेपते मे हृदयं भयेन
श्रुत्वा कृष्णावेकरथे समेतौ ॥ ३२

न चेद्गच्छेत् सङ्गरं मन्दबुद्धिस्
ताभ्यां लभेच्छर्म तदा सुतो मे ।

नो चेत् कुरून् सञ्जय निर्दहेताम्
इन्द्राविष्णू दैत्यसेनां यथैव ॥ ३३

मतो हि मे शक्रसमो धनञ्जयस्
सनातनो वृष्णिवीरश्च कृष्णः ।
[1]धर्मारामो ह्रीनिषेधस्तरस्वी
कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ॥ ३४

दुर्योधनेन निकृतो मनस्वी
नो चेत् क्रुद्धः प्रदहेद्धार्तराष्ट्रान् ॥ ३४॥

नाहं तथा ह्यर्जुनाद्वासुदेवाद्
भीमाद्वाऽपि यमयोर्वा बिभेमि ।
यथा राज्ञः क्रोधदीप्तस्य सूत
वह्नेरहं भीततरस्सदैव ॥ ३५॥

महातपा ब्रह्मचर्येण युक्तस्
सङ्कल्पोऽयं मानसस्तस्य सिध्येत् ।
तस्य क्रोधं सञ्जयाहं समीक्ष्य
स्थाने [2]जानन् भृशमस्म्यद्य भीतः ॥ ३६॥

सङ्गच्छ शीघ्रं प्रहितो रथेन
पाञ्चालराजस्य चमूनिवेशम् ।

1. ख-ग-म—स धर्मराजो ।
2. ग-म-मा—जातं ख-घ-ङ—सूनौ जातं ।

अजातशत्रुं कुशलं स्म पृच्छेः
पुनः पुनः प्रीतियुक्तं वदेस्त्वम् ॥ ३७॥

जनार्दनं चापि समेत्य [1]सूत
महामतिं वीर्यवतां वरिष्ठम् ॥ ३८

अनामयं मद्वचनेन पृच्छेस्
त्वं [2]धार्तराष्ट्रः पाण्डवैश्शान्तिलिप्सुः ॥ ३८॥

न तस्य किञ्चिद्वचनं न कुर्यात्
कुन्तीपुत्रो वासुदेवस्य सूत ।
प्रियश्चैषामात्मसमश्च कृष्णो
विद्वांश्चैषां कर्मणि नित्ययुक्तः ॥ ३९॥

समानीतान् पाण्डवान् सृञ्जयांश्च
जनार्दनं युयुधानं विराटम् ।
अनामयं मद्वचनेन पृच्छेस्
सर्वांस्तथा द्रौपदेयांश्च पञ्च ॥ ४०॥

यद्यत् तत्र प्राप्तकालं परेभ्यस्
त्वं मन्येथा भारतानां हितं च ।

---

1. अ-क—सूत महामात्यं वीर्यवतामुदारम् ।
2. ग-घ-ङ-म-मा—धार्तराष्ट्रैः पाण्डवस्संधिमिच्छेत् ।
क—धार्तराष्ट्रैः पाण्डवैश्शान्तिलिप्सुः ।

तत्तद्भाषेथास्सञ्जय राजमध्ये
न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ५० ॥ सञ्जययानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

---

## ॥ त्रयोविंशोऽध्यायः ॥

सञ्जयेनोपप्लाव्यं गत्वा पाण्डवान् प्रति धृतराष्ट्रकृतकुशलप्रश्नकथनम् ॥ १ ॥ युधिष्ठिरेण सञ्जयं प्रति धृतराष्ट्रादीनां कुशलादिप्रश्नः ॥ २ ॥

---

वैशम्पायनः—

राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः ।
उपप्लाव्यं ययौ द्रष्टुं [2]पाण्डवानमितौजसः ॥ १

स तु राजानमासाद्य कुन्तीपुत्रं युधिष्ठिरम् ।
अभिवाद्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ २

गावल्गणिस्सञ्जयस्सूतसूनुर्
अजातशत्रुं तमवोचत् प्रतीतः ॥ ३॥

---

1. ख-ग-घ-ङ-म-मा—यन्न भवेच्च युद्धम् ।
2. ख-ग-घ-ङ-म-मा—शीघ्रं पार्थान् महौजसः ।

सञ्जयः—

दिष्ट्या राजंस्त्वामरोगं प्रपश्ये
[1]सहायवन्तं च महेन्द्रकल्पम् ॥ ३

अनामयं पृच्छति त्वाऽऽम्बिकेयो
वृद्धो राजा धृतराष्ट्रो मनीषी ।
[2]कच्चिद्भीमः कुशली पाण्डवाग्र्यो
धनञ्जयस्तौ च माद्रीतनूजौ ॥ ४

कच्चित् कृष्णा द्रौपदी राजपुत्र
सत्यव्रता वीरपत्नी सपुत्रा ।
मनस्विनी यत्र च वाञ्छसि त्वम्
इष्टान् कामान् भारत स्वस्तिकामः ॥ ५

युधिष्ठिरः—

गावल्गणे सञ्जय स्वागतं ते
[3]प्रीतात्माऽहं त्वाभिऽनन्दामि सूत ।
अनामयं प्रतिजाने तवाहं
सहानुजैः कुशली चास्मि विद्वन् ॥ ६

चिरादिदं कुशलं भारतस्य
श्रुत्वा राज्ञः कुरुवृद्धस्य सूत ।

---

1. अ-क-ख-ङ—सहामात्यं त्वां च ।
2. ग-घ-ङ-म-मा—कच्चित् सुखी पाण्डवाग्र्योग्रधन्वा धनञ्जयो भीमसेनो यमौ च ।
3. अ-क—प्रीयामहे ते वयं दर्शनेन ।

मन्ये साक्षाद्दृष्टमहं नरेन्द्रं
दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ॥ ७

पितामहो नस्स्थविरो मनस्वी
महाप्राज्ञस्सर्वधर्मोपपन्नः ।
स कौरव्यः कुशली तात भीष्मो
यथापूर्वं वृत्तिरप्यस्ति कच्चित् ॥ ८

कच्चिद्राजा धृतराष्ट्रस्सपुत्रो
वैचित्रवीर्यः कुशली महात्मा ।
महाराजो [1]बाह्लिकः प्रातिपेयः
कच्चिद्विद्वान् कुशली सूतपुत्र ॥ ९

[2]स सोमदत्तः कुशली तात कच्चिद्
भूरिश्रवास्सत्यसन्धश्शलश्च ।
द्रोणस्सपुत्रश्च कृपश्च विप्रो
महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ १०

सर्वे कुरुभ्यस्स्पृहयन्ति सञ्जय
धनुर्धरा ये पृथिव्यां प्रधानाः ।

1. ख-ग-घ-ङ-म-मा—बाह्लिकानां महात्मा
प्रातिपीयः कुशली तात कच्चित् ।

2. मा—भूरिश्रवास्सोमदत्तश्च शल्यो
द्रोणस्सपुत्रश्च कृपश्च विप्रः ।
महेष्वासाः कच्चिदेतेऽप्यरोगाः
महाप्राज्ञास्सर्वशास्त्रावदाताः ॥ [पाठान्तरम्]

[1]महाप्राज्ञास्सर्वशास्त्रेऽवदाता
धनुर्भृतां मुख्यतमाः पृथिव्याम् ॥ ११
कच्चिन्मानं तात लभन्त एते
धनुर्भृतः कच्चिदेतेऽप्यरोगाः ।
येषां राष्ट्रे निवसति दर्शनीयो
महेष्वासश्शीलवान् द्रोणपुत्रः ॥ १२
वैश्यापुत्रः कुशली तात कच्चित्
महाप्राज्ञो राजपुत्रो युयुत्सुः ।
[2]कर्णो मानी कुशली तात कच्चित्
सुयोधनो यस्य मन्दो विधेयः ॥ १३
स्त्रियो वृद्धा भारतानां जनन्यो
[3]माहानस्यो दासभार्याश्च सूत ।
वध्वः पुत्रा भागिनेया भगिन्यो
दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ १४
कच्चिद्राजा ब्राह्मणानां यथावत्
प्रवर्तते पूर्ववत् तात वृत्तिम् ।
कच्चिद्दायान् मामकान् धार्तराष्ट्रो
[4]द्विजातीनां सञ्जय नोपहन्ति ॥ १५

---

1. ङ—अर्धद्वयं न दृश्यते ।
2. अ-क—कर्णोऽमात्यः ।
3. अ-ग-घ-ङ—महादास्यो ।
4. मा—इतः पादपञ्चकं नोपलभ्यते ।

कच्चिद्राजा धृतराष्ट्रस्सपुत्रस्
समीक्षते ब्राह्मणातिक्रमान् वै ।
[1]कच्चिन्न हेतोरिव सव्यलीकम्
उपेक्षते तेषु सदैव वृत्तिम् ॥ १६

एतज्ज्योतिश्चोत्तमं जीवलोके
शुक्लं प्रजानां विहितं विधात्रा ।
ते चेद्दोषं न नियच्छन्ति मन्दाः
कृत्स्नो नाशो भविता कौरवाणाम् ॥ १७

कच्चिद्राजा धृतराष्ट्रस्य पुत्रो
बुभूषते वृत्तिममात्यवर्गे ।
कच्चिन्नाभेदेन जिजीविषन्ति
सुहृद्रूपा दुर्हृदश्चैकमत्यात् ॥ १८

कच्चित्तु पापं कथयन्ति तात
न पाण्डवानां कुरवस्सर्व एव ।
द्रोणस्सपुत्रस्सकृपश्च वीरो
नास्मासु पापानि वदन्ति कच्चित् ॥ १९

[2]कच्चिद्राष्ट्रं धृतराष्ट्रं सपुत्रं
समेत्याहुः कुरवस्सर्व एव ।

---

1. अ-क-ख-म—स्वर्गस्यार्थे निखिलां कर्मभूतामपेक्षते ।
2. ङ—अर्धमिदं नास्ति ।

कच्चिद्दृष्ट्वा दस्युसङ्घान् समेतान्
स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ २०

मौर्वीभुजाग्रप्रहितान् स्म तात
दोधूयमानेन धनुर्गुणेन ।
गाण्डीवमुक्तान् स्तनयित्नुघोषान्
अजिह्मगान् कच्चिदनुस्मरन्ति ॥ २१

[1]न तं दृष्ट्वा कश्चिदस्ति प्रतीपं
गतो गृहं जातु जगाम रङ्गात् ॥ २१॥

न चापश्यं कञ्चिदहं पृथिव्यां
योधं समं वाऽप्यधिकं चार्जुनेन ।
[2]यस्यैकषष्टिर्निशितास्तीक्ष्णधारास्
सुवाससः पत्त्रिणो निस्सरन्ति ॥ २२॥

गदापाणिर्भीमसेनस्तरस्वी
प्राद्रावयच्छत्रुसङ्घान् समीके ।
नागः प्रभिन्न इव नड्वलेषु
चङ्क्रम्यते कच्चिदेनं स्मरन्ति ॥ २३॥

माद्रीपुत्रस्सहदेवः कलिङ्गान्
समागतानजयद्वार्धिकूले ।

---

1. ग-ङ-म-मा—कोशेष्वेवेदमर्धं वर्तते
2. ग-घ-म-मा—यस्यैकषष्टिर् निहतास्तीक्ष्णधाराः
सुवाससस्समताहस्तवापः ।
ङ—यस्यैकषष्टिर् निहितास्तीक्ष्णधाराः ।
सुवाससस्संमता हस्तवापाः ॥

[1]वामेनास्यन् दक्षिणेनेव यो वै
[2]महाबलं कच्चिदेनं स्मरन्ति ॥ २४॥

[3]उद्यन्नयं नकुलः प्रेषितोऽयं
[4]गावल्गणे सञ्जय पश्यतस्ते ।
दिशं प्रतीचीं वशमानयन्मे
माद्रीपुत्रः कच्चिदेनं स्मरन्ति ॥ २५॥

[5]पराभवो द्वैतवने य आसीद्
दुर्मन्त्रिते घोषयात्रागतानाम् ।
यत्र मन्दाञ्छत्रुवशं [6]प्रपन्नान्
अमोचयद्भीमसेनोऽर्जुनश्च ॥ २६॥

अहं पश्चादर्जुनमभ्यरक्षं
माद्रीपुत्रौ भीमसेनं च युद्धे ।
गाण्डीवभृच्छत्रुसङ्घानुदस्य
स्वस्त्यागमत् कच्चिदेनं स्मरन्ति ॥ २७॥

[7]न कर्मणा साधुनैकेन नूनं
कार्यं शक्यं वै भवतीह सञ्जय ।

---

1. अ-क-ख-ग-घ—समायातो दक्षिणेनैव यो वै । 2. अ-क—बाहाबलं ।
3. अ-क—पुरा जेतुं । 4. अ-क—शिवांस्त्रिगर्तान् ।
5. ङ-म-मा—अभ्यागमो । 6. अ-क—प्रयातान् ।
7. अ-म—स कर्मणा ।

सर्वात्मना परिजेतुं वयं चे-
न्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
॥ उद्योगपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ ५० ॥ सञ्जययानपर्व चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये २८॥ श्लोकाः]

## ॥ चतुर्विंशोऽध्यायः ॥

सञ्जयेन युधिष्ठिरप्रश्नानामुत्तरदानपूर्वकं धृतराष्ट्रसन्देशश्रवण-विधानम् ॥ १ ॥ सञ्जयेन युद्धनिन्दापूर्वकं पाण्डवैः शमस्वीकारस्य भीष्मधृतराष्ट्राद्यभिमतत्वकथनम् ॥ २ ॥

सञ्जयः—

[1]यदात्थ मे पाण्डव तत् तथैव
कुरून् कुरुश्रेष्ठ जनं च पृच्छसि ।
अनामयास्तात मनस्विनस्ते
कुरुश्रेष्ठान् पृच्छसि यांस्त्वमेव ॥ १

सन्त्येव वृद्धास्साधवो धार्तराष्ट्रे
सन्त्येव पापाः पाण्डव तस्य विद्धि ।

1. ग-घ—यथार्हसि पाण्डव तांस्तथैव ।
ङ—यथार्हसे पाण्डवानां तथैव । म-मा—यथार्हसे

दद्याद्रिपुभ्योऽपि हि धार्तराष्ट्रः
कुतो [1]दायाँल्लोपयेद्ब्राह्मणानाम् ॥ २

[2]यद्युष्मासु वर्ततेऽसावधर्म्यम्
अद्रुग्धेषु द्रुग्धवत् तन्न साधु ।
मित्रध्रुक् स्याद्धृतराष्ट्रस्य पुत्रो
युष्मान् द्विषन् साधुवृत्तानसाधुः ॥ ३

स चापि जानाति भृशं च तप्यते
शोचत्यन्तस्स्थविरोऽजातशत्रो ।
शृणोति हि ब्राह्मणानां समेत्य
मित्रद्रोहः पातकेभ्यो गरीयान् ॥ ४

स्मरन्ति तुभ्यं नरदेव संयुगे
युद्धे च जिष्णोश्च युधां प्रणेतुः ।
समुद्धुष्टे दुन्दुभिशङ्खशब्दे
गदापाणिं भीमसेनं स्मरन्ति ॥ ५

माद्रीपुत्रौ चापि [3]रणाजिरेषु
सर्वा दिशस्सम्पतन्तौ स्मरन्ति ।

---

1. ग-म-मा—दायान् दापयेद् ब्राह्मणानाम् ।
अ-क—दायानुपयेद्ब्राह्मणानाम् ।
2. ग-म-मा—यद्युद्यष्मासु वर्तते नावमानम्
अद्रुग्धेषु द्रुग्धवत् तन्न साधु । [पाठान्तरम्]
अ-क—यद्युष्माकं वर्ततेऽसौ न धर्म्यम्
अद्रोहेषु द्रोहवत्तन्न साधु ।
3. ङ—तथाऽऽजिमध्ये । म-मा—रणाजिमध्ये ।

सेनां वर्षन्तौ शरवर्षैरजस्रं
महारथौ समरे दुष्प्रकम्प्यौ ॥ ६

न त्वेव मन्ये पुरुषस्य राज-
न्ननागतं ज्ञायते यद्भविष्यम् ।
त्वं चेत् तथा सर्वधर्मोपपन्नः
प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥ ७

[1]त्वमेवैतत् सर्वमतश्च भूयस्
समीकुर्याः प्रज्ञयाऽजातशत्रो ॥ ७॥

न कामार्थं सन्त्यजेयुर्हि धर्मं
पाण्डोस्सुतास्सर्व एवेन्द्रकल्पाः ।
त्वमेवैतत् प्रज्ञयाऽजातशत्रो
समीकुर्या येन शर्माप्नुयुस्ते ॥ ८॥

धार्तराष्ट्राः पाण्डवास्सृञ्जयाश्च
ये चाप्यन्ये सन्निविष्टा नरेन्द्राः ।
यान्मां ब्रवीद्धृतराष्ट्रो निशायाम्
अजातशत्रो वचनं पिता ते ॥ ९॥

सहामात्यस्सहपुत्रश्च राजन्
समेत्य तां वाचमिमां निबोध* ॥ १० -

1. ङ—इदमर्धद्वयं न दृश्यते ।
* सर्वेषु कोशेष्वत्रैवाध्यायसमाप्तिर्दृश्यते

युधिष्ठिरः—

समागताः पाण्डवास्सृञ्जयाश्च
जनार्दनो युयुधानो विराटः ।
यत् ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत् सूतपुत्र ॥ ११

सञ्जयः—

अजातशत्रुं च वृकोदरं च
धनञ्जयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥ १२

पञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनीम् ।
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन् कुरूणाम् ॥ १३

शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत् त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञस्
तद् रोचतां पाण्डवानां शमोऽस्तु ॥ १४

सर्वैर्धर्मैस्समुपेतास्तु पार्थास्
संस्थानेन मार्दवेनार्जवेन ।

कुले जाता ह्यनृशंसा वदान्या
  ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ॥ १५

न युज्यते कर्म युष्मासु हीनं
  सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत् तच्-
  छुभ्रे वस्त्रे यद्भवेत् किल्बिषं वः ॥ १६

सर्वक्षयो दृश्यते यत्र कृत्स्नः
  पापोदयो निरयो भावसंस्थः ।
कस्तत्र कुर्याज्जातु कर्म प्रजानन्
  पराजयो यत्र समो जयश्च ॥ १७

ते वै धन्या यैः कृतं ज्ञातिकार्यं
  ते वै पुत्रास्सुहृदो बान्धवाश्च ।
उपक्रुष्टं जीवितं सन्त्यजेयुर्
  [1]यतः कुरूणां नियतस्स्यादभावः ॥ १८

[2]ते चेत् कुरूननुशिष्यार्थसार्थं
  निर्णीय सर्वान् द्विषतो निगृह्य ।

1. अ-क—ततः कुरूणां नियतो वैभवस्स्यात ।
2. ख-ग-घ-ङ-म—न चेत् कुरूननुशिष्यामि पार्था ।
  क—ते चेत् कुरूननुशिष्यास्थ पार्थ ।
  मा—नो चेत् कुरूननुशिष्यन्ति पार्था ।

समं वस्तज्जीवितं मृत्युना स्याद्
यज्जीवध्वं ज्ञातिवधेन साधु ॥ १९

को ह्येव युष्मान् सह केशवेन
सचेकितानान् पार्षतबाहुगुप्तान् ।
ससात्यकीन् विषहते ह जेतुं
लब्ध्वाऽपि देवान् सचिवान् सहेन्द्रान् ॥ २०

को वा कुरून् द्रोणभीष्माभिगुप्तान्
अश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे विजेतुं विषहेत राजन्
राधेयगुप्तान् सह भूमिपालैः ॥ २१

महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किञ्चित् ॥ २२

कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पाञ्चालानामधिपं चैव वृद्धम् ॥ २३

कृताञ्जलिश्शरणं वः प्रपद्ये

कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ।

नह्येवमेवं वचनं वासुदेवो

धनञ्जयो वा जातु किञ्चिन्न कुर्यात् ॥ २४

प्राणान् दद्याद् याच्यमानः कुतोऽन्यद्

एतद्विद्वन् साधनार्थं ब्रवीमि ।

एतद्राज्ञो भीष्मपुरोगमस्य

मतं यद्वश्शान्तिरिहोत्तमा स्यात् ॥ २५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ५० ॥ सञ्जययानपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ पञ्चविंशोऽध्यायः ॥

---

युधिष्ठिरेण स्वपरयोः शुभाशुभाभिसन्धिकथनपूर्वकं स्वस्याजय्यत्वमभिधायेन्द्रप्रस्थे राज्यदाने शान्तिकथनम् ॥ १ ॥

---

युधिष्ठिरः—

कां नु वाचं सञ्जय मे शृणोषि

युद्धैषिणीं येन युद्धाद्बिभेषि ।

अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युध्येत सूत ॥ १

अकुर्वतश्चेत् पुरुषस्य सञ्जय
सिध्येत् सङ्कल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैतद्
अन्यत्र युद्धाद्बहु यल्लघीयः ॥ २

कुतो युद्धं जातु नरोऽवगच्छेत्
को देवशप्तो हि वृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था
धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ३

धर्मोदयं सुखमाशंसमानाः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ॥ ३॥
[1]सुखं प्रेप्सुर्विजिघांसुश्च दुःखं
क इन्द्रियाणां प्रीतिवशोऽनुगामी ॥ ४

कामाभिवृद्ध्या स्वशरीरं दुनोति
यया प्रयुक्तोऽत्र करोति दुःखम् ।
[2]यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धति पावकस्य ॥ ५

1. ग-घ-ङ-म-मा—कर्मारभेद्यच्च धर्मानपेतं य । [अधिकः पाठः]
2. ग-घ-ङ-म-मा—तृष्णां त्यजेत् सर्वधर्मादपेताम् । [अधिकः पाठः]

कामार्थलाभेन तथैव भूयो
न तृप्यते सर्पिषेवाग्निरिद्धः ।
सम्पश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ६

नाश्रेयानीश्वरो विग्रहाणां
नाश्रेयान् वै गीतशब्दं शृणोति ।
नाश्रेयान् वै सेवते माल्यगन्धान्
न चाप्यश्रेयाननुलेपनानि ॥ ७

[1]नाश्रेयान् वै प्रावारान् संविवस्ते
कथं त्वस्मान् सम्प्रणुदेत् कुरुभ्यः ।
अत्रैव [2]स्यादबुधस्येह कामः
प्रायश्शरीरे हृदयं दुनोति ॥ ८

स्वयं राजा विषमस्थः परेषु
सामर्थ्यमन्विच्छति तन्न साधु ।
यथाऽऽत्मनः पश्यति वृत्तमेव
तथा परेषामपि सोऽभ्युपैतु ॥ ९

आसन्नमग्निं तु निदाघकाले
गम्भीरकक्षे गहने विसृज्य ।

1. ग-घ-ङ-म-मा—नाश्रेयसामीश्वरो ।
2. ग-घ-म-मा—स्यादवधूय एष कामः ।
ङ—चास्मानवधूय एष कामः ।

यथा धृद्धं वायुवशेन शोचेत्
कक्षं मुमुक्षुश्शिशिरव्यपाये ॥ १०

प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा
[1]सम्मुह्यते सञ्जय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
पुत्रं मन्दं मूढममन्त्रिणं तु ॥ ११

अनाप्तवच्चाप्ततमस्य वाचस्
सुयोधनो विदुरस्यावमत्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
सम्बुध्यमानो विशतेऽधर्ममेव ॥ १२

मेधाविनं ह्यर्थकामं कुरूणां
बहुश्रुतं वाग्मिनं शीलवन्तम् ।
स तं राजा धृतराष्ट्रः कुरुभ्यो
न सस्मार विदुरं पुत्रकामात् ॥ १३

मानघ्नस्याप्यर्थकामस्य चेर्ष्योस्
संरम्भिणश्चार्थधर्मातिगस्य ।
दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो [2]दौर्हृदैर्भावितस्य ॥ १४

1. अ-क—लालप्यते परजयस्य हेतोः ।
2. ग-घ-ङ-म-मा—दुर्हृदां भावनस्य ।

अनेयस्याश्रेयसो दीर्घमन्योर्
　मित्रद्रुहस्सञ्जय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
　[1]प्रपश्यमानः प्रजहाद्धर्मकामौ ॥ १५

तदैव मे सञ्जय दीव्यतोऽभू-
　न्मतिः कुरूणामागतस्यादभावः ।
काव्यां वाचं विदुरे भाषमाणे
　न चाविन्दद्धृतराष्ट्रात् प्रशंसाम् । १६

क्षत्तुर्यदा नान्ववर्तन्त बुद्धिं
　कृच्छ्रं कुरून् सूत तदाऽभ्याजगाम ।
यावत् प्रज्ञामन्ववर्तन्त तस्य
　तावत् तेषां राष्ट्रवृद्धिर्बभूव ॥ १७

तदर्थलुब्धस्य निबोध मेऽद्य
　ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुश्शासनश्शकुनिस्सूतपुत्रो
　गावल्गणे पश्य सम्मोहमस्य ॥ १८

सोऽहं न पश्यामि परीक्षमाणः
　कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ॥ १८॥

---

1 ग—प्रबुध्यमानः ।
　घ-ङ-मा—प्रदर्श्यमानः । 　म—प्रदृश्य ।

आप्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ।
आशंसते धृतराष्ट्रस्सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ॥ १९॥

तस्मिञ्छमः केवलं नोपलभ्यस्
[1]स्वार्थं स्वकं मद्गतं मन्यतेऽर्थम् ॥ २०

यत्तत् कर्णो मन्यते वारणीयं
युद्धे गृहीतायुधमर्जुनं वै ।
आसंश्च युद्धानि पुरा महान्ति
[2]कथं कर्णो नाभवद्वीप एषाम् ॥ २१

कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ।
अन्ये च वै कुरवस्तत्र सन्ति
यथाऽर्जुनान्नास्त्यपरो धनुर्धरः ॥ २२

जानन्त्येतत् कुरवस्सर्व एव
ये चाप्यन्ये भूमिपालास्समेताः ।
[3]दुर्योधने राज्यमिहाभवद्यथा
अरिन्दमे फल्गुनेऽविद्यमाने ॥ २३

---

1. ख-घ-ङ-म-मा—प्रत्यासन्नं मद्गतं मन्यतेऽर्थम्। अ-क—सङ्गतं
2. ग-घ-म-मा—तदा कथं नाभवद्वीर्यमेषाम्।
ङ—तदा कर्णो नाभवद्वीर्यमेषाम्।
3. ख-ग-घ-ङ-म-मा-दुर्योधनो नापराध्येच्चिरं त म्।

[1]तेनानुबन्धं मन्यते धार्तराष्ट्रः
　　शक्यं हर्तुं पाण्डवानां ममत्वम् ॥ २३॥
किरीटिना तालमात्रायुधेन
　　तद्वेदिना संयुगं तत्र गत्वा ।
गाण्डीवविष्फारितशब्द[2]माजा-
　　वश्रृण्वाना धार्तराष्ट्रा ध्रियन्ते ॥ २४॥
[3]क्रुद्धं न चेदीक्षते भीमसेनं
　　सुयोधनो मन्यते सिद्धमर्थम् ॥ २५
इन्द्रोऽप्येतन्नोत्सहेतापहर्तुम्
　　ऐश्वर्यं नो जीवति भीमसेने ।
धनञ्जये नकुले चैव सूत
　　तथाविधे सहदेवे सहिष्णौ ॥ २६
न चेदेतां प्रतिपद्येत बुद्धिं
　　वृद्धो राजा सह पुत्रेण सूत ।
एवं रणे पाण्डवकोपदग्धा
　　विनश्येयुस्सञ्जय धार्तराष्ट्राः ॥ २७
जानासि त्वं क्लेशमस्मासु वृत्तं
　　त्वां पूजयन् सञ्जयाहं क्षमेयम् ॥ २७॥

---

1. घ-ङ-म-मा—ततोऽर्थबन्धं ।　ख—कुतोऽर्थं ।
2. ग-घ-ङ-म-मा—मातं श्रुत्वैव ते धार्तराष्ट्रा म्रियन्ते ।
3. ख-ग-घ-ङ-म-मा—क्रुद्धस्य चेद्भीमसेनस्य वेगात् ।

यच्चास्माकं कौरवैर्भूतपर्वं
या नो वृत्तिर्धार्तराष्ट्रे तदाऽऽसीत् ।
अद्यापि तत् तत्र तथैव वर्ततां
शान्तिं गमिष्यामि यथा त्वमात्थ ॥ २८॥

इन्द्रप्रस्थे भवतु ममैव राज्यं
सुयोधनो यच्छतु भारताग्र्यः ॥ २९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां उद्योगपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ५० ॥ सञ्जययानपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये २९ श्लोकाः]

---

## ॥ षड्विंशोऽध्यायः ॥

सञ्जयेन युधिष्ठिरं प्रति युद्धे दोषोद्भावनपूर्वकं परैर्भागाप्रदानेऽपि शमाश्रयणस्यैव ज्यायस्त्वकथनम् ॥ १ ॥

---

सञ्जयः—

धर्मे नित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ।
महास्रावं जीवितं चाप्यनित्यं
संपश्यंस्त्वं पाण्डव [1]मा विनङ्क्षीः ॥ १

1. अ-क-म-मा—मा व्यनीनशः ॥

न चेद्भागं कुरवोऽन्यत्र युद्धात्
प्रयच्छेरंस्तुभ्यमजातशत्रो ।
भैक्षाचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ २

अल्पकालं जीवितं यन्मनुष्ये
महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्यशसो नानुरूपं
तस्मात् पापं पाण्डव मा कृथास्त्वम् ॥ ३

कामा मनुष्यं प्रदहन्त एते
धर्मस्य ये विघ्नमूला नरेन्द्र ।
पूर्वं नरस्तान् मतिमान् विनिघ्नन्
लोके प्रशंसां लभतेऽनवद्याम् ॥ ४

निबन्धनी ह्यर्थतृष्णा हि पार्थ
तामिच्छतां बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणुते स बुद्धः
कामे गृध्नुर्हीयतेऽर्थानुरोधात् ॥ ५

धर्मं कृत्वा कर्मणा तात मुख्यं
महाप्रतापस्सवितेव भाति ।
हीनो हि धर्मेण महीमपीमां
लब्ध्वा नरस्सीदति पापबुद्धिः ॥ ६

वेदोऽधीतश्चरितं ब्रह्मचर्यं
यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ।
परं स्थानं मन्यमानेन भूय
आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥ ७

सुखप्रिये सेवमानोऽतिवेलं
[1]योगन्यासे यो न करोति कर्म ।
वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥ ८

एवं पुनर्ब्रह्मचर्याप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत् परलोकाय मूढो
[2]हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ९

न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाऽप्यथवा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेनमनुयात्येव कर्ता ॥ १०

न्यायोपेतं ब्राह्मणेभ्यो यदन्नं
श्रद्धापूतं गन्धरसोपपन्नम् ।

---

1. अ-क—तथाऽभ्याशे ।
2. ग-ब-ख-ङ-म-मा—हित्वा सोऽसूंस्तप्यति ।
हित्वा तु सन्तप्यति प्रेत्य मन्दः ।

अन्वाहार्यैरुत्तमदक्षिणेषु
तथारूपं कर्म विख्यायते ते ॥ ११

इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किञ्चित् क्रियते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कर्म
पुण्यं महत् सद्भिरतिप्रशस्तम् ॥ १२

जहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसोऽप्रियाणि ।
न कर्तव्यं विद्यते तत्र किञ्चिद्
अन्यत्र वै चेन्द्रियप्रीण[1]नाद्धि ॥ १३

एवंरूपं कर्मफलं नरेन्द्र
मात्रावहं हृदयस्य प्रियेण ।
स क्रोधजं पाण्डव हर्षजं च
लोकावुभौ मा प्रहासीश्चिराय ॥ १४

अन्तं गत्वा कर्मणां या प्रशंसा
सत्यं दमश्चार्जवमानृशंस्यम् ।
अश्वमेधो राजसूयस्तथेष्टः
पापस्यान्तं कर्मणो मा पुनर्गाः ॥ १५

1. ङ—नार्थान् । म-मा—नार्थात् ।

[1]न चैवेदं द्वेषरूपेण पार्थाः
करिष्यध्वं कर्म पापं चिराय ।
निवत्स्यध्वं वर्षपूगान् वनेषु
दुःखावासं पाण्डवा धर्म एवम् ॥ १६

[2]प्रव्रज्यया यातयित्वा पुरस्ताद्
आत्माधीनं यद्बलं ते तदाऽऽसीत् ।
नित्यं पाञ्चालास्सचिवास्तवेमे
जनार्दनो युयुधानो विराटः ॥ १७

मात्स्यो राजा रुक्मरथस्सपुत्रः
प्रहारिभिस्सह मित्रैस्सशस्त्रैः ।
राजानस्ते ये विदिताः पुरस्तात्[3]
त्वामेव ते संश्रयेयुः पुरस्तात् ॥ १८

महासहायः प्रतपन् बलस्थः
पुरस्कृतो वासुदेवार्जुनाभ्याम् ।

---

1. अ-क—तच्चेदेवं
2. अ—कोशे अर्धद्वयं नास्ति ।
3. क—अप्रव्राज्ये मा स्म हित्वा पुरस्तादात्माधीनं यद्बलं ह्येतदासीत् ।
नित्यं च पश्चात् सचिवास्तवेमे जनार्दनो युयुधानश्च वीर ।
मात्स्यो राजा रुक्मरथस्सपुत्रः प्रहारिभिस्सह पुत्रैर्विराटः ।
राजानश्च ये विदिताः पुरस्तात् त्वामेव ते संश्रयेयुः पुरस्तात् ॥
[पाठान्तरम्]

परान् हनिष्यन् द्विषतो रङ्गमध्ये
व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् ॥ १९

बलं कस्माद्वर्धयित्वा परस्य
निजान् कस्मात् कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान् वनेषु
युयुत्ससे पाण्डव हीनकाले ॥ २०

अप्राज्ञो वा पाण्डव युध्यमानो
धर्मज्ञो वा भूतिमथाभ्युपैति ।
प्रज्ञावान् वा युध्यमानोऽपि धर्मात्
संरम्भाद्वा सोऽपि भूतेरपैति ॥ २१

नाधर्मे ते धीयते पार्थ बुद्धिर्
न संरम्भात् कर्म चकर्थ पापम् ।
किमात्थ तत् कारणं यस्य हेतोः
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥ २२

अव्याधिजं कटुकं शीर्षरोगि
यशोमुषं पापफलोदयं वा ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ २३

पापानुबन्धं को नु तं कामयेत
क्षमैव ते ज्यायसी [1]को नु भोगः ॥ २३॥

यत्र भीष्मश्शान्तनवो हतस्स्याद्
यत्र द्रोणस्सहपुत्रो हतस्स्यात् ।
कृपश्शल्यस्सौमदत्तिर्विकर्णौ
विविंशतिः कर्णदुर्योधनौ च ॥ २४॥

[2]एतान् हत्वा कीदृशं तत् सुखं स्याद्
यद्विन्देथास्तदनु ब्रूहि पार्थ॥ २५

लब्ध्वाऽपीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्याः ।
प्रियाप्रिये सुखदुःखे च राज-
न्नेवं विद्वान्नैव युद्धं कुरु त्वम् ॥ २६

अमात्यानां वा यदि कामस्य हेतोर्
एवं युक्तं कर्म चिकीर्षसि त्वम् ।
[3]अपक्रामेस्त्वं प्रदायैव तेषां
मा गास्त्वं वै देवयानात् पथोऽन्यत् ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

॥ ५० ॥ सञ्जययानपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये २७ श्लोकाः]

1. अ-क-ख-ग-घ — नोत भोगाः म—नोत भोगः ।
2. अ-ख-ग—एतान् हतान् ।
3. ग-घ-ङ-म-मा—अपाक्रमस्संप्रदाय स्वमेभ्यो ।

## ॥ सप्तविंशोऽध्यायः ॥

युधिष्ठिरेण सञ्जयं प्रति धर्माधर्मनिर्णयस्य इतरासाधारणतया स्वस्य धर्मरहस्यज्ञश्रीकृष्णवचनानुयायित्वकथनम् ॥ १ ॥

युधिष्ठिरः—

असंशयं सञ्जय सत्यमेतद्
धर्मो वरः कर्मणां यत् त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं
[1]यथा धर्मं यद्यधर्मं चरेयम् ॥ १

यत्राधर्मो धर्मरूपाणि [2]धत्ते
धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
[3]बिभ्रद्धर्मो धर्मरूपं तथा च
विद्वांसस्तं सम्प्रपश्यन्ति बुद्ध्या ॥ २

एवं तथैवापदि लिङ्गमेतद्
[4]धर्माधर्मौ नित्यवृत्ती भजेताम् ।

1. ग-घ-ङ-म-मा— यदि धर्मं यद्यधर्मं चरामि ।
2. ग-घ-ङ-म-मा—बिभ्रद् ।
3. ग-घ-ङ-म-मा—तथा धर्मो धारयन् धर्मरूपं ।
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ।
4. ग-घ-ङ-म-मा—धर्माधर्मौ वृत्तिनित्यौ भजेते ।

आद्यं लिङ्गं यस्य तस्य प्रमाणम्
आपद्धर्मं सञ्जय तं निबोध ॥ ३

लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत् तत् परीप्से[1]द्विहीनः ।
प्रकृतिस्थश्चापदि वर्तमान
उभौ गर्ह्यौ भवतस्सञ्जयैतौ ॥ ४

[2]अतोऽविनाशमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा ।
[3]सम्पश्येथाः कर्मसु वर्तमानान्
[4]विकर्मस्थान् सञ्जय गर्हयेस्त्वम् ॥ ५

[5]आहोस्वित् त्वं मन्यसे सर्वमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रम्
तथैव ते वाचमिमां शृणोमि ॥ ६

[6]मनीषिणां सत्त्वविच्छेदनाय
विधीयते सत्सु वृत्तिस्सदैव ।

---

1. घ-ङ—दहीनः ।
2. ग-घ-ख-ङ-म-मा—अविलोपमि ।
3. ग-घ-ख-ङ-म-मा—आपद्येतान् कर्मसु ।
4. ग-घ-ख-ङ-मा—विमार्गस्थान् सञ्जय गर्हयेथाः।
5. ग-म—कोशयोरेवायं श्लोको दृश्यते
6. म-मा—श्लोकद्वयमिदं न दृश्यते ।

अब्रह्मण्यास्सन्ति तु ये न वैद्याः
सर्वोच्छेदं साधु मन्येत तेभ्यः ॥ ७

[1]सद्ध्वानः पितरो ये न पूर्वे
पितामहा ये च तेभ्यः परेऽन्ये ।
प्रज्ञैषिणो ये च हि कर्म कुर्युर्
नान्यं ततो नास्तिकोऽस्तीऽति मन्ये ॥ ८

यत् [2]किञ्चनेदं वित्तमस्यां पृथिव्यां
यद्देवानां त्रिदशानां [3]परत्र ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं
नाधर्मतस्सञ्जय[4] कामये तत् ॥ ९

[5]धर्मेश्वरः कुशलो नीतिमांश्च
उपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च
[6]राज्ञो विजानन्ननुशास्ति कृष्णः ॥ १०

1 घ-ख-ङ—तदर्थिनः ।
2. ग—किञ्चेदं । व-ङ-म-मा—किञ्चिदेवं ।
3. अ-क—वरं यत् ।
4. अ-क—कामयेयम् । मा—कामयेत ।
5. अ-क—अथेश्वरः ।
6. ख-ग-घ-ङ-म-मा—राजन्यभोजान ।
क—राज्ञो विजानन्ननुशास्ति कृष्णः ।

यदि ह्यहं [1]विसृजाम्यस्य गर्ह्यो
न युध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु
वासुदेवस्तूभयोरर्थकामः ॥ ११

[2]शैनेयोऽयं चेदयश्चान्धकाश्च
वार्ष्णेयभोजाः कुकुरास्सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं
निगृह्य शत्रून् सुहृदो नन्दयन्ति ॥ १२

वृष्ण्यन्धका ह्युग्रसेनादयो वै
कृष्णप्रणीतास्सर्व एवेन्द्रकल्पाः ।
मनस्विनस्सत्य[3]परायणाश्च
महाबला यादवा भोगवन्तः ॥ १३

[4]काश्यो बभ्रुश्श्रियमुत्तमां गतो
लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान् वर्षति वासुदेवो
ग्रीष्मात्यये मेघ इव प्रजाभ्यः ॥ १४

---

1. अ-क-ग-ङ—विसृजान् साम गर्ह्यो न युध्यमानो ।
2. ग-घ-ङ-म-मा—शैनेयाभोराश्चैत्यका अन्धकाश्च ।
वार्ष्णेयभोजाः कौरवाः ॥
3. ग-घ-ख-ङ-म-मा—पराक्रमाश्च महात्मानो ।
4. ख—श्लोकोऽयं नास्ति ।

अस्मिन् विधौ वर्तमाने तु तात [1]भूयो
उच्चावचं ह्येनं कर्मणो निश्चयज्ञम् ।
कर्मण्यश्च नस्साधुतमश्च कृष्णो
नातिक्रामे वचनं केशवस्य ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ५० ॥ सञ्जययानपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये १५ श्लोकाः]

---

## ॥ अष्टाविंशोऽध्यायः ॥

श्रीकृष्णेन स्वस्य कुरुपाण्डवेषु तुल्यवृत्तित्वकथनपूर्वकं कर्मणामवश्यानुष्ठेयत्वसमर्थनम् ॥ २ ॥ तथा सञ्जयं प्रति दुर्योधनादिकृतानयस्मारणपूर्वकं स्वस्य सन्ध्यर्थं तत्रागमनकथनम् ॥ २ ॥ तथा पाण्डवानां शमाशमान्यतरपक्षानुसारित्वकथनपूर्वकं धृतराष्ट्रं प्रति यथाभिलषितकरण कथनचोदनम् ॥ ३ ॥

---

श्रीभगवान्—

अविनाशं सञ्जय पाण्डवानाम्
इच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत
[2]समाशंसे बहुपुत्रस्य वृद्धिम् ॥ १

---

1. अ-क—भूयाद्-विद्धि
2. घ-ख-ङ-म-मा—सदाऽऽशंसे ।

कामो हि मे सञ्जय नित्यमवे
[1]नान्यद् ब्रूयां तान् प्रति शाम्यत
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये वै तत् पाण्डवानां [2]समक्षम् ॥ ११

सुदुष्करस्तव शमो हि नूनं
प्रदर्शितस्सञ्जय पाण्डवेन ।
[3]यस्मिन् गृध्नुर्धृतराष्ट्रस्सपुत्रः
कस्मादेषां कलहो नानुमूर्च्छेत् ॥ २

[4]तत् त्वं धर्मं व्याहरन् सञ्जयेह
मत्तश्च जानासि युधिष्ठिराच्च ॥ ३॥

अथो कस्मात् सञ्जय पाण्डवस्य
[5]उत्साहतः पूरयतस्स्वकर्म ।
यथाख्यातमावसतः कुटुम्बे
पुरा कस्मात् साधु विलोपमात्थ ॥ ४॥

---

1. ग-घ-ख-ङ-म-मा—तथा ब्रूयास्तानभिशाम्यतेति ।
2. घ-ख-ङ-म—समर्थम् । मा—समर्थः ।
3. ग—अस्मिन् वृत्ते ।
घ-ख—अस्मिन् रते धृतराष्ट्रे सपुत्रे तस्मादेषां ।
ङ-म-मा—अस्मिन् वृत्ते धृतराष्ट्रे सपुत्रे कस्मादेषां ।
4. अ-क—स त्वं धर्मं विचरन्
म—तत्त्वं धर्मान् व्याचरन् । मा—तत्त्वं धर्मान् विचरन् ।
5. अ-क-ग—उत्साहिनः

अस्मिन् विधौ वर्तमाने यथावद्
उच्चावचा मतयो ब्राह्मणानाम् ॥ ५

कर्मणाऽऽहुस्सिद्धिमेके परत्र
हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्
विद्वानपीह विदितं ब्राह्मणानाम् ॥ ६

या वै विद्यास्साधयन्तीह कर्म
तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः ॥ ७

सोऽयं विधिर्विहितः कर्मणैव
[1]तद्वत् कृतं सञ्जय तच्च कर्म ।
तत्र योऽन्यत् [2]कर्मणस्साधु मन्ये-
न्मोघं तस्यालपितं दुर्बलस्य ॥ ८

कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा ।

---

1. ग-घ-ङ-म-मा—तद्वर्तते सञ्जय यत्र ।
2. ग-घ-ङ-मा—कर्मणस्साधु मन्यते । क—कर्मणस्साधु मन्ये ।
म—यत्र कर्म तत्र योग्यं कर्मणस्साधु मन्ये ।

अहोरात्रे विदधत् कर्मणैव
[1]अतन्द्रितश्शश्वदुदेति सूर्यः ॥ ९

मासार्धमासानथ नक्षत्रयोगान्
अतन्द्रितश्चन्द्रमाश्चाभ्युपैति ।
अतन्द्रितो दहते जातवेदास्
समिद्ध्यमानः कर्म कुर्वन् प्रजाभ्यः ॥ १०

अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी बलेन ।
अतन्द्रिताश्शीघ्रमपो वहन्ति
सन्तर्पयन्त्यस्सर्वभूतानि नद्यः ॥ ११
अतन्द्रितो वर्षति भूरितेजास्
सन्नादयन्नन्तरिक्षं दिशश्च ॥ ११॥

अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन् बलभिद्देवतानाम् ।
हित्वा सुखं मनसश्च प्रियाणि
[2]देवश्शक्रः कर्मणा श्रैष्ठ्यमाप ॥ १२॥

[3]सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च ।

1. ख-ग-घ-ङ-म-मा—अतन्द्रितो नित्यमुदेति ।
2. अ—तेन शक्रः ।
3. अ-क-ख—सत्यधर्मौ ।

एतानि सर्वाण्युपसेवमानस्
[1]स देवराज्यं मघवान् प्राप मुख्यम् ॥ १३॥
बृहस्पतिर्ब्रह्मचर्यं चचार
समाहितस्संशितात्मा यथावत् ।
हित्वा सुखं प्रतिरुध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः ॥ १४॥
तथा नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽ[2]थाश्विनौ च । १५
यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरसश्च सूत ।
[3]ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च
निषेवमाणा ऋषयोऽमुत्र भान्ति ॥ १६
जानन्निमं सर्वलोकस्य धर्मं
ब्राह्मणानां क्षत्रियाणां विशां च ।
स कस्मात् त्वं ज्ञानिनां ज्ञानवांश्च
व्यायच्छसे सञ्जय कौरवार्थे ॥ १७
आम्नायेषु नित्यसंयोगमस्य
तथाऽश्वमेधे राजसूये च विद्धि ।

---

1. ख-घ-ङ-ग-मा—यो देवराज्यं मघवान् प्राप ।
2. ख-ग-घ-ङ-मा—ये च दिव्याः।
3. घ-ङ-म-मा—ब्रह्मचर्यं वेदविद्याव्रतं च ।

संयुज्यते धनुषा वर्मणा च
[1]हस्त्यश्वपृष्ठे रथशस्त्रैश्च भूयः ॥ १८

ते चेदिमे कौरवाणामुपायम्
अवगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्याद्
आर्ये वृत्ते भीमसेनं निगृह्य ॥ १९

ते चेत् पित्र्ये कर्मणि वर्तमाना
आपद्येरन् दिष्टवशेन मृत्युम् ।
यथाशक्त्या[2]पूरयन्तस्स्वकर्म
तदप्येषां निधनं स्यात् प्रशस्तम् ॥ २०

उताहो त्वं मन्यसे [3]शाम्यमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं
तथैव ते वाचमिमां शृणोमि ॥ २१

चातुर्वर्ण्यस्य प्रथमं संविभागम्
अवेक्ष्य त्वं सञ्जय स्वं च कर्म ।

---

1. ग-ङ—अस्त्रैश्शस्त्रैः । घ—अस्त्रैरथैश्शास्त्रशास्त्रैश्च भूयः । म-मा—हस्तस्तोत्रै ।
2. ग-घ-ङ-म-मा—पूरयतां ।
3. ग-घ-ङ-म-मा—सर्वमेव ।

[1]निशम्याथो पाण्ववानां स्वकर्म
प्रशंस वा निन्द वा या मतिस्ते ॥ २२
अधीयीत ब्राह्मणोऽथो यजेत
दद्यादीयात् तीर्थमुख्यानि चैव ।
अध्यापयेद्याजयेच्चापि याज्यान्
[2]प्रतिग्रहं वा विदितात् प्रतीच्छेत् ॥ २३
अधीयीत क्षत्रियोऽथो यजेत
दद्या[3]द्दानं न तु याचेत किञ्चित् ।
न याजयेन्नापि चाध्यापयीत
एष स्मृतः क्षत्रधर्मः पुराणः ॥ २४
तथा राजन्यो रक्षणं वै प्रजानां
कृत्वा धर्मेणाप्र[4]मादोऽथ दत्त्वा ।
यज्ञैरिष्ट्वा [5]सर्ववेदानधीत्य
दानं दत्वा पुण्यकृदावसेद्गृहान् ॥ २५
[6]स धर्मात्मा धर्ममधीत्य पुण्यं
यदृच्छया व्रजति ब्रह्मलोकम् ॥ २५॥

1 ख-ग-घ-ङ-म-मा—निश्चित्य त्वं ।
2. ग-घ-ङ-म-मा—प्रतिग्रहान् वा विदितानुपेयात् ।
3. ग-घ-ङ-म-मा—द्धनं ।
4. ख-ग-घ-ङ-म-मा—मत्तो ।
5. ख-घ-ग-ङ-म-मा—सर्वदेवान् स्वधर्माद् दारान् कृत्वा ।
6. घ-ङ-म—नास्तीदमर्धम् । ख—नास्तीतः सार्धः श्लोकः ।

वैश्योऽधीत्य कृषिगोरक्षपण्यैर्
विर्त्तं चित्वा पालयन्नप्रमत्तः ।
प्रियं कुर्वन् ब्राह्मणक्षत्रियाणां
धर्मशीलः पुण्कृदावसेद्गृहान् ॥ २६॥

परिचर्या वन्दनं ब्राह्मणानां
नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितस्स्याद्
एष [1]श्रुतश्शूद्रधर्मः पुराणः ॥ २७॥

एतान् राजा पालयन्नप्रमत्तो
नियोजयन् सर्ववर्णान् स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामात् ॥ २८॥

[2]श्रेयांस्तस्माद्यदि विद्येत कश्चिद्
अभिज्ञातस्सर्वधर्मोपपन्नः ।
[3]सदा दुष्टाननुशिष्यन् प्रजानाम्
न चैतद्बुध्येदिति तस्मिन् न साधुः ॥ २९॥

---

1. क-ख-ग-घ-ङ-म-मा—स्मृतः ।
2. ख-ग-घ-ङ-म-मा—यत्ताप्रमत्तो रक्षति भूमिपालो
नियोजयन् स्वेषु धर्मेषु वर्णान् ।
[पाठान्तरम्]

3. अ-क—स तु दुष्टमनुशिष्यन् प्रजानां ।
एतद्बुध्ये [illegible] च तस्मिन् न साधुः । [पाठान्तरम्]

यदा गृध्येत् परभूतौ नृशंसो
विधिप्रकोपाद्बलमाददानः ।
[1]ततो राज्ञां भविता युद्धमेतत्
तत्र जातं वर्म शस्त्रं धनुश्च ॥ ३०॥

इन्द्रेणैतद्दस्युवधाय कर्म
उत्पादितं वर्म शस्त्रं धनुश्च॥ ३१

तत्र पुण्यं दस्युवधेन लभ्यते
सोऽयं दोषः कुरुभिस्तीव्ररूपः ।
अधर्मज्ञैर्धर्ममबुध्यमानैः
प्रादुर्भूतस्सञ्जय साधु तन्न ॥ ३२

तत्र राजा धृतराष्ट्रस्सपुत्रो
धर्म्यं हरेत् पाण्डवानामकस्मात् ।
नावेक्षन्ते राजधर्मं पुराणं
तदन्वयाः कुरवस्सर्व एव ॥ ३३

स्तेनो हरेद्यत्र धनं [2]ह्यदृष्टः
प्रसह्य वा यत्र हरेत [3]दृष्टः ।
उभौ गर्ह्यौ भवतस्सञ्जयैतौ
किं [4]वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ३४

1. अ-क—नास्तीदमधर्मम् ।
2. ग-म—प्रनष्टः । मा—प्रनष्टं । ख-घ-ङ—प्रणष्टः ।
3. ख-घ-ग-ङ-म-मा—दृश्यः ।
4. ग—नः । घ-म-मा—नः पृथक्त्व धृतराष्ट्रस्य पुत्रे ।

सोऽयं लोभान्मन्यते धर्ममेनं
यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पाण्डवानां [1]निविष्टस्
तं नः कस्मादाददीरन् परे वै ॥ ३५

अस्मिन् पदे युध्यतां नो वधोऽपि
श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम् ।
एतान् धर्मान् कौरवाणां पुराणान्
आचक्षीथास्सञ्जय राजमध्ये ॥ ३६

एते मन्दा मृत्युवशाभिपन्नास्
समानीता धार्तराष्ट्रेण मूढाः ।
इदं पुनः कर्म पापीय एव
सभामध्ये पश्य वृत्तं कुरूणाम् ॥ ३७

प्रियां भार्यां द्रौपदीं पाण्डवानां
यशस्विनीं शीलवृत्तोपपन्नाम् ।
[2]यदुपैक्षन्त कुरवो भीष्ममुख्याः
कामानुगेनोपरुद्धां व्रजन्तीम् ॥ ३८

[3]तां चेत् तदा ते सकुमारवृद्धा
[4]अपालयिष्यन् कुरवस्समेताः ।

---

1. म-मा—निविष्टो न नः । ग—विशिष्टो न नः ।
ख-ङ—विशिष्टो धनं । ख—विनष्टो धनं ।
2. ग-ख-ङ-म-मा—यदुपेक्षन्ते । 3. अ-क-ख — रुदन्तीं तां
4. ग-म-मा—अवारयिष्यन् । अ-क—नावारयिष्यन् ।

मम प्रियं धृतराष्ट्रोऽकरिष्यत्

पुत्राणां च कृतमस्याभविष्यत् ॥ ३९

दुश्शासनः प्रातिलोम्यान्निनाय

सभामध्ये श्वशुराणां च कृष्णाम् ।

सा तत्र [1]नीता करुणं व्यपेक्ष्य

नान्यं क्षत्तुर्नाथमवाप कञ्चित् ॥ ४०

कार्पण्यादेव सहितास्तत्र [2]भूपा

नाशक्नुवन् प्रतिवक्तुं सभायाम् ।

एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो

धर्मं बुध्वा प्रत्युवाचाल्पबुद्धिम् ॥ ४१

अनुक्त्वा तं धर्ममेतं सभायाम्

अथेच्छसे पाण्डवस्योपदेष्टुम् ॥ ४१॥

कृष्णा त्वेतत् कर्म चकार शुद्धं

सुदुष्करं तत्र सभां समेत्य ।

येन कृच्छ्रात् पाण्डवानुज्जहार

तथाऽऽत्मानं नौरिव सागरौघात् ॥ ४२॥

यत्राब्रवीत् सूतपुत्रस्सभायां

[3]कृष्णां स्थितां श्वशुराणां समीपे ॥ ४३

---

1. ख-घ-ग-ङ-म—दीना ।
2. घ-ङ-म-मा—राज्ञो ।
3. ख-ग-घ-ङ-म-मा—प्राप्तां कृष्णां परिषदो वै सकाशे ।

न ते गतिर्विद्यते याज्ञसेनि
प्रपद्येथा धार्तराष्ट्रस्य वेश्म ।
पराजितास्ते पतयो [1]न सन्ति
पतिं चान्यं भामिनि त्वं वृणीष्व ॥ ४४

यो बीभत्सोर्हृदये प्रोत आसीद्
अस्थि च्छिन्दन् मर्मघाती [2]सुघोरः ।
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः
प्रतिष्ठितो हृदये फल्गुनस्य ॥ ४५

[3]कृष्णाजिनानि परिधत्स्यमानान्
दुश्शासनः कटुकानभ्यभाषत् ।
एते सर्वे षण्डतिला विनष्टाः
क्षयं गता नरकं दीर्घकालम् ॥ ४६

गान्धारराजश्शकुनिर्निकृत्या
यदब्रवीद् द्यूतकाले स पार्थम् ।
[4]पराजितो नकुलः किं तवास्ति
कृष्णया त्वं दीव्य वै याज्ञसेन्या ॥ ४७

1. ग-घ-ङ—हि सर्वे । ख-म-मा—हि भद्रे ।
2. ग-घ-ङ-म-मा—पृषत्कः ।
3. ख-ग-घ-ङ-म-मा—कृष्णां जितां वै परिभर्त्समानो
दुश्शासनो यान् कटुकानभाषत् । [पाठान्तरम्]
4. अ-क—कोशयोः इदमर्धं नास्ति

जानासि त्वं सञ्जय सर्वमेतत्
द्यूते वाक्यं गर्ह्यमेवं यथोक्तम् ॥ ४७॥

स्वयं त्वहं प्रार्थये तत्र गन्तुं
समाधातुं कार्यमेतद्विपन्नम् ।
[1]जानासि त्वं धार्तराष्ट्रस्य मोहं
दुरात्मनः पापवशानुगस्य ॥ ४८॥

[2]अहापयित्वा यदि पाण्डवार्थं
शमं कुरूणामपि चेच्चरेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ४९॥

अपि मे वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अपेक्षेरन् धार्तराष्ट्रास्समर्था
मां च प्राप्तं कौरवाः पूजयेयुः ॥ ५०॥

अतोऽन्यथा रथिना फाल्गुनेन
भीमेन चैवाहवदंशितेन ।

---

1. अ-क-ख-म-मा—नास्तीदमर्धम् ।
2. मा—अहं प्रयात्वा कुरुपाण्डवार्थं हितं ।
ग-म—अहापयिष्यन् कुरुपाण्डवार्थमहं ।
ख-घ-ङ—अहापयिष्यन् यदि पाण्डवार्थमहं कुरूणामथ चेच्चरेयम् ।

बलोत्सिक्तान् धार्तराष्ट्रांश्च विद्धि
प्रदह्यमानान् कर्मणा स्वेन [1]पापान् ॥ ५१॥

पराजितान् पाण्डवेयांस्तु वाचो
रौद्रा रूक्षा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो
दुर्योधनं स्मारयिता हि काले ॥ ५२॥

सुयोधनो मन्युमयो महाद्रुमस्
स्कन्धः कर्णश्शकुनिस्तस्य शाखाः ।
दुश्शासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ५३॥

युधिष्ठिरो धर्ममयो महाद्रुमस्
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ५४॥

वनं राजा धृतराष्ट्रस्सपुत्रस्
सिंहा वने सञ्जय पाण्डवेयाः ।
सिंहाभिगुप्तं न वनं विनश्येत्
सिंहो न नश्येत वनाभिगुप्तः ॥ ५५॥

[2]निर्वनो वध्यते सिंहो निस्सिंहं वध्यते वनम् ।
तस्मात् सिंहो वनं रक्षेद् वनं सिंहं च पालयेत् ॥ ५६॥

---

1. ख-घ-ग-ङ—मन्दान् । म-मा—चोक्तम् ।
2. अ-क-ख—कोशेषु अयं श्लोको नास्ति ।

वनं राजा धृतराष्ट्रो वने व्याघ्राश्च पाण्डवाः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशुर्वनात् ॥ ५७॥

निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद् वनं व्याघ्रं च पालयेत् ॥ ५८॥

लता मता धार्तराष्ट्रास् सालास्सञ्जय पाण्डवाः ।
न लता वर्धते जातु [1]महाद्रुममनाश्रिता ॥ ५९॥

स्थिताश्शुश्रूषितुं पार्थास् स्थिता योद्धुमरिन्दमाः ।
यत् कृत्यं धृतराष्ट्रस्य तत् करोतु नराधिपः ॥ ६०॥

स्थिताश्शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधास्समर्थास्तद्विद्वन्नाचक्षीथा यथातथम् ॥ ६१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ५० ॥ सञ्जययानपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ६१॥ श्लोकाः]

## ॥ एकोनत्रिंशोऽध्यायः ॥

सञ्जयेन गमनाय युधिष्ठिराद्यामन्त्रणम् ॥ १ ॥ युधिष्ठिरेण सञ्जयं प्रति आभीष्मं आलञ्जकुब्जं सर्वेषु यथायोग्यं वन्दनादिपूर्वकं स्वस्य कुशलनिवेदनचोदनम् ॥ २ ॥ तथा दुर्योधनं प्रति सन्धिविग्रहान्यतरपक्षस्वीकरणाभ्यनुज्ञानकथनचोदनम् ॥ ३ ॥

सञ्जयः—
आमन्त्रये त्वां नरदेवदेव
गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु ।

1. ख-ग-घ-ङ—अनाश्रित्य महाद्रुमम्।

कच्चिन्न [1]वाचा वृजिनं हि किञ्चिद्
उच्चारितं [2]मे मनसोऽभिषङ्गात् ॥ १

जनार्दनं भीमसेनार्जुनौ च
माद्रीसुतौ सात्यकिं चेकितानम् ।
आमन्त्र्य गच्छामि शिवं सुखं वस्
सौम्येन मां पश्यत चक्षुषा नृपाः ॥ २

युधिष्ठिरः—
अनुज्ञातस्सञ्जय स्वस्ति गच्छ
न [3]नस्स्मरस्यप्रियं जातु विद्वन् ।
विद्मश्च त्वां ते च वयं च सर्वे
शुद्धात्मानं मध्यगतं सभास्थम् ॥ ३

आप्तो दूतस्सञ्जय सुप्रियोऽसि
कल्याण[4]वान् शीलवांस्तृप्तिमांश्च ।
न मुह्येस्त्वं सञ्जय जातु मत्या
न च क्रुद्ध्येरुच्यमानोऽपि तत्त्वम् ॥ ४

न मर्मगां जातु वक्ताऽसि रूक्षां
नोत स्तुतिं कटुकां नोत शुष्काम् ।

1. अ-क—वाचो । 2. ग-घ-ङ-म-मा—ते ।
3. ग-घ-ख-ङ-म-मा—नोऽकार्षीरप्रियं जातु किञ्चित् ।
4. घ-ख-ङ—वान्दृष्टिमां ।

धर्मारामामर्थवतीमहिंस्राम्
एतां वाचं तव जानीम सूत ॥ ५

त्वमेव नः प्रियतमोऽसि दूत
इहागच्छेद्विदुरो वा द्वितीयः ।
अभीक्ष्णदृष्टोऽसि पुरातनस्त्वं
धनञ्जयस्यात्मसमस्सखाऽसि ॥ ६

इतो गत्वा सञ्जय क्षिप्रमेव
उपातिष्ठेथा [1]ब्राह्मणान् ये तदर्हाः ।
विशुद्धवृत्ताश्च गुणोपपन्नाः
कुले जातास्सर्वधर्मोपपन्नाः ॥ ७

स्वाध्यायिनो ब्राह्मणा भिक्षवश्च
तपस्विनो ये च नित्या वनेषु ।
अभिवाद्य तान् मद्वचनेन वृद्धांस्
तथैव तान् कुशलं तात पृच्छेः ॥ ८

पुरोहितं धृतराष्ट्रस्य राज्ञस्
तथाऽऽचार्यानृत्विजो ये च तस्य ।
तांश्चैव त्वं सहितान् वै यथावत्
सङ्गच्छेथाः कुशलेनैव सूत ॥ ९

1. अ-क-ग—ब्राह्मणानेतदर्हान् । घ-ङ—ब्राह्मणान् वेदगर्भान् । ख—ब्राह्मणानुत्तमांश्च ।

[1]ततोऽव्यग्रस्तन्मनाः प्राञ्जलिश्च
कुर्या नमो मद्वचनेन तेभ्यः ॥ ९॥

[2]अश्रोत्रिया ये च वसन्ति वृद्धा
मनस्विनश्शीलबलोपपन्नाः ।
आशंसन्तोऽस्माकमनुस्मरन्तो
यथाशक्ति धर्ममात्रं चरन्तः ॥ १०॥

श्लाघस्व मां कुशलिनं स्म तेभ्यो
ह्यनामयं तात पृच्छेर्जघन्यम् ॥ ११

ये जीवन्ति व्यवहारेण राष्ट्रे
पशूंश्च ये पालयन्तो वसन्ति ।
कृषीवला बिभ्रति ये च लोकं
तेषां सर्वेषां कुशलं स्म पृच्छेः ॥ १२

आचार्य इष्टो नयगो विधेयो
वेदानभीप्सुर्ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात् [3]पुनरेव चक्रे
द्रोणः प्रसन्नोऽभिवा[4]द्यस्त्वयाऽसौ ॥ १३

1. अ-क-म-मा—नास्तीदमर्धम् ।
2. ख-घ-ङ-म-मा—इतः सार्धश्लोको नास्ति ।
3. ख-ग-घ-ङ-म-मा—सकलं च ।
4. ख-ग-घ-ङ-म-मा—द्यो यथार्हम् ।

[1]अधीत्य वेदांश्चरणोपपन्नो
　　योऽस्त्रं चतुष्पात् पुनरेव चक्रे ।
गन्धर्वपुत्रप्रतिमं तरस्विनं
　　तमश्वत्थामानं कुशलं स्म पृच्छेः ॥　　१४

शारद्वतस्यावसथं स्म गत्वा
　　महारथ[2]स्यास्त्रविदां वरस्य ।
त्वं मामभीक्ष्णं परिकीर्तयन् वै
　　कृपस्य पादौ सञ्जय पाणिना स्पृशेः ॥　　१५

यस्मिन् शौर्यमानृशंस्यं तपश्च
　　प्रज्ञा शीलं श्रुतरूपे धृतिश्च ।
पादौ गृहीत्वा कुरुसत्तमस्य
　　भीष्मस्य मां तत्र निवेदयेथाः ॥　　१६

प्रज्ञाचक्षुर्यः प्रणेता कुरूणां
　　बहुश्रुतो वृद्धसेवी मनीषी ।
तस्मै राज्ञे स्थविरायाभिवाद्य
　　आचक्षीथास्सञ्जय मामरोगम् ॥　　१७

ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो
　　मूर्खश्शठस्सञ्जय पापशीलः ।

---

1. अ-क-ख—अधीतविद्य ।
2. अ-क-ख—स्यात्मविदां ।

[1]प्रशास्ता वै पृथिवी येन सर्वा
सुयोधनं कुशलं तात पृच्छेः ॥ १८

[2]भ्राता कनीयानपि तस्य मन्दस्
तथाशीलस्सञ्जय सोऽपि शश्वत् ।
महेष्वासश्शूरतमः कुरूणां
दुश्शासनः कुशलं तात वाच्यः ॥ १९

[3]तथैव ये तस्य वशानुगाश्च
ये चाप्यन्ये पार्थिवाश्च प्रधानाः ।
तेभ्यो यथार्हं कुशलं च सर्वं
त्वया वाच्यं मद्वचनाच्च सूत ॥ २०

[4]बृन्दारकं कविमर्थेष्वमूढं
महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदाचिद्
वैश्यापुत्रं कुशलं तात पृच्छेः ॥ २१

[5]निकृन्तने देवने योऽद्वितीयश्
छन्नोपायस्साधुदेवी मताक्षः ।
यो दुर्जयो देवितव्ये न सङ्ख्ये
स चित्रसेनः कुशलं तात वाच्यः ॥ २२

---

1. ग-घ-ङ-यस्यापवादः पृथिवीं याति सर्वां । म-मा—प्रशासिता पृथिवी
2. अ-क—कोशयोः श्लोकचतुष्टयं नास्ति ।
3. ख—नास्त्ययं श्लोकः । 4. ख—नास्त्ययं श्लोकः ।
5. ख—कोश एकस्मिन्नेवायं श्लोको वर्तते ।

यस्य कामो वर्तते नित्यमेव
नान्यश्शमाद्भारतानामिति स्म ।
स बाह्लिकानामृषभो मनीषी
पुनर्यथा माऽभिवदेत् प्रसन्नः ॥ २३

गुणैरनेकैः प्रवरैश्च युक्तो
विज्ञानवान् नैव च निष्ठुरो यः ।
स्नेहादमर्षं सहते सदैव
स सोमदत्तः पूजनीयो मतो मे ॥ २४

अर्हत्तमः कुरुषु स सौमदत्तिस्
स नो भ्राता सञ्जय मत्सखा च ।
महेष्वासो रथिनामुत्तमोऽर्हस्
सहामात्यः कुशलं तस्य पृच्छेः ॥ २५

भूरिश्रवास्तात निपातयोधी
महेष्वासो रथिनामुत्तमोऽग्र्यः ।
गत्वा स्म तं मद्वचनेन ब्रूयाश्
शल्यं तथा मद्वचनात् प्रतीतः ॥ २६

महेष्वासो रथिनामुत्तमोऽग्र्यस्
समश्शलो रक्षिता पृष्ठमस्य ।

[1]ह्रीनिषेवो देविता यो मताक्षस्
सत्यव्रतः पुरुमित्रो जयश्च ॥ २७

ये प्रस्थानं तत्र मे नाभ्यनन्दंस्
तेषां सर्वेषां कुशलं तात पृच्छेः ॥ २७॥

ये चैवान्ये कुरुमुख्या युवानः
पुत्राः पौत्रा भ्रातरश्चैव ये नः ।
यं यमेषां मन्यसे येन योग्यं
तत्तत् प्रोच्यानामयं सूत वाच्याः ॥ २८॥

ये राजानः पाण्डवायोधनाय
समानीता धार्तराष्ट्रेण केचित् ।
[2]वसातयस्सात्वकाः केकयाश्च
तथाऽम्बष्ठा ये त्रिगर्ताश्च मुख्याः ॥ २९॥

प्राच्योदीच्या दाक्षिण्यात्याश्च शूरास्
तथा प्रतीच्याः पार्वतीयाश्च सर्वे ।
[3]ये चानृशंसाश्शीलवृत्तोपपन्नास्
तेषां सर्वेषां कुशलं सूत पृच्छेः ॥ ३०॥

---

1. मा—इदमर्धं न दृश्यते ।

2. ख—नास्तीदमर्धम् ।

3. ग-घ-ङ—अन्तर्भूताः शीलधर्मोपपन्नास् ।
म-मा—अनृशंसाश्शीलवृत्तोपपन्नास् ।

हस्त्यारोहा रथिनस्सादिनश्च
पदातय[1]श्चार्यसङ्घा महान्तः ।
आख्याय मां कुशलिनं स्म नित्यम्
अनामयं परिपृच्छेस्समग्रान् ॥ ३१॥

तथा राज्ञो ह्यर्थयुक्तानमात्यान्
दौवारिकान् ये च सेनां नयन्ति ।
आयव्ययौ ये गणयन्ति नित्यम्
अर्थांश्च ये महतश्चिन्तयन्ति ॥ ३२॥

[2]आख्याय मां कुशलिनं स्म नित्यम्
अनामयं परिपृच्छेस्समग्रान् ॥ ३३

[3]गान्धारराजश्शकुनिः पार्वतीयो
निकर्तने योऽद्वितीयोऽक्षदेवी ।
मानं कुर्वन् धार्तराष्ट्रस्य [4]सूत
मिथ्याबुद्धेः कुशलं तात पृच्छेः ॥ ३४

यः पाण्डवानेकरथेन वीरस्
समुत्सहत्यप्रधृष्यान् विजेतुम् ।
यो मुह्यतां मोहयिताऽद्वितीयो
वैकर्तनः कुशलं तस्य पृच्छेः ॥ ३५

---

1. ग–घ–ङ–म–मा—श्चाश्वसङ्घा ।
2. ग–घ–ङ—कोशेष्वेवेदमर्धं वर्तते ।
3. ग–घ—तथा च राजा । ख—नास्त्ययं श्लोकः ।
4. ग–घ–ङ—नित्यं मिथ्यावृत्तं । म–मा—नित्यं मिथ्यायुक्तं ।

स एव भक्तस्स गुरुस्स भृत्यस्
स वै पिता स च माता सुहृच्च ।
अगाधबुद्धिर्विदुरो दीर्घदर्शी
स नो मन्त्री कुशलं तं स्म पृच्छेः ॥ ३६

वृद्धास्त्रियो याश्च गुणोपपन्ना
ज्ञायन्ते नस्सञ्जय मातरस्ताः ।
ताभिस्सर्वाभिस्सहिताभिस्समेत्य
स्त्रीभि[1]र्वृद्धाभिरभिवादं वदेथाः ॥ ३७

कच्चित् पुत्रा जीवपुत्रास्सुसम्यग्
वर्तन्ते वै वृत्तिमनृशंसस्वरूपाम् ।
इति स्मोक्त्वा सञ्जय ब्रूहि पश्चाद्
अजातशत्रुः कुशली [2]सपुत्रः ॥ ३८

राज्ञो भार्यास्सञ्जय वेत्थ तत्र
तासां सर्वासां कुशलं तात पृच्छेः ।
सुसङ्गुप्ता[3]स्सुरभयोऽनवद्याः
कच्चिद्गृहानावसथाप्रमत्ताः ॥ ३९

---

1. ग—श्वश्रूभि ।
ख-ङ-म-मा—श्वश्रूभिरभिवाद्यानुपृच्छेः ।
2. ख-ग-घ-ङ—सभृत्यः ।
3. ग-घ-ङ—श्वशूरनार्यो ।

कच्चिद्वृत्तिं श्वशुरेषु [1]भद्राः
कल्याणीं वर्तध्वमनृशंसरूपाः ।
यथा च वस्स्युः पतयोऽनुकूलास्
तथा वृत्तिमात्मनस्स्थापयध्वम् ॥ ४०

[2]या नस्स्नुषास्सञ्जय वेत्थ तत्र
प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः ।
प्रजावत्यो ब्रूहि समेत्य ताश्च
युधिष्ठिरो वोऽभ्यवदत् प्रसन्नः ॥ ४१

कन्यास्स्वजेथास्सदनेषु सञ्जय
अनामयं मद्वचनेन [3]पृच्छेः ।
कल्याणा वस्सन्तु पतयोऽनुकूला
यूयं पतीनां भवतानुकूलाः ॥ ४२

अलङ्कृता वस्त्रवत्यस्सुगन्धा
अबीभत्सास्सुखिता भोगवत्यः ।
लघु यासां दर्शनं वाक् च लघ्वी
वेश्यास्त्रियः कुशलं तात पृच्छेः ॥ ४३

---

1. ग-घ-ख-ङ—भद्रा कल्याणवृत्तीरनृशंसरूपाः।
मा—शुभ्राः कल्याणवृत्तिरनृशंसरूपा।
2. ख—नास्त्ययं श्लोकः।
3. अ-क-ख—पृष्ट्वा।

दासीपुत्रा ये च दासाः कुरूणां
तदाश्रया बहवः कुब्जखञ्जाः ।
[1]आख्याय मां कुशलिनं स्म तेभ्योऽ
प्यनामयं परिच्छेर्जघन्यम् ॥ ४४

कच्चिद्वृत्तिर्वर्तते वै पुराणी
कच्चिद्भोगान् धार्तराष्ट्रो ददाति ।
अङ्गहीनान् कृपणान् वामनान् वा
यानानृशंस्याद्धृतराष्ट्रो बिभर्ति ॥ ४५

अन्धाश्च सर्वे बधिरास्तथैव
हस्ताजीवा बहवो येऽत्र सन्ति ।
आख्याय मां कुशलिनं स्म तेभ्योऽ
प्यनामयं परिपृच्छेर्जघन्यम् ॥ ४६

मा भैष्ट दुःखेन कुजीवितेन
नूनं कृतं परलोकेषु पापम् ।
निगृह्य शत्रून् सुहृदोऽनुगृह्य
वासोभिरन्नेन च वो भरिष्ये ॥ ४७

न चाप्येतच्छक्यमेकेन वक्तुं
नानादेश्या बहवो जातिसङ्घाः ।
विप्रोषितो बालवद् द्रष्टुमिच्छन्
नमस्येऽहं सञ्जय भैमसेनान् ॥ ४८

---

1. अ—तथा काणाश्चाङ्गहीनाश्च सर्वे । [अधिकः पाठः]

ते मे यथा वाचमिमां यथोक्तां
त्वयोच्यमानां शृणुयुस्तथा कुरु ॥ ४८॥

सन्त्येव मे ब्राह्मणेभ्यः [1]कृतानि
भोग्यान्यथो विजयं वर्तयन्ति ।
पश्याम्यहं युक्तरूपांस्तथैव
तामेव सिद्धिं श्रावयेथा नृपं तम् ॥ ४९॥

[2]ये चानाथा दुर्बलास्सर्वकालम्
आत्मन्येव प्रयतन्तेऽथ मूढाः ।
तांश्चापि त्वं कृपणान् सर्वथैव
अस्मद्वाक्यात् कुशलं तात पृच्छेः ॥ ५०॥

ये चाप्यन्ये संश्रिता धार्तराष्ट्रान्
नानादिग्भ्योऽभ्यागतास्सूतपुत्र ।
दृष्ट्वा तांश्चैवार्हतश्चापि सर्वान्
संपृच्छेथाः कुशलं चाव्ययं च ॥ ५१॥

[3]एवं सर्वानागताभ्यागतांश्च
राज्ञो दूतान् सर्वदिग्भ्योऽभ्युपेतान् ।
पृष्ट्वा सर्वान् कुशलं तांश्च सूत
पश्चादहं कुशली तात वाच्यः ॥ ५२॥

---

1. अ-क-ख—कृतान् वै भावान् यथा नोत वा वर्तयन्ति ।
2. ख—नास्त्ययं श्लोकः ।
3. ख—श्लोकद्वयं न दृश्यते ।

न हीदृशास्सन्ति परे पृथिव्यां
ये योधका [1]धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु [2]नित्यो मम धर्म एव
महाबलश्शत्रुनिबर्हणाय ॥ ५३॥

इदं पुनर्वचनं धार्तराष्ट्रं
सुयोधनं [3]सञ्जय श्रावयेथाः ॥ ५४

यस्ते शरीरे हृदयं धुनोति
कामः कुरूनसपत्नोऽनुशिष्याम् ।
न विद्यते युक्तिरेतस्य काचि-
न्नैवं विधास्याम यथा प्रियं ते ॥ ५५

ददस्व वा शक्रपुरीं ममैव
युध्यस्व वा भारतमुख्य वीर ॥ ५५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

॥ ५० ॥ सञ्जययानपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये ५५॥ श्लोकाः ]

---

1. ग-घ-ङ-म-मा—धार्तराष्ट्रस्य सूत।
2. ग-घ-ङ-म-मा—युक्तो मम नित्यमेव।
3. ग-घ-ङ-म-मा—मद्वचनेन ब्रूहि।

## ॥ त्रिंशोऽध्यायः ॥

युधिष्ठिरेण सञ्जयं प्रति धृतराष्ट्रभीष्मयोरभिवादनपूर्वकं सन्धिकरण-विज्ञापननिवेदनचोदनम् ॥ १ ॥ तथा दुर्योधनं प्रति तत्कृतानयोपेक्षण-कथनपूर्वकं ग्रामपञ्चकदानेन सन्धिकरणसन्देशः ॥ २ ॥

युधिष्ठिरः—

उत सन्तमसन्तं वा [1]बालं धीरं च सञ्जय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ १

उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २

[2]बलं जिज्ञासमानस्य आचक्षीथा यथातथम् ।
[3]अथो मन्त्रं मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ३

गावल्गणे कुरून् गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसङ्गृह्य ततः पृच्छेरनामयम् ॥ ४

ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन् वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ५

तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम ।

1. ग-ब-ङ—जडं । म-मा—जडं वीरं च ।
2. म-मा-ङ—अलं विज्ञापनाय स्याद् ।
3. ग-ब-ङ-म-मा—अथोपमन्त्रयेथास्त्वम् अन्योन्येनातिहृष्टवत् ।

राज्ये तान् स्थापयित्वाऽग्रे नोपेक्षेथा विनश्यतः ॥ ६

सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित् ।
तात संहत्य जीवामो [1]द्विषतां मा वशं गमः ॥ ७

तथा भीष्मं शान्तनवं भारतानां पितामहम् ।
शिरसा चाभिवन्देथा मम नाम प्रकीर्तयन् ॥ ८

अभिवाद्य च वक्तव्यस् ततोऽस्माकं पितामहः ॥ ८॥

भवता शन्तनोर्वंशो निमग्नः पुनरुद्धृतः ।
स त्वं कुरु तथा तात स्वमतेन पितामह ॥ ९॥

यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ १०

तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य [2]भाषस्व हितकामो युधिष्ठिरम् ॥ ११

अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनम् अनुनीय पुनः पुनः ॥ १२

अपापां यदुपैक्षन्त कृष्णामेतां सभागताम् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १३

---

1. ख-घ-ङ-म—मा द्विषद्भयो वशं गताः ।
2. ग-घ-ङ-म-मा—भाषेथाः शमकामो युधिष्ठिरः ।

[1]एवं पूर्वापरान् क्लेशान् अतितिक्षन्त पाण्डवाः ।
बलीयांसोऽपि सन्तो यत् तत् सर्वं कुरवो विदुः ॥ १४

यन्नः प्राव्राजयस्सौम्य अजिनैः प्रतिवासितान् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ १५

[2]यत्तत् सभायामाक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुश्शासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ १६

यथोचितं स्वकं भागं लभेमहि परन्तप ।
निवर्तय परद्रव्याद् बुद्धिं गृद्धां नरर्षभ ॥ १७

शान्तिरेवं भवेद्राजन् प्रीतिरेव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ १८

कुशस्थलं वृकस्थलम् अवन्तीं वारणावतम् ।
अवसानं भवेदत्र किञ्चिदेकं च पञ्चमम् ॥ १९

भ्रातॄणां देहि पञ्चानां पञ्च ग्रामान् सुयोधन ।
शान्तिर्नोऽस्तु महाप्राज्ञ भ्रातृभिस्सह सञ्जय ॥ २०

भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।
स्मयमानास्समायान्तु पाञ्चालाः कुरुभिस्सह ॥ २१

---

1. ख-घ-ङ—श्लोकोऽयं नास्ति ।
2. अ-क—यत्तत् कुन्तीमतिक्रम्य

अक्षतान् कुरुपाञ्चालान् पश्येयमिति कामये ।
सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ २२

अलमेव शमायास्मि तथा युद्धाय सञ्जय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

॥ ५० ॥ सञ्जययानपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ एकत्रिंशोऽध्यायः ॥

पाण्डवानुज्ञातेन सञ्जयेन रात्रौ धृतराष्ट्रमुपगम्य अभिवादनपूर्वकं युधिष्ठिरकृतकुशलप्रश्नादिकथनम् ॥ १ ॥ तथा धृतराष्ट्रं विगर्ह्य युधिष्ठिर-वचनस्य श्वः कथनकथनपूर्वकं स्वभवनगमनम् ॥ २ ॥

---

**वैशम्पायनः—**

धर्मराजस्य तु वचश्श्रुत्वा पार्थो धनञ्जयः ।
उवाच सञ्जयं तत्र वासुदेवस्य शृण्वतः ॥ १

**अर्जुनः—**

पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं सपुत्रं शल्यं च महाराजं च बाह्लिकम् ॥ २

विकर्णं सोमदत्तं च शकुनिं चापि सौबलम् ।

विविंशतिं चित्रसेनं जयत्सेनं च सञ्जय ॥　　३
भगदत्तं तथा चैव शूरं रणकृतां वरम् ॥　　३॥

ये चाप्यन्ये कुरवस्तत्र सन्ति
राजानश्चेद्भूमिपालास्समेताः ।
युयुत्सवः पार्थिवास्सैन्धवाश्च
समानीता धार्तराष्ट्रेण सूत ॥　　४॥

यथान्यायं कुशलं वन्दनं च
समागमे मद्वचनेन वाच्याः ॥　　५
ततो ब्रूयास्सञ्जय राजमध्ये
दुर्योधनं पापकृतां प्रधानम् ॥　　५॥

वैशम्पायनः—
एवं प्रतिष्ठाप्य धनञ्जयस्तं
ततोऽर्थवद्धर्मवच्चैव पार्थः ।
उवाच वाक्यं स्वजनप्रहर्षं
वित्रासनं धृतराष्ट्रात्मजानाम् ॥　　६॥

अर्जुनेन समादिष्टस् तथेत्युक्त्वा तु सञ्जयः ।
पार्थानामन्वयामास केशवं च यशस्विनम्* ॥　　७॥

अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥　　८॥

* म-मा—अत्राध्यायसमाप्तिर्दृश्यते ।

[1]तदा तु सञ्जयः क्षिप्रम् एकाह्नेन परन्तपः।
याति स्म हास्तिनपुरं निशाकाले परन्तप ॥ ९॥

सम्प्राप्य हास्तिनपुरं शीघ्रमश्वैर्महाजवैः ।
अन्तःपुरमुपस्थाय द्वास्थं वचनमब्रवीत् ॥ १०॥

**सञ्जयः—**

आचक्ष्व धृतराष्ट्राय द्वास्थ मां समुपागतम् ।
सकाशात् पाण्डुपुत्राणां सञ्जयं मा चिरं कृथाः ॥ ११॥

[2]जागर्ति चेदभिवदेस्त्वं हि द्वास्थ
प्रविशेयं विदितो भूमिपस्य ॥ १२

**द्वास्थः—**

सञ्जयोऽयं भूमिपते नमस्ते
दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशात्
प्रशाधि राजन् किमयं करोतु ॥ १३

**धृतराष्ट्रः—**

आचक्ष्व मां सुखिनं कल्यमस्मै
प्रवेश्यतां स्वागतं सञ्जयाय ।

---

1. अ-क—कोशयोः अयं श्लोको नास्ति।
2. म-मा—कोशयोरेवेदमर्धं वर्तते।
ग-ङ—जागर्ति चेदभिवाद्योपवृत्तो
निवेद्योऽहं विदितो भूमिपस्य। [ पाठान्तरम् ]

न चाहमेतस्य भवाम्य[1]काल्यस्
स मे कस्माद्वारि [2]तिष्ठेच्च सूतः ॥ १४

वैशम्पायनः—
ततः प्रविश्यानुमते नृपस्य
महावेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिस्सूतपुत्रः ॥ १५

सञ्जयः—
सञ्जयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव [3]पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ १६
स ते पुत्रान् पृच्छति प्रीयमाणः
कच्चित् पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिस्सचिवैश्च राजन्
ये चापि त्वामुपजीवन्ति तैश्च ॥ १७

धृतराष्ट्रः—
[4]अभिनन्द्य त्वां तात वदामि सञ्जय
अजातशत्रुं च सुखेन पार्थम् ।

---

1. अ—कालः । म—काल्यमस्मै ।
2. ग-घ-ङ—तिष्ठेत सूतः । म-मा—तिष्ठेत क्षत्तः ।
अ-क—तिष्ठेच्च सक्तः
3. ख-घ-ङ—पार्थान् । 4. ख-ग-घ-ङ-म-मा—अभ्येत्य ।

कच्चित् स राजा कुशली सपुत्रस्
सहामात्यस्सानुजः कौरवाणाम् ॥ १८

सञ्जयः—
सहामात्यः कुशली पाण्डुपुत्रो
[1]बुभूषते यच्च तेऽग्रे मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमान् शीलवांश्च ॥ १९

परो धर्मः पाण्डवस्यानृशंस्यं
धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रिये धर्महीने न पार्थोऽ-
नुरुध्यते भारत [2]तस्य बुद्धिः ॥ २०

[3]न त्वेव मन्ये पुरुषस्य कर्म
सम्पद्यते सुप्रयुक्तं यथावत् ।
अकुर्वतस्स्याद्यदि चापि सर्वं
तस्मान्नाहुः पौरुषं कर्मणोऽन्यत् ॥ २१

मातुः पितुः कर्मणाऽभिप्रसूतस्
संवर्धते कर्मणा भोजनेन ।

1. ग-घ-ङ—भूयश्चातो । म-मा—भूयश्च ते ।
2. ख-ग-घ-ङ—तद्वितश्च । म-मा—तस्य विद्धि ।
3. अ-क—कोशयोः श्लोकद्वयं नास्ति

प्रियाप्रिये सुखदुःखे च राजन्
 निन्दाप्रशंसे च भजेत येन ॥ २२

परप्रयुक्तः पुरुषो विचेष्टते
 सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य
 मन्ये परं कर्म दैवं मनुष्यात् ॥ २३

इमं च दृष्ट्वा तव कर्मदोषं
 पापोदर्कं घोरमवर्णरूपम् ।
[1]यावत् परं कामयतेऽतिवेलं
 तावन्नरोऽयं लभते प्रशंसाम् ॥ २४

अजातशत्रुस्तु विहाय पापं
 जीर्णां त्वचं सर्प इवावमुच्य ।
विरोचते ह्यार्यवृत्तेन वीरो
 युधिष्ठिरस्त्वयि पापं विसृज्य ॥ २५

[2]अङ्गात्मनः कर्म निबोध राजन्
 धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राजन्
 भूयश्च पापं प्रसजेदमुत्र ॥ २६

---

1. ग—यावत् परः कामयतेऽतिकाल्यं ।
 ख-घ-ङ-म-मा—यावन्नरः कामयतेऽतिकाल्यं ।
2. अ-क—हन्तात्मनः

स त्वमर्थं संशयितं विना तैर्  
आशंससे पुत्रवशानुगस्सन् ।  
अधर्मशब्दश्च महान् पृथिव्यां  
नेदं कर्म त्वत्समं भारताग्र्य ॥ २७

हीनप्रज्ञो दौष्कुलेयो नृशंसो  
[1]धर्मद्वेषी क्षत्रविद्यास्वधीरः ।  
एवंधर्मा [2]नापदस्सन्तितीर्षे-  
[3]द्धीनो वीर्याद्यश्च भवेदशिष्टः ॥ २८

कुले जातो [4]बलवान् यो यशस्वी  
बहुश्रुतस्सुखजीवी जितात्मा ।  
धर्माधर्मौ [5]ग्रथितौ यो बिभर्ति  
स ह्यस्य दिष्टस्य वशादुपैति ॥ २९

कथं हि मन्त्राग्र्यधरो मनीषी  
धर्मार्थयोरापदि सम्प्रणेता ।  
[6]एवं युक्तस्सर्वमन्त्रैर्विहीनम्  
अनाशास्यं कर्म कुर्यादमूढः ॥ ३०

---

1. अ-क—दीर्घवेदी । म-मा—दीर्घवैरी ।
2. अ-क—नापदस्संश्रयेयुर् । 3. ग-घ-ङ-म-मा—हीनप्रवीर्यो यश्च ।
4. ग-घ-ङ—धर्मवान् । ख-म—धनवान् ।  
मा—धनधान्यो मनस्वी ।
5. ग—ग्रथितयोर्विपश्चिन्नान्यस्त ।  
ख-घ-ङ-म-मा—धर्मार्थयोर्ग्रथितयोर्विपश्चिन्नान्यस्त ।
6. क-ख—एवमुक्तस्सर्वमन्त्रै रधीनो नरो नृशंसं ।

तव ह्यमी मन्त्रविदस्समेत्य
समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान् निश्चयश्च
[1]कुरुक्षयो नियमेनोदपादि ॥ ३१

अकालिकं कुरवो नाभविष्यन्
पापेन चेत् पापमजातशत्रुः ।
इच्छेज्जातु त्वयि पापं विसृज्य
निन्दा चेयं तव लोकेऽभविष्यत् ॥ ३२

किमन्यत्र विषयादीश्वराणां
यत्र पार्थः परलोकं स्म द्रष्टुम् ।
[2]अत्यक्रामत् स तथा सर्वमर्त्यान्
स केशवो यस्य मनुष्यकारः ॥ ३३

एतान् गुणान् कर्मकृतानवेक्ष्य
भावाभावौ वर्तमानावनित्यौ ।
बलिर्हि राजा पारमविन्दमानो
नान्यत् कालात् कारणं तत्र मेने ॥ ३४

---

1. ख-ग-घ-ङ-कुरुक्षयार्थे नियतोप्यन्यपायि ।
म-मा-कुरुक्षयार्थे निरयो न्यपायी ॥
2. अ-क-अत्यक्रामेत् स तथा समं तत् स्यात् संशयो ।

चक्षुश्श्रोत्रे नासिका त्वक् च जिह्वा
ज्ञानस्यैतान्यायतनानि जन्तोः ।
[1]नातिप्रीतान्येव तृष्णाक्षये तु
तान्यव्यथो दुःख[2]भीतः प्रणुद्यात् ॥ ३५

न त्वेव मन्ये पुरुषस्य कर्म
संवर्तते सम्प्रयुक्तं यथावत् ।
मातुः पितुः कर्मणाऽभिप्रसूतस्
संवर्धते विधिवद्भोजनेन ॥ ३६

प्रियाप्रिये सुखदुःखे च राजन्
निन्दाप्रशंसे च भजन्त एनम् ।
परस्त्वेनं गर्हयतेऽपराधे
प्रशंसते साधुवृत्तं तमेव ॥ ३७

स त्वां गर्हे भारतानां विरोधाद्
अन्तो नूनं भवितायं प्रजानाम् ।
नो चेदिदं तव कर्मापराधात्
कुरून् दहेत् कृष्णवर्त्मेव कक्षम् ॥ ३८

---

1. अ-क—तानि प्रीतान्येव दृष्ट्वा क्षयान्ते तान्यव्यथो ।
2. अ-क—हीनः

त्वमेवैको जातु [1]पुत्रस्य राजन्
वशं गत्वा सर्वलोके नरेन्द्र ।
[2]यदात्मानं श्लाघसे द्यूतकाले
नागाश्शमं पश्य विपाकमस्य ॥ ३९

अनाप्तानां सङ्ग्रहात् त्वं नरेन्द्र
तथाऽऽप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्ताम्
अशक्तस्त्वं रक्षितुं कौरवेय ॥ ४०

अनुज्ञातो रथवेगावधूतश्
श्रान्तोऽभिपद्ये शयनं नृसिंह ।
प्रातश्श्रोतारः कुरवस्सभायाम्
अजातशत्रोर्वचनं समेताः ॥ ४१

धृतराष्ट्रः—
[3]अनुज्ञातोऽस्यावसथं परैहि
प्रपद्यस्व शयनं सूतपुत्र ।

---

1. ग-ब-ङ-म-मा—पुत्रेषु राजन् वंशं हन्ता ।
2. अ-क—कामात्मनः श्लाघनाद् द्यूतकाले-
मागाश्शमं पश्य विपाकमस्य ।
ख-ग-ङ-म-मा—नान्यच्छमात् पश्यसि पाकमस्य ॥
3. म-मा—श्लोकोऽयं न दृश्यते

प्रातश्श्रोतारः कुरवस्सभायाम्
अजातशत्रोर्वचनं [1]समेताः ॥ ४२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ ५० ॥ सञ्जययानपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[ अस्मिन्नध्याये ४२ श्लोकाः ]

[ समाप्तं सञ्जययानपर्व ]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

[ प्रजागरपर्व ]

धृतराष्ट्रेण रात्रौ विदुरानयनम् ॥ १ ॥ चिन्तया प्रजागरं गतेन धृतराष्ट्रेण दुर्योधनादिसुखोपायप्रश्ने विदुरेण नीतिकथनपूर्वकं पाण्डवेभ्यो राज्यदानस्य तदुपायत्वकथनम् ॥ २ ॥

---

वैशम्पायनः—

द्वास्स्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ॥ ॥

धृतराष्ट्रः—

विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ १

वैशम्पायनः—

प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ॥ १॥

---

1. ख-ग-घ-ङ—यथोक्तम् ।

दूतः—

ईश्वरस्त्वां महाराजो महाप्राज्ञो दिदृक्षति ॥ २

वैशम्पायनः—

एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वास्स्थं मां [1]प्रतिपादय ॥ ३

द्वास्स्थः—

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४

धृतराष्ट्रः—

प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने ॥ ५

द्वास्स्थः—

प्रविशान्तःपुरं क्षत्तर् महाराजस्य धीमतः ।
न हि ते दर्शनेऽकाल्यो जातु राजाऽब्रवीद्धि माम् ॥ ६

वैशम्पायनः—

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत् प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७

विदुरः—

विदुरोऽहं महाप्राज्ञ सम्प्राप्तस्तव शासनात् ।
यदि किञ्चन कर्तव्यम् अयमस्मि प्रशाधि माम् ॥ ८

1. ख-घ-ग-ङ-मा—प्रतिवेदय । म—प्रत्यवेदयत् ।

धृतराष्ट्रः—

सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोश्श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९

तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत् प्रजागरम् ॥ १०

जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद् ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११

यतः प्राप्तस्सञ्जयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥ १२

[1]तन्मे ब्रूहि विदुर त्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ।
यथा च नस्तात हितं भवेच्च
प्रजाश्च सर्वास्सुखिता भवेयुः ॥ १३

विदुरः—

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरम् आविशन्ति प्रजागराः ॥ १४

1. अ-क—कोशयोः अयं श्लोको नास्ति ।

कच्चिदेतैर्महादोषैर् न स्पृष्टोऽसि नराधिप ।
कच्चिच्च परवित्तेषु गृध्नन् न परितप्यसे ॥ १५

धृतराष्ट्रः—
श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।
अस्मिन् राजर्षिवंशे हि [1]त्वमेकः प्राज्ञसत्तमः ॥ १६

विदुरः—
[2]राजा लक्षणसम्पन्नस् त्रैलोक्यस्याधिपो भवेत् ।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १७

विपरीततरश्च त्वं भागधेयेन लम्भितः ॥ १७॥

अर्चिषा प्रज्ञया चैव धर्मात्मा धर्मकोविदः ॥ १८

आनृशंस्यादनुक्रोशाद् धर्मात् सत्यात् पराक्रमात् ।
गुरुत्वं त्वयि सम्प्रेक्ष्य बहून् क्लेशांस्तितिक्षते ॥ १९

दुर्योधने सौबले च कर्णे दुश्शासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ २०

आत्मज्ञानं समारम्भस् तितिक्षा धर्मनित्यता ।
वाक्संयमश्च दानं च नैतेष्वेतानि कृत्स्नशः ॥ २१

एकस्माद्वृक्षाद्यज्ञपात्राणि राजन्
स्रुक् च द्रोणी वोढनी पीडनी च ।

1. अ-क—त्वमेको बुद्धिसम्मतः ।
2. अ-क—कोशयोः इत आरभ्य श्लोकषट्कं नास्ति ।

एतद्राजन् ब्रुवतो मे निबोध
एकस्माद्वै जायतेऽसच्च सच्च ॥ २२

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकश्श्रद्दधान एतत् पण्डितलक्षणम् ॥ २३

क्रोधो हर्षश्च दर्पश्च ह्रीस्स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २४

[1]यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ २५

यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ २६

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यस् स वै पण्डित उच्यते ॥ २७

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते [2]पण्डिता भरतर्षभ ॥ २८

क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे
तत् प्रज्ञानं प्रथमं पण्डितस्य ॥ २९

---

1. अ-क—कोशयोः अयं श्लोको नास्ति ।
2. अ-क—नराः पण्डितबुद्धयः ।

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ३०

निश्चित्य यः [1]प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ ३१

आर्यकर्माणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ३२

न हृष्यत्यात्मसम्माने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यस्स पण्डित उच्यते । ३३

तत्त्वज्ञस्सर्वभूतानां योगज्ञस्सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ३४

[2]प्रशस्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यस्स पण्डित उच्यते ॥ ३५

मनोज्ञस्सर्वभूतानां योगज्ञस्सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां स वै पण्डित उच्यते ॥ ३६

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ ३७

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यस्स पण्डित उच्यते ॥ ३८

---

1. ग-ब-ङ-म-मा—प्रकुरुते ।
2. अ-क—प्रवृत्तवाक्   ग-म-मा—शुद्धवाक्यश्च ।

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
[1]अर्थांश्च कर्मणा प्रेप्सुर् मूढ इत्युच्यते बुधैः ॥ ३९

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढस्स उच्यते ॥ ४०

अकामान् कामयति यः कामयानान परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ४१

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ४२

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ४३

[2]श्राद्धं पितृभ्यो नादत्ते दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढलक्षणम् ॥ ४४

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
[3]विश्वसित्यप्रशान्तेषु मूढचेता नराधमः ॥ ४५

परं क्षिपति दोषेण वर्तमानस्स्वयं तथा ।
यश्च क्रुध्यत्यनीशानस् स च मूढतमो नरः ॥ ४६

---

1. ग-व-म—अर्थांश्चाकर्मणा। मा—अर्थांश्च कर्मणा।
2. ख-घ-ङ-म-मा—नास्त्ययं श्लोकः
3. अ-क—अविश्वस्ते विश्वसिति

आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
[1]अलभ्यमिच्छन् नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ४७

अशिष्यं शास्ति यो राजन् यश्च शिष्यं न शास्ति च ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ४८

[2]एकस्सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४९

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ५०

एकं हन्यान्न वा हन्याद् इषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ५१

एकया द्वौ विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥ ५२

एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ५३

एकस्स्वादु न भुञ्जीत एकश्चार्थान् न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकस्सुप्तेषु जागृयात् ॥ ५४

एकमेवाद्वितीयं तद् यद्राजन् नावबुध्यसे ।

---

1. ख-ग-घ-ङ-म-मा—असाध्यं कर्म यः कुर्यान्मू ।
2. म-मा—अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
मा—विचरत्यसमुन्नद्धो यस्स पण्डित उच्यते । [अधिकः पाठः]

सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ५५

[1]एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
[2]यदेनं क्षमया युक्तम् अशक्तं मन्यते जनः ॥ ५६

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं सुखम् ।
क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ॥ ५७

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५८

अतृणे पतितो वह्निस् स्वयमेवोपशाम्यति ।
अक्षमावान् परं दोषैर् आत्मानं चैव योजयेत् ॥ ५९

एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिर् अहिंसैका सुखावहा ॥ ६०

द्वाविमौ ग्रसते भूमिः सर्पौ बिलशयाविव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ६१

[3]पृथिव्यां सागरान्तायां द्वाविमौ पुरुषाधमौ ।
गृहस्थो वै निरारम्भस् सारम्भश्चैव भिक्षुकः ॥ ६२

---

1. ङ—इदमर्धं नास्ति ।
2. ख-घ-ङ-मा—इतः श्लोकत्रयं नास्ति
3. अ-क-म-मा—कोशेषु श्लोकोऽयं नास्ति ।

द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके [1]महीयते ।
[2]अब्रुवन् परुषं किञ्चिद् असतोऽनर्चयंस्तथा ॥ ६३

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः ॥ ६४

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ६५

द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ६६

न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ६७

द्वावम्भसि प्रवेष्टव्यौ गले बध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ६८

द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६९

त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान् मध्यमश्श्रेष्ठ इति वेदविदो विदुः ॥ ७०

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत् तांस् त्रिविधेष्वेव कर्मसु ॥ ७१

त्रय एवाधना राजन् भार्या दासस्तथा सुतः ।
यत् ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ७२

---

1. अ-क-म—ऽधिरोचते ।
2. ख-ग-घ-ङ-मा—न ब्रूयात् ।

[1]हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस् त्रयो दोषा भयप्रदाः ॥ ७३
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस् तस्मादेतत् त्रयं त्यजेत् ॥ ७४
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेतान्छरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ॥ ७५
वरप्रदानं राष्ट्रं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृत्वा त्रीणि चैकं च तत् समम् ॥ ७६
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैस्सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ ७७
चत्वारि ते तात गृहे वसन्तु
श्रियाऽभिजुष्टस्य गृहस्थधर्मे ।
[2]वृद्धो ज्ञातिरवसन्नः कुलीनस्
सखा दरिद्रो भगिनी चानपत्या ॥ ७८
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
[3]पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७९

---

1. ख-घ-ङ-मा—इतः श्लोकचतुष्कं नास्ति
2. ख-घ-ङ-मा—श्रान्तो
3. ख—अर्धमिदं नास्ति

देवतानां च सङ्कल्पम् अनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ८०

पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ ॥ ८१

पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् ।
देवान् पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ८२

पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ८३

[1]पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ ८४

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ८५

षडिमान् पुरुषो जह्याद् भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यम् अनधीयानमृत्विजम् ॥ ८६

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ८७

षडेव तु गुणाः पुंसां न हातव्याः कदाचन ।
सत्यं दानमनालस्यम् अनसूया क्षमा धृतिः ॥ ८८

---

1. ख—श्लोकोऽयं नास्ति

षण्णामात्मनि नित्यानाम् ऐश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर् युज्यते विजितेन्द्रियः ॥ ८९

[1]अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि तात ॥ ९०

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ९१

प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ९२

[2]षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावस्सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ९३

षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताश्शिष्याः कृतदाराश्च मातरम् ॥ ९४

नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकान् ॥ ९५

आरोग्यमानृण्यमविप्रवासस्
सद्भिर्मनुष्यैस्सह सम्प्रयोगः ।

---

1. ख-घ-ङ-मा—श्लोकोऽयं नास्ति
2. ख-घ-ङ-मा—इतः श्लोकपञ्चकं नास्ति

स्वप्रत्यया वृत्तिरभीतवासष्
षट् जीवलोकस्य सुखानि राजन् ॥ ९६

ईर्ष्युर्घृणी न सन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९७

सप्त दोषास्सदा [1]राज्ञा हातव्या विजिगीषुणा ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ९८

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यम् अर्थदूषणमेव च ॥ ९९

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ १००

ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ १०१

नैनान् स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान् दोषान् नरः प्राज्ञो बुद्ध्वा बुध्वा विसर्जयेत् ॥ १०२

अष्टाविमानि हर्षस्य नवनीतानि भारत ।
[2]वर्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ॥ १०३

समागमश्च सखिभिर् महांश्चैव धनागमः ।

---

1. अ-क-म—राजन् हातव्या व्यसनोदयाः ।
2. ख—नास्तीदमर्धम्

पुत्रेण च परिष्वङ्गस् सन्निपातश्च मैथुने ॥ १०४

समये च प्रियालापस् स्वयूथेषु [1]समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ १०५

[2]अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमश्श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ १०६

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः ॥ १०७

दश धर्मान् न जानन्ति धृतराष्ट्र निबोध तान् ॥ १०७॥

मत्तः प्रमत्त उन्मत्तश् श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ॥ १०८॥

तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ॥ १०९

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ ११०

यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।

---

1. ग-ब-ङ-मा—च सन्नतिः।
2. ख-ब-ङ-मा—श्लोकोऽयं नास्ति

विशेषविच्छ्रुतवान् क्षिप्रकारी
तं सर्वलोकः कुरुते प्रमाणम ॥ १११

जानाति विश्वासयितुं मनुष्यान्
विज्ञातदोषेषु दधाति दण्डम् ।
जानाति [1]पथ्यं च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ ११२

सुदुर्बलं नावजानाति किञ्चिद्
युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ ११३

प्राप्यापदं न व्यथते कदाचिद्
उद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते [2]जितात्मा
धुरन्धरस्तस्य जितास्सपत्नाः ॥ ११४

अनर्थकं विप्रवासं गृहेभ्यः
पापैस्सन्धिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं
न सेवते यस्स सुखी सदैव ॥ ११५

---

1. अ-क-ख-म—मात्रां च
2. अ-क—महात्मा ।

न संरम्भेणारभते [1]त्रिवर्गम्
आकारितश्शंसति तत्त्वमेव ।
[2]न मित्रार्थे रोचयते विवादं
नापूजितः कुप्यति चाप्यमूढः ॥ ११६

न योऽभ्यसूयत्यनुकम्पते च
न दुर्बलः प्रातिभाव्यं करोति ।
[3]नाप्याह किञ्चित् क्षमते विवादं
सर्वत्र तादृग्लभते प्रशंसाम् ॥ ११७

यो नोद्धतं कुरुते जातु वेषं
न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्छितः कटुकान्याह किञ्चित्
प्रियं सदा तं कुरुते जनो हि ॥ ११८

न वैरमुद्दीपयति प्रशान्तं
न दर्पमारोहति शान्तिमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं
तमार्यशीलं परमाहु[4]रार्याः ॥ ११९

---

1. ग-घ-ङ—परार्थं न चानृतं ।
मा—ऽर्थवर्गं नाकारितं शंसति सत्यमेव ।
2. ग—न च स्त्रियार्थे यतते । ख-घ-ङ-मा—न च स्त्रियोऽर्थे यतते ।
3. ख-ग-घ-ङ-मा—न विग्रहाद्रोचयते विवादं ।
4. ग-घ-ङ—रग्र्यम् । मा—रथ्यम् ।

न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात् कुरुतेऽनुतापं
[1]स कथ्यते सत्पुरुषार्यशीलः ॥ १२०

देशाचारान् समयाञ्ज्ञातिधर्मान्
बुभूषते यस्स परावरज्ञः ।
स यत्र तत्राभिगतस्सदैव
महाजनस्याधिपत्यं करोति ॥ १२१

दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान् वर्जयेत् स प्रधानः ॥ १२२

दमं शौचं दैविकं मङ्गलानि
प्रायश्चित्तान् विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि
तस्योत्थानं देवता राधयन्ति ॥ १२३

समैर्विवाहं कुरुते न हीनैस्
समैस्सख्यं व्यवहारं कथाश्च ।

---

1. मा—न कत्थते सत्पुरुषस्सुशीलः ।

गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयास्सुनीताः ॥ १२४

मितं भुङ्क्ते संविभज्याश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितस्सं-
स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ १२५

चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किञ्चित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
[1]नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ १२६

यस्सर्वभूतप्रशमे निविष्टस्
सत्यो मृदुर्मानकृच्छुद्धभावः ।
अतीव स ज्ञायते ज्ञातिमध्ये
महामणिर्जात्य इव प्रसन्नः ॥ १२७

यश्चात्मनाऽपत्रपते भृशं नरस्
स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजास्सुमनास्समाहितस्
स्वतेजसा सूर्य इवावभासते ॥ १२८

---

1. ख-घ-ङ—स्वल्पो नास्य व्यथते । ग—स्वल्पो नास्य श्लथते ।
अ-क—स्वल्पोप्यस्य च्यवते कश्चिदर्थः ।
मा—स्वल्पं तस्य व्यथते कश्चिदर्थः ।

वने जाताश्शापदग्धस्य राज्ञः
पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताश्शिक्षिताश्च
तवादेशं पालयन्त्याम्बिकेय ॥ १२९

प्रदायैषामुचितं तात राज्यं
सुखी पुत्रैस्सहितो [1]मोदमानः ।
न देवानां नापि च मानुषाणां
भविष्यसि त्वं [2]गर्हणीयो नरेन्द्र ॥ १३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ५१ ॥ प्रजागरपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १३० श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

धृतराष्ट्रेण दुर्योधनादिश्रेयस्साधनप्रश्ने विदुरेण नीतिकथनपूर्वकं युधिष्ठिराय राज्यदानस्य तत्साधनत्वकथनम् ॥ १ ॥

धृतराष्ट्रः—
जाग्रतो दह्यमानस्य यत् कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थ[3]कुशलश्शुचिः ॥ १

1. ख-ग-घ-ङ-मा—वर्धयस्व । 2. अ-क-ख-म-मा—तर्कणीयो
3. अ-क-ख-ग-व-म—कुशलो ह्यसि ।

[1]तन्मां यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्व
[2]श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २

पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनात्मनाऽहम् ।
कवे तन्मे ब्रूहि [3]तत्त्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ३

विदुरः—
शुभं वा यदि वा पापं [4]प्रियं वा यदि वाऽप्रियम् ।
[5]अपृष्टस्तस्य तद्ब्रूयाद् यस्य नेच्छेत् पराभवम् ॥ ४

तस्माद्वक्ष्यामि ते राजन् [6]शममिच्छन् कुरून् प्रति ।
वचश्श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५

मिथ्योपेतानि कर्माणि सिद्ध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६

[7]अदैवयोगविहितं यत्तु कर्म न सिध्यति ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७

---

1. ख-ग-घ-ङ—तस्माद् । 2. ग-घ-ङ—श्रेयः पथ्यं ।
3. अ-क-ख—सर्वं । 4. अ-क—द्वेष्यं ।
5. ख-ग-घ-ङ-मा—नापृष्टः कस्यचिद्ब्रूयाद् । 6. अ-क-म-मा—भव ।
7. ख-ग-घ-ङ-मा—तथैव योगविहितं न सिद्ध्येद्यत् कर्म यन्नृप ।

[पाठान्तरम्]

अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
सम्प्रधार्य च कुर्वीत [1]न वेगेन समाचरेत् ॥ ८

अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
[2]कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १०

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११

न राज्यं प्राप्तमित्येव वर्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
[3]लोभाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ १३

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं [4]परिणमेद्यत्तु तद्ग्राह्यं भूतिमिच्छता ॥ १४

वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
न प्राप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ १५

---

1. ख-ग-घ-ङ—सहसा न।
2. ख—इतस्सार्धश्लोकद्वयं नास्ति।
3. ख-घ-ङ-मा—अन्नाभिलाषी।
4. ग-घ-ख-ङ-मा—च परिणामे यत् तदाद्यं

यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते [1]बीजाच्चैव फलं पुनः ॥ १६

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान् मनुष्येभ्य आदद्यादविहिंसया ॥ १७

[2]पुष्पं फलं विचिन्वंश्च मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाऽङ्गारकारकः ॥ १८

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा ॥ १९

अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः ।
कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ २०

अनर्थे चैव निरतम् अर्थे चैव पराङ्मुखम् ।
[3]अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ २१

[4]न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ २१॥

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ २२॥

कांश्चिदर्थान् नरः प्राज्ञो [5]लघुमूलान् [6]महाफलान् ।

---

1. ग-ङ—बीजं चैव फलात् पुनः । मा—बीजं चास्य फलं पुनः ।
2. ख-घ-ङ-मा—पुष्पं पुष्पं प्रचिन्वीत ।
3. मा—कोश एकस्मिन्नेवेदमर्धं वर्तते ।
4. मा—इदमर्धं नास्ति ।
5. ख-घ-ङ-मा—लघुयत्नान् ।
6 अ-क—महोदयान् ।

क्षिप्रमारभते कर्तुं न [1]दीर्घयति तादृशान् ॥ २३॥

ऋजु पश्यति यस्सर्वं चक्षुषानु पिबन्निव ।
आसीनमपि तूष्णीकम् अनुरज्यन्ति तं प्रजाः ॥ २४॥

[2]सुपुष्पितस्स्यादफलः फलितस्स्याद्दुरारुहः ।
अपक्वः पक्वसङ्काशो न च शीर्येत कर्हिचित् ॥ २५॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ २६॥

यस्मात् त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २७॥

पितृपैतामहं राज्यं प्राप्यापि स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २८॥

धर्ममाचरतो राज्ञस् सद्भिश्चरितमादितः ।
वसुधा वसुसम्पूर्णा वर्धते भूतिवर्धनी ॥ २९॥

अथ सन्त्यजतो धर्मम् अधर्ममनुतिष्ठतः ।
प्रतिसंवेष्टते भूमिर् अग्नौ चर्माहितं यथा ॥ ३०॥

य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यस् स्वराष्ट्रपरिपालने । ३१॥

1. अ-क—विघ्नयति ।
2. ख-ब-ङ-मा—श्लोकोऽयं नास्ति ।

धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३२॥

अप्युन्मत्तात् [1]प्रलपतो बालाच्च परिजल्पतः ।
सर्वतस्सारमादद्याद् [2]अश्मभ्य इव काञ्चनम् ॥ ३३॥

सुव्याहृतानि महतां सुकृतानि ततस्ततः ।
[3]सञ्चिन्वन् धीर आसीत सिलाहारी सिलं यथा ॥ ३४॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश् चक्षुर्भ्यामितरे जनाः ॥ ३५॥

भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुघा राजन् नैव तां वितुदन्त्यपि ॥ ३६॥

यदतप्तं प्रणमति न तत् सन्तापयन्त्यपि ।
यत् स्वयं नमते दारु न तत् सन्नामयेद्बुधः ॥ ३७॥

एतयोपमया धीरस् सन्नमेत बलीयसे ।
[4]इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३८॥

[5]पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।

---

1. मा—प्रलपतो बालाच्च परिसर्पतः ।
   ख-ग-घ-ङ—प्रलपतो बालादपि सुभाषितम् ।
2. ग-घ-ख-ङ-मा—पांसुभ्य ।
3. ख—इतः श्लोकद्वयं नास्ति । 4. मा—इदमर्धं नास्ति ।
5. ख—श्लोकोऽयं नास्ति ।

पतयो [1]बान्धवास्स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥　　३९॥

सत्येन रक्ष्यते धर्मो विद्या [2]योगेन रक्ष्यते ।
[3]मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥　　४०॥

मानेन रक्ष्यते धान्यम् अश्वान् रक्षेदनुक्रमात् ।
अभीक्ष्णदर्शनाद्गावस् स्त्रियो रक्ष्याः [4]कुशीलतः ॥　　४१॥

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥　　४२॥

य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥　　४३॥

अकार्यकरणाद्भीतः कार्याणां च विसर्जनात् ।
अकाले मन्त्रभेदाच्च [5]यो न माद्येत् स नोद्विजेत् ॥　　४४॥

विद्यामदो धनमदस् तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानां [6]न चैव स्युस्सतां मदाः ॥　　४५॥

असन्तोऽभ्य[7]र्थितास्सद्भिः कचित् कार्ये कदाचन ।

---

1. ग-घ-ङ—देवताः ।　　2. ङ-मा—ऽभ्यासेन ।
3. ख—नास्तीदमर्धम् ।
4. घ—कुचतसः ॥　ग-ङ-मा—कुचेलतः ॥
अ-क—स्त्रिया रक्षा कुचेलता ॥
5. ग-घ-ङ-मा—येन माद्येन्न तद्विभेत् ।
6. ख-घ-ग-ङ-मा—एत एव सतां दमाः ।
7. ग-ख-घ-ङ-म—र्थिताः ।　मा—र्थितास्सद्भिः किञ्चित् कार्यं ।

मन्यन्ते सन्तमात्मानम् असन्तमपि विश्रुतम् ॥ ४६॥

[1]गतिरात्मवतां सन्तस् सन्त एव सतां गतिः ।
असतां च गतिस्सन्तो न त्वसन्तस्सतां गतिः ॥ ४७॥

सभा जिता वस्त्रवता मृष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ४८॥

शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ४९॥

आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
[2]तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ५०॥

सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५१॥

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
[3]जीर्यन्त्यपि तु काष्ठानि दरिद्राणां महीपते ॥ ५२॥

अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
[4]उत्तमानां तु मर्त्यानाम् अवमानात् परं भयम् ॥ ५३॥

ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।

---

1. ख—नास्तीदमर्धम्। 2. ख-ग-घ-ङ-मा—लवणोत्तरं ।
3. ख-ग-घ-ङ-मा—दरिद्राणां तु राजेन्द्र काष्ठं वाऽश्माऽपि जीर्यते।
[ पाठान्तरम् ]
4. घ—सत्त्वं भयदमर्थानाम् अर्थानां मरणाद्भयम्। [अधिकः पाठः]

ऐश्वर्यमदमत्तो हि [1]नापदस्स विबुध्यते ॥ ५४॥

इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५५॥

यो जितः पञ्चवर्गेण [2]समाजेनानुकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५६॥

अविजित्य य आत्मानम् अमात्यान् विजिगीषते ।
अजितात्मा जितामात्यस् सोऽवशः परिहीयते ॥ ५७॥

[3]आत्मानमेव प्रथमं [4]क्लेशरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५८॥

वश्येन्द्रियं जिता[5]त्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरम् अत्यन्तं श्रीर्निषेवते ॥ ५९॥

रथश्शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्
दान्तैस्सुखं याति रथीव धीरः ॥ ६०॥

---

1. ख-ग-घ-ङ—नावतिष्ठति कुत्रचित् ।
मा—ऐश्वर्यमदमत्तानां गतिरूर्ध्वा न विद्यते ।
2. ख-ग-घ-ङ-मा—सहजेनात्मकर्शिना । क—सहजेनानुकर्षिणा ।
3. घ—इतः सार्धश्लोको नास्ति ।
4. ख-ग-ङ-मा—नियतं कुरुते वशे ।
5. ग-ङ-मा—मात्यं ।

एतान्य[1]नुगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ताः [2]हयाः पथि कुसारथिम् ॥ ६१॥

अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैरजितैर्बालस् सुदुःखं मन्यते सुखम् ॥ ६२॥

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६३॥

अर्थानामीश्वरो यस्स्याद् इन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्याद् ऐश्वर्याद्भ्रश्यते हि सः ॥ ६४॥

आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मैव ह्यात्मनो बन्धुर् आत्मैव रिपुरात्मनः ॥ ६५॥

[3]बन्धुरात्माऽऽत्मनस्तस्य येनैवात्माऽऽत्मना जितः ।
स एव नियतो बन्धुस् स एव नियतो रिपुः ॥ ६६॥

क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६७॥

समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति ।
स वै सम्भृतसम्भारस् सततं सुखमेधते ॥ ६८॥

---

1. ङ-मा—नि ।
2. ग-घ-ङ-मा—सरथं सारथिं हयाः।
3. ख-घ-ङ-मा—श्लोकोऽयं नास्ति।

यः पञ्चाभ्यन्तरान्शत्रून् अविजित्य [1]मनोमयान् ।
[2]जिगीषते रिपूनन्यान् विपदोऽभिभवन्ति तम् ॥ ६९॥

दृश्यन्ते हि महात्मानो बध्यमानास्स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद् राजानो राज्यविच्युताः ॥ ७०॥

[3]असन्त्यागात् पापकृतामपापांस्
तुल्यो दण्डस्स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्
तस्मात् पापैस्सह सन्धिं न कुर्यात् ॥ ७१॥

निजानुत्पततश्शत्रून् पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७२॥

अनसूयाऽऽर्जवं शौचं सन्तोषः प्रियवादिता ।
दमस्सत्यमनायासो [4]न भवन्ति दुरात्मनाम् ॥ ७३॥

आत्मज्ञानमनायासस् तितिक्षा धर्मनित्यता ।
[5]वाक् चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥ ७४॥

आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७५॥

हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।

1. ख-ग-घ-ङ—मतिक्षयात् । मा—मनीषया ।
2. ग-घ-ङ-मा—जिगीषति रिपूनन्यान् रिपवोऽ ।
3. अ-क-म—स्वसन्त्यागात् ।
4. ख-ग-घ-ङ—नैष मार्गो । 5. ख—दया च गुप्तदानं च ।

शुश्रूषा तु बलं स्त्रीणां क्षमा [1]गुणवतां बलम् ॥ ७६॥
वाक्संयमो हि नृपतेस् सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ७७॥
[2]अभ्यावहति कल्याणं विविधा वाक् सुभाषिता ।
सैव दुर्भाषिता राजन् अनर्थायोपपद्यते ॥ ७८॥
[3]रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७९॥
कर्णिनालीकनाराचान् [4]निर्हरन्ति शरीरतः ।
वाक्छल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ८०॥

[5]वाक्सायका वदनान्निष्पतन्ति
यैराहतश्शोचति रात्र्यहानि ।
परस्य वा मर्मसु ये पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ ८१॥

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ८२॥
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ८३॥

---

1. ख-ग-घ-ङ—बलवतां ।
2. ख—नास्त्ययं श्लोकः ।
3. ख-ग-घ-ङ-मा—संरोहति शरैर्विद्धं ।
4. ख-ग-घ-ङ-मा—त्रिस्सरन्ति । 5. ख—श्लोकोऽयं नास्ति ।

[1]न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ ८४॥

सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनानवबुध्यसे ॥ ८५॥

राजा लक्षणसम्पन्नस् त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥ ८६॥

अतीव सर्वान् पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८७॥

अनुक्रोशादानृशंस्याद् योऽसौ धर्मभृतां वरः ।
गौरवात् तव राजेन्द्र बहून् क्लेशांस्तितिक्षति ॥ ८८॥

इति श्रीमहाभारते शतसहस्रिकायाम् संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ ५१ ॥ प्रजागरपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ८८॥ श्लोकाः]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

---

विदुरेण धृतराष्ट्रं प्रति सुधन्वविरोचनसंवादादिकथनपूर्वकं पाण्डवेषु पुत्रतौल्येन वृत्तिविधानम् ॥ १ ॥

---

धृतराष्ट्रः—

ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
शृण्वतो नास्ति मे तृप्तिर् विचित्राणीह भाषसे ॥ १

---

1. ग-घ-ङ—कोशेष्वेवायं श्लोको दृश्यते

विदुरः—

सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे त्वेते समे स्याताम् आर्जवं वा विशिष्यते ॥ २
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३
यावत् कीर्तिर्मनुष्यस्य [1]पुण्या लोके प्रगीयते ।
तावत् स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५
स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।
रूपेणाप्रतिमा राजन् विशिष्टपतिकाम्यया ॥ ६
विरोचनोऽथ दैतेयस् तदा तत्राजगाम ह ।
प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ॥ ७

केशिनी—

किं ब्राह्मणास्स्विच्छ्रेयांसो दितिजास्स्विद्विरोचन ।
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ॥ ८
[2]इदं व्यवस्य पर्यङ्कं सुधन्वाऽप्यधिरोहतु ॥ ८॥

विरोचनः—

प्राजापत्या वयं श्रेष्ठास् सर्वे केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ९॥

---

1. ख-ग-घ-ङ-मा—लोके भवति भारत ।
2. अ-क—इदमर्धं नोपलभ्यते

केशिनी—

इह त्वं वस भोगा वै त्वदर्था मे विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ १०॥

विरोचनः—

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ११॥

विदुरः—

[1]अतीतायां च शर्वर्याम् उदिते सूर्यमण्डले ।
अथाजगाम तं देशं सुधन्वा राजसत्तम ॥ १२॥
विरोचनो यत्र विभो केशिन्या सहितास्स्थितः ॥ १३
[3]सुधन्वानं समागच्छत् प्राह्लादिः केशिनी तथा ॥ १३॥
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ।
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १४॥
[4]इति होवाच वचनं विरोचनमनुत्तमम् ॥ १५

सुधन्वा—

[5]आस्स्व तल्पे हि सौवर्णे प्राह्लादे ब्राह्मणस्त्वहम् ।
अन्वालभे हिरण्मयं प्राह्लादेदं वरासनम् ॥ १६
[6]एकत्वमुपसम्पन्नो न त्वासेऽहं त्वया सह ॥ १६॥

---

1. घ-ङ—नास्तीदमर्धम् ।
2. ख-ग-ङ-मा—एतस्मिन्नन्तरे तत्र सुधन्वा प्रत्यदृश्यत । [पाठान्तरम्]
3. ख-घ-ङ-मा—इतः श्लोकद्वयं नास्ति ।
4. ख-ग-ङ-मा—कोशेष्वेवेदमर्धं वर्तते ।
5. ख-ग-ङ-मा—कोशेष्वेवेदमर्धं वर्तते ।
6. ख-ग-घ-ङ-मा—एकान्त ।

विरोचनः—

तवार्हते तु फलकं कूर्चं वाऽप्यथवा बृसी ।

[1]हरन्तु फलकं कूर्चं तथा ब्रुस्यस्तृणानि च ॥ १७॥

सुधन्वन् न त्वमर्होऽसि मया सह समासनम् ॥ १८

सुधन्वा—

पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि ।

वृद्धौ वैश्यौ च शूद्रौ च न त्वन्याविंतरेतरम् ॥ १९

पिता हि ते समासीनम् उपोपासीत मामधः ।

[2]बालस्सुखोषितो गेहे न त्वं किञ्चन बुध्यसे ॥ २०

विरोचनः—

हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।

सुधन्वन् विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ २१

सुधन्वा—

[3]हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।

प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ २२

विरोचनः—

[4]आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।

न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ २३

---

1. अ-क-म—कोशेषु इदमर्धं नास्ति ।
2. ख-ग-घ-ङ-मा—बालो गृहेषु सुखितो ।
   अ—बाले सुखोषितो गेहे
3. ख—इतः श्लोकद्वयं नास्ति ।
4. ग-घ-ङ—ते वयं क्व गमिष्यामः ।
   मा—ते वयं कथयिष्यामः प्राणयोरेवमन्तरे ।

सुधन्वा—

पितरं ते गमिष्यावः प्राणयो[1]र्विपणे कृते ।
[2]पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ २४

विदुरः—

[3]एवं कृतपणौ क्रुद्धौ तदा तत्रैव जग्मतुः ।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २५

प्रह्लादः—

इमौ तौ सम्प्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ २६

किं वै सहैव चरथो न पुरा चरथस्सह ।
विरोचनैतत् पृच्छामि किं ते सख्यं सुधन्वना ॥ २७

विरोचनः—

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
[4]तत् त्वां पृच्छावहे तात मा प्रश्नमनृतं वदेः ॥ २८

---

1. ख-ग-घ-ङ—रेवमन्तरे ।
2. ख—इतः सार्धं श्लोकद्वयं नास्ति ।
ङ-मा—अपि पुत्रस्य चेद्धेतोः ।
3. ख-ग-घ-ङ—एवमुक्त्वा गतौ तौ तु प्रह्लादं दितिनन्दनम् ।
[ पाठान्तरम् ]

क—एवमुक्त्वा तु तौ क्रुद्धा तदा ।
4. ग-घ—न त्वा पृच्छावहे तात । अ—प्रह्लाद तत्त्वां पृच्छामि ।

प्रह्लादः—

उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने ।

ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता [1]गौः पीवरीकृता ॥ २९

सुधन्वा—

उदकं मधुपर्कं च प्रश्नवाचाऽर्पितं मम ॥ २९॥

प्रह्लाद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः ।

[2]किं ब्राह्मणास्स्विच्छ्रेयांस उताहोस्विद्विरोचनः ॥ ३०॥

प्रह्लादः—

न कल्माषो न कपिलो न कृष्णो न च लोहितः ।

अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हति ॥ ३१॥

[3]पुत्रवान् यो भवेद्ब्रह्मन् साक्ष्ये चैव व्यवस्थितः ।

तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ ३२॥

सुधन्वा—

[4]यद्यतत्त्वं तु वक्तासि यदि वाऽपि न वक्ष्यसि ।

प्रह्लाद प्रश्नमतुलं मूर्धा ते विफलिष्यति ॥ ३३॥

---

1. अ-क-ख—गौरुपधीकृता । 2. घ-ङ-मा—नास्तीदमर्धम् ।
3. ग—किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः । [अधिकः पाठः]
ख-घ-ङ—अभिवाद्यो भवेद्ब्रह्मन् साक्ष्ये चैव भवेत् स्थितः ।
[पाठान्तरम्]

4. ग—यद्वै सत्यं न वदसि यदि वाऽपि विवक्ष्यसि ।
घ-ङ—यद्वै तत्त्वं न वक्ष्यसि यदि वाऽपि विवक्ष्यसि ।
मा—यद्यतत्त्वं वक्ष्यसि त्वं यदि वा न विवक्षसि ।

विदुरः—

[1]आदित्येन सहायान्तं प्रह्लादो हंसमब्रवीत् ।
धृतराष्ट्र महाप्राज्ञ सर्वज्ञं सर्वदर्शिनम् ॥ ३४॥

प्रह्लादः—

पुत्रो वाऽन्यो भवेद् ब्रह्मन् साक्ष्ये चापि भवेत् स्थितः ।
तयोर्विवदतोर्हंस कथं धर्मः प्रवर्तते ॥ ३५॥

हंसः—

गां वै दद्यात्त्वौरसाय यद्वाऽन्यत् स्यात् प्रियं धनम् ।
द्वयोर्विवदतोस्तथ्यं वाच्यं च मतिमंस्त्वया ॥ ३६॥

प्रह्लादः—

[2]अथ यो नैव प्रब्रूया[3]त् सत्यं वा यदि वाऽनृतम् ।
हंस [4]तत्वेन पृच्छामि दुर्विवेक्तास्मि किं वदे ॥ ३७॥

हंसः—

पृष्टो धर्मं न विब्रूयाद् गोकर्णशिथिलं चरन् ।
धर्माद्भ्रश्यति राजंस्तु नास्य लोकोऽस्ति न प्रजाः ॥ ३८॥
धर्म एतान् संरुजति यथा नद्यनुकूलजान् ॥ ३९

ये धर्ममनुपश्यन्तस् तूष्णीं ध्यायन्त आसते ।
श्रेष्ठोऽर्धं तु हरेत् तत्र भवेत् पादश्च कर्तरि ॥ ४०

---

1. मा—इत आरभ्य नव श्लोका न सन्ति ।
2. घ—नास्तीदमर्धम् । 3. ग-ङ—ब्रू सत्यं नानृतं वदेत् ।
4. ख-ग-घ-ङ—तत्त्वं च पृच्छामि कियदेनः करोति सः ।

पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते ॥ ४०॥
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।
कर्तारमेनो गच्छेत्तु निन्द्यो यत्र हि निन्द्यते ॥ ४१॥

प्रह्लादः—
मोहाद्वा चैव कामाद्वा मिथ्यावादं यदि ब्रुवन् ।
धृतराष्ट्र तत्त्वं पृच्छामि दुर्विवक्ता तु किं वसेत् ॥ ४२॥

हंसः—
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ता[1]ङ्गो दुर्विवक्ता तु तां वसेत् ॥ ४३॥
[2]नगरे प्रतिरुद्धस्सन् बहिर्द्वारे बुभुक्षितः ।
अमित्रान् भूयसः पश्यन् दुर्विवक्ता तु तां वसेत् ॥ ४४॥
यां च रात्रिमभिद्रुग्धो यां च पुत्रे प्रिये मृते ।
सर्वस्वेन च यो हीनो दुर्विवक्ता तु तां वसेत् ॥ ४५॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ४६॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
[3]सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेः ॥ ४७॥

प्रह्लादः—
मत्तश्श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।

1. मा—गौर् 2. अ-क—सगति 3. ख—नासीदमर्धम्।

माताऽस्य श्रेयसी मातु[1]स् तस्मात् त्वं तेन वै जितः ॥ ४८॥

विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ।
सुधन्वन् पुत्रमिच्छामि त्वया दत्तं विरोचनम् ॥ ४९॥

सुधन्वा—

यद्धर्ममघृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते पुत्रं तस्मात् प्रह्लाद दुर्लभम् ॥ ५०॥

एष प्रह्लाद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात् कुमार्यास्सन्निधौ मम ॥ ५१॥

विदुरः—

तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमस्ससुतामात्यो नाशं [2]पुत्रार्थमब्रुवन् ॥ ५२॥

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ ५३॥

यथा यथा हि पुरुषः कल्याणे कुरुते [3]मनः ।
तथा तथाऽस्य सर्वार्थास् सिद्ध्यन्ते नात्र संशयः ॥ ५४॥

नैनं छन्दांसि वृजिनात् तारयन्ति
मायाविनं मायया वर्तमानम् ।

---

1. ग—र्भवांस्तत्त्वेन ।　घ-ङ—र्भवतस्तेन वै ।
2. मा—यः पुत्रानतुविभ्रमन् ।　ग—पुत्रानतु भ्रमन् ।
घ-ङ—पुत्रानतुस्मरन् ।
3. ग-घ-ङ—मतिम् ।　मा—मतिः ।

नीडं शकुन्ता इव जातपक्षाश्
छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५५॥

मद्यपानं कलहं पूगवैरं
भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्वेषं स्त्रीपुंसयोर्विवादं
वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ५६॥

सामुद्रिकं वणिजं चोरपूर्वं
शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च
नैतान् साक्ष्ये त्वधिकुर्वीत सप्त ॥ ५७॥

मानाग्निहोत्रमुत मान[1] मौनं
[2]मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयङ्कराणि
[3]भयं प्रयच्छ[4]न्त्ययथाकृतानि ॥ ५८॥

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
चर्मकारश्च सूची च मित्रध्रुक् पारदारिकः ॥ ५९॥

1. ख-ग-घ-ङ—यज्ञः ।
2. ख-ग-घ—मानादधीतमुत मानमौनम् ।
ङ—मानाधीतमुत मानमौनम् ।
मा—मानेनाधीतमुत मानयज्ञः ।
3. ख-ग-घ-ङ—श्रियं ।
4. ख-घ-ङ—न्ति यथाकृतानि ।

[1]भ्रूणहा गुरुतल्पी च यश्च स्यात् पानपो द्विजः ।
अतितीक्ष्णश्च कारुश्च नास्तिको वेदनिन्दकः ॥ ६०॥

[2]सुवर्णग्रहणो व्रात्यः कीनाशश्चात्महाऽपि च ।
रक्षेत्युक्तश्च यो हिंस्यात् सर्वे [3]ब्रह्महभिस्समाः ॥ ६१॥

तृणोल्कया ज्ञायते जातरूपं
वृत्तेन भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ॥ ६२॥

जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान् धर्मचर्यामसूया ।
क्रोधश्श्रियं शीलमनार्यसेवा
ह्रियं कामस्सर्वमेवाभिमानः ॥ ६३॥

न क्रोधिनोऽर्थो न नृशंसस्य मित्रं
क्रूरस्य न स्त्री सुखिनो न विद्या ।
न कामिनो ह्रीरलसस्य न श्रीस्
सर्वं तु न स्यादनवस्थितस्य ॥ ६४॥

श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्धते ।
[4]दाक्ष्यात्तु कुरुते मूलं संयमात् प्रतितिष्ठति ॥ ६५॥

1. ङ—श्लोकोऽयं न दृश्यते । 2. ग-घ-ङ-मा—सुवग्रहापणो ।
3. अ-क-म-मा—ब्रह्महणैस्समाः ।
4. ग-घ-ङ-मा—दाक्ष्यात् स्वंकुरुते रूपं ।

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमश्श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ६६॥

एतान् गुणांस्तात महानुभावान्
एको गुणस्संश्रयते प्रसह्य ।
राजा यदा [1]संश्रयते मनुष्यं
सर्वान् गुणानेष गुणोऽतिभाति ॥ ६७॥

अष्टौ नृपेमानि मनुष्यलोके
स्वर्गस्य लोकस्य निदर्शनानि ।
[2]यज्ञो दानमध्ययनं तपश्च
चत्वार्येतान्यन्ववेतानि सद्भिः ॥ ६८॥

दमस्सत्यमार्जवमानृशंस्यं
चत्वार्येतान्यन्ववायन्ति सन्तः ॥ ६९

[3]इज्याध्ययनदानानि तपस्सत्यं घृणा क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधस्स्मृतः ॥ ७०

[4]तत्र पूर्वचतुर्वर्गो धर्मार्थमपि शब्द्यते ।

---

1. ख-ग-व-ङ-मा—सत्कुरुते ।
2. ख-ग-घ-ङ-मा—चत्वार्येषामन्ववेतानि सद्भि-
श्चत्वार्येषामन्ववायन्ति सन्तः । [अधिकः पाठः]
3. मा—अयं श्लोको न दृश्यते ।
4. अ-क-ख-म-मा—कोशेषु नास्त्ययं श्लोकः ।

उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ७१

न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत् सत्यं यच्छलेनानुविद्धम् ॥ ७२

सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च [1]शक्तिदानं च दशेमे स्वर्गयोनयः ॥ ७३

[2]पापं कुर्वन् पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन् पुण्यकीर्तिः [3]पुण्यमत्यन्तमश्नुते ॥ ७४

[4]तस्मात् पापं न कुर्वीत पुरुषस्संशितव्रतः ॥ ७४॥

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ ७५॥

[5]पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ॥ ७६

---

1. ख-ग-घ-ङ-मा—चित्तभाष्यं च दश संसर्गयोनयः।
2. मा—अथ यो नैव विब्रूयाच्च सत्यं नानृतं वदेत्।
ये धर्मसभ्यसूयन्तस् तूष्णीं ध्यायन्त आसते।
श्रेष्ठः पादं हरेत् तत्र भवेत् पादश्च कर्तरि।
पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते।
अनेनाश्रेष्ठो भवति प्रमुच्यन्ते सभासदः।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते। [अधिकः पाठः]
3. ख-ग-घ-ङ-मा—पुण्यमेवाश्नुते फलम्।
4. ख-घ-ङ-मा—नास्तीदमधर्मम्। कस्मात् त्वं।
5. मा—श्लोकद्वयं न दृश्यते।

वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥ ७६॥

पुण्यं कुर्वन् पुण्यकीर्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात् पुण्यं निषेवेत पुरुषस्सुसमाहितः ॥ ७७॥

असूयको दन्दशूको निष्ठुरो वैरकृ[1]च्छठः ।
स कृच्छ्रं महदाप्नोति नचिरात् पापमाचरन् ॥ ७८॥

अनसूयुः कृतप्रज्ञश् शोभनान्याचरन् सदा ।
[2]न कृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ७९॥

प्रज्ञामेवागमयति यः प्राज्ञेभ्यस्स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्माथौं शक्नोति सुखमेधितुम् ॥ ८०॥

दिवसेनैव तत् कुर्याद् येन रात्रौ सुखं वसेत् ।
[3]अष्टमासेन तत् कुर्याद् येन वर्षास्सुखं वसेत् ॥ ८१॥

पूर्वे वयसि तत् कुर्याद् येन वृद्धस्सुखं वसेत् ।
यावज्जीवं तु तत् कुर्याद् येन प्रेत्य सुखं वसेत् ॥ ८२॥

जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसङ्ग्रामं गतपारं तपस्विनम् ॥ ८३॥

धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।

---

[illegible]ग-घ-ङ-मा—ञरः ।

3. मा—[illegible]घ-ङ-म—अकृच्छ्रात् सुखमाप्नोति सर्वत्र तु विराजते ।

4. अ-क-म—इदमर्धं न ।

असंवृतं तद्भवति ततो[1]ऽन्यदवदीर्यते ॥ ८४॥
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८५॥
ऋषीणां च नदीनां च [2]कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यस् स्त्रीणां दुश्चरितस्य च ॥ ८६॥
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रिय[3]श्शीलभाग्राजंश् चिरं पालयते महीम् ॥ ८७॥
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ८८॥
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ८९॥
दुर्योधनेऽथ शकुनौ मूढे दुश्शासने तथा ।
कर्णे चैश्वर्यमाधाय [4]कथं त्वं भूतिमिच्छसि ॥ ९०॥
सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ।
पितृवत् त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ९१॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ५१ ॥ प्रजागरपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ९१॥ श्लोकाः]

---

1. ग-घ-ङ—ऽन्यदपि जीर्यते । 2. ग-घ-ङ—शूराणां ।
3. ग-घ-ङ-मा—स्स्वर्गं । 4. ग-घ-ङ—आत्मनो । मा—कस्मात् त्वं ।

## ॥ पञ्चत्रिंशोऽध्यायः ॥

विदुरेण धृतराष्ट्रं प्रति आत्रेयेण साध्यान् प्रत्युपदिष्टनीतिकथनम् ॥ १ ॥ तथा महाकुललक्षणाद्यभिधानपूर्वकं पाण्डवैस्सन्धिकरणविधानम् ॥ २ ॥

विदुरः—

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
[1]आत्रेयस्य च संवादं साध्यानां चेति नश्श्रुतम् ॥ १

चरन्तं हंसरूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त [2]वै पुरा ॥ २

साध्याः—

साध्या देवा वयमेते महर्षे
दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः
[3]काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ३

हंसः—

एतत् कार्यममरा[4]स्संश्रुतं मे
धृतिश्शमस्सत्यधर्मानुवृत्तिः ।

1. ग-घ-ङ-मा—हंसस्यापि च । 2. ग-घ-ङ—भारत ।
3. ग-घ-ङ-मा—काम्यां । अ-क—कार्यां
4. अ-क—स्संश्रुतो मे । ख-मा—सम्यगेव ।

ग्रन्थिं [1]विभिद्य हृदयस्य सर्वं
　प्रियाप्रिये [2]चानुशमं नयीत ॥　४

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥　५

नाक्रोशी स्यान्नावमानी परस्य
　मित्रद्रोही नोत नीचोपसेवी ।
न [3]चाभिमानी न च [4]नीचवृत्तो
　[5]नीचां वाचं रुशतीं वर्जयीत ॥　६

मर्माण्यस्थीनि हृदयं तथाऽसून्
　[6]रूक्षा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचं रुशतीं रूक्षरूपां
　धर्मारामो नित्यशो [7]वर्जयीत ॥　७

अरुन्तुदं परुषं रूक्षवाचं
　वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।

---

1. ग-घ-ङ—विमुच्य । मा—द्वितीयं ।
2. अ-क—चात्मसमः प्रियेत ।
　मा—चोपशमं नयीत । घ-ङ—चानुवशं नयेत ।
3. ङ-मा—चातिमानी न च हीनवृत्तो ।
4. ख-ग-घ—हीनवृत्ती रूक्षां ।
5. ङ-मा—रूक्षां वाचं रुशतीं वर्जयीत ।
6. ख-ग-घ-ङ-मा—घोरा ।
7. ङ-मा—वर्जयेत् ताम् ।

विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वै वहन्तम् ॥ ८

परश्चेदेनमभिविध्येत बाणैर्
भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
विरिच्यमानोऽप्यतिरिच्यमानो
विद्यात् कविस्सुकृतं मे दधाति ॥ ९

यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा [1]रागवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ १०

[2]अतिवादं न प्रवदेन्न वादयेद्
यो नाहतः प्रतिहन्यान्न घातयेत् ।
[3]हन्तुश्च यो नेच्छति पापकं वै
तस्मै देवास्स्पृहयन्त्यागताय ॥ ११

अव्याहृतं व्याहृताच्छ्रेय आहुस्
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।

---

1. अ-क-ख—सङ्गवश्यं
2. ग-घ-ख-ङ—वाच्यं तु यो ।
3. ग—यो हन्तुकामस्य न पापमिच्छेत् ।
घ-ङ—यो हन्तुमिच्छोश्च न पापमिच्छेत् ।
मा—यो निहन्तुश्च न पापमिच्छेत् ।

प्रियं वदेव्द्याहृतं तत् तृतीयं
धर्म्यं वदेव्द्याहृतं तच्चतुर्थम् ॥ १२

यादृशै[1]स्सन्निविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भावितुं तादृग्भवति पूरुषः ॥ १३

यतो यतो निवर्तेत ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४

न जीयते [2]नानुजिगीषतेऽन्यान्
न वैरकृच्चाप्रतिघातकश्च ।
निन्दाप्रशंसासु समस्वभावो
न शोचते हृष्यति नैव चायम् ॥ १५

भावमिच्छति [3]सर्वस्य नाभावे कुरुते [4]मनः ।
सत्यवादी मृदुर्दान्तो यस्स उत्तमपूरुषः ॥ १६

[5]नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यस्स मध्यमपूरुषः ॥ १७

[6]दुश्शासनस्तूपहतोऽभिशस्तो
नावर्तते मन्युवशात् कृतघ्नः ।

1. ङ-मा—स्संविवदते । 2. ख-ग-घ-ङ—नोत ।
3. ग-घ-ङ-मा—सर्वत्र । 4. ख-ग-घ-ङ-मा—मतिम्
5. अ-क-ख-म—श्लोकोऽयं नास्ति ।
6. ख-ग-घ-ङ—दुर्दर्शनस्तूपहतान्तरात्मा प्रवर्तते ।
मा—दुर्दर्शनस्तूपहन्ता न शास्ता ।

न कस्यचिन्मित्रमथो दुरात्मा
कलाश्चैता अधमस्येह पुंसः ॥ १८

न श्रद्दधाति कल्याणं परेभ्यो[1]ऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९

उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ २०

प्राप्नोति वै [2]वित्तमयं बलेन
नित्योत्थानात् प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां
न वृत्तमाप्नोति महाकुलानाम् ॥ २१

धृतराष्ट्रः—
महाकुलानां स्पृहयन्ति देवा
धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥ २२

विदुरः—
तपो दमो ब्रह्मवित्त्वं तितिक्षा
इज्या विवाहास्सान्त्वनं चान्नदानम् ।

---

1. ग-घ-ङ—ह्यतिशङ्कितः ।
2. ग-घ-ख-ङ-मा—वीर्यमसह्यरूपं ।

अष्टावेते नित्यमेवं भवन्ति
सतां गुणास्तानि महाकुलानि ॥ २३

[1]येषां न वृत्तं व्यथते न योनिश्
चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥ २४

अनिज्यया विवाहैश्च वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५

देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६

ब्राह्मणानां परिभवात् परिवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७

कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः ।
[2]कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८

वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां तु गच्छन्ति कर्षन्ति च [3]महद्यशः ॥ २९

[4]वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।

---

1. अ-क-म—श्लोकोऽयं नास्ति
2. ख-ग-घ-ङ—कुलाख्यां नानुगच्छन्ति ।
3. ख-ग-घ-ङ-मा—महाजनम् ।
4. ख-घ-ङ-मा—इतः श्लोकद्वयं नास्ति

अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ३०

गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ३१

मा नः कुले वैरकृत् कश्चिदस्तु
[1]राजाऽमात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ३२

यश्च नो ब्राह्मणान् हन्याद् यश्च नो ब्राह्मणान् द्विषेत् ।
[2]न नस्स समितिं गच्छेद् यश्च नो निर्वपेत् कृषिम् ॥ ३३

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४

श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम् ॥ ३५

सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै
शक्तो वोढुं न तथाऽन्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति
महाकुलीना न तथाऽन्ये मनुष्याः ॥ ३६

1. ग-घ—राज्ञा वध्यो। मा—राजा वध्यो।
2. ख—नास्तीदमर्धम्।

न तन्मित्रं यस्य कोपाद्बिभेति
　यद्वा मित्रं [1]शङ्कितेनोपचर्यम् ।
यस्मिन् मित्रे पितरीवाश्वसीत
　तद्वै मित्रं सङ्गतानीतराणि ॥　३७

[2]यः कश्चिदप्यसन्नद्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत् परायणम् ॥　३८

चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यम् अध्रुवो मित्रसङ्ग्रहः ॥　३९

चलचित्तमनात्मानम् इन्द्रियाणां वशानुगम् ।
अर्थास्समतिवर्तन्ते हंसाश्शुष्कं सरो यथा ॥　४०

अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनाम् [3]अभ्रं पारिप्लवं यथा ॥　४१

सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान् मृतानपि क्रव्यादाः कृतघ्नान् नोपभुञ्जते ॥　४२

[4]अर्थयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन् प्रजानाति मित्राणां सारफल्गुताम् ॥　४३

---

1. ग-घ-ङ-मा—कोपनेनोपशङ्क्यम् ।
2. ङ—यदि चेदल सम्बन्धो ।　मा—यदि चेदप्यसम्बन्धो ।
　ग-घ—यःकश्चिदप्यसम्बद्धो
3. ख-ग-घ-ङ—अप्सु ।
4. ख-ग-ङ—प्रार्थयेदेव ।

सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम् ।
सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ॥ ४४

अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ४५

पुनर्नरो म्रियते जायते च
पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च
पुनर्नरश्शोचति शोच्यते च ॥ ४६

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायशस्सर्वमेते स्पृशन्ति
तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ४७

चलानि हीमानि षडिन्द्रियाणि
तेषां यद्यद्वर्धते यत्र यत्र ।
ततस्ततस्स्रवते बुद्धिरस्य
च्छिद्रोदकुम्भादिव नित्यमम्भः ॥ ४८

धृतराष्ट्रः—

तनु[1]रुद्धश्शिखी राजा मिथ्योपचरितो मया ।

---

1. मा—रुद्धशिखी । ग-घ—रुद्धः । क—रुध्यः । ङ—रुद्धशिखो ।

मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥　　४९

नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत् पदमनुद्विग्नं तन्मे वद [1]महामते ॥　　५०

विदुरः—

नान्यत्र विद्यातपसोर् नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसन्त्यागाच् छान्तिं पश्यामि तेऽनघ ॥　　५१

बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं [2]योगेन विन्दति ॥　　५२

अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥　　५३

स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥　　५४

स्वास्तीर्णानि शयनानि प्रपन्ना
न वै भिन्ना जातु निद्रां [3]लभन्ते ।
न स्त्रीषु राजन् रतिमाप्नुवन्ति
न मागधैस्स्तूयमाना न सूतैः ॥　　५५

न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।

---

1. ग-ङ-मा—महाद्युते ।　　2. ग-घ-ङ-मा—त्यागेन ।
3. ग-घ-ङ—भजन्ति ।

न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति । ५६

न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किञ्चिदन्यद्विनाशात् ॥ ५७

सम्पन्नं गोषु सम्भाव्यं सम्भाव्यं ब्राह्मणे तपः ।
सम्भाव्यं चापलं स्त्रीषु सम्भाव्यं ज्ञातितो भयम् ॥ ५८

तन्तवोऽप्यायता नित्यं तनवो बहुलास्समाः ।
बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम् ॥ ५९

[1]धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६०

ब्राह्मणेषु च ये शूरास् स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ६१

महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः ।
प्रसह्य एव वातेन [2]सस्कन्धो मर्दितुं क्षणात् ॥ ६२

---

1. ङ-मा—धूमायन्ति ।
2. ख-ग-घ—शाखास्कन्धेन मर्दितुम् ।
ङ-मा—शाखास्कन्धेऽवमर्दितुम् ।

अथ ये सहिता वृक्षास्[1] सङ्घशस्सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ ६३

एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४

[2]अन्योन्यसमुपस्तम्भाद् अन्योन्या[3]श्रयणेन च ।
ज्ञातयस्सम्प्रवर्धन्ते सरसीवोत्पलान्युत ॥ ६५

अवध्या ब्राह्मणा गावो ज्ञातयश्शिशवस्स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युश्शरणागताः ॥ ६६

न मनुष्ये गुणः कश्चि[4]द् राजन् सधनतामृते ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ६७

अव्याधिजं कटुकं शीर्षरोगि
पापानुबन्धं परुषं तीक्ष्णमुग्रम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ६८

रोगार्दिता न फलान्याद्रियन्ते
न वै लभन्ते विषयेषु तत्त्वम् ।

---

1. ङ—अमूला अप्रतिष्ठिताः ।　मा—समूलास्सुप्रतिष्ठिताः ।
2. ख-घ-ङ-मा—अन्योन्यस्योपसंस्तम्भात् ।
3. ग-घ-ङ-मा—पाश्रयेण च ।
4. ग-घ-ङ-मा – दन्यो धनवतामपि ।

दुःखोपेता रोगिणो नित्यमेव
न बुध्यन्ते धनभोगान्न[1] सौख्यम् ॥ ६९

पुराऽप्युक्तं नाकरोस्त्वं वचो मे
द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां
कितवत्वं वै पण्डिता वर्जयन्ति ॥ ७०

न तद्बलं यन्मृदुना विरुध्यते
सूक्ष्मो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्रीर्
मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ७१

धार्तराष्ट्राः पाण्डवान् पालयन्तु
पाण्डोः पुत्रास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः [2]कुरवो ह्येककार्या
जीवन्तु राजन् सुखिनस्समृद्धाः ॥ ७२

मेधीभूतः कौरवाणां त्वमद्य
त्वय्यायत्तं कुरुकुलमाजमीढ ।
पार्थान् बालान् वनवासप्रतप्तान्
गोपायस्व स्वं यशस्तात [3]रक्षन् ॥ ७३

1. ग-व-ङ-मा—भोगान्।
2 क-ग-मा—कुरवोऽप्येकमित्राः। 3. ङ-मा—रक्ष।

सन्धत्स्व त्वं कौरव पाण्डुपुत्रैर्
मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ७४

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ५१ ॥ प्रजागरपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ७४ श्लोकाः ]

---

## ॥ षट्त्रिंशोऽध्यायः ॥

धृतराष्ट्रेण अल्पायुष्ट्वकारणप्रश्ने विदुरेण तदभिधाय नीतिकथनपूर्वकं कुरुपाण्डवसन्धिकरणविधानम् ॥ १ ॥

---

विदुरः—
[1]सप्तदशेमान् राजेन्द्र मनुस्स्वायम्भुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषान् आकाशं मुष्टिभिर्घ्नतः ॥ १
तानेवेन्द्रस्य हि [2]धनुर् अनाम्यं नमतोऽब्रवीत् ।
अथो मरीचिनः पादान् अग्राह्यान् गृह्णतस्तथा ॥ २

1. ख—श्लोकोऽयं नास्ति
2. ग-घ—चापम् अनाम्यं नमयते ध्रुवम् ।
मा—वै चापम् अनाम्यं नमतोऽब्रवीत् ।
ख—धरण्यां नमतोऽब्रवीत् ।
ङ—तानवेहीन्द्रचापं तद् अनाम्यं नमतो ध्रुवम् ।

यश्चाशिष्यं शास्ति वै यश्च तुष्येद्
यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च नो रक्षति भद्रमस्तु ते
यश्चायाच्यं याचते कत्थते वा ॥ ३

यश्चाभिजातः प्रकरोत्यकार्यं
यश्चाबलो बलिनां नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति
यश्चाकामं कामयते नरेन्द्र ॥ ४

[1]वध्वाऽपहासं श्वशुरो मन्यते यो
वध्वा[2]वसन् लभते मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं
स्त्रियश्च यः परिवदतेऽतिवेलम् ॥ ५

[3]यश्चापि लब्ध्वा न स्मरामीति वादी
दत्त्वा च यः कत्थति याच्यमानम् ।
यश्चासत[4]स्सत्वमुपानयीत
एतान् नयन्ति निरयं पाशहस्ताः ॥ ६

1. ङ-मा—वध्वावासं श्वशुरो यश्च मन्यते । मा—वध्वा हासं ।
2. ख-ग-घ-ङ—वासं सहते ।
3. ख-घ-ङ-मा—यश्चापि लब्धं न स्मरामीत्युवाच ।
4. ख-ग-घ-ङ-मा—स्सान्त्वमुपासतीह
एते हि यान्त्यनिलं पाशहस्तम् ।

यस्मिन् यथा वर्तते यो मनुष्यस्
तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया [1]बाधितव्यस्
साध्वाचारस्साधुना [2]प्रत्युपेयः ॥ ७

[3]जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान् धर्मचर्यामसूया ।
कामो ह्रियं वृत्तमनार्यसेवा
क्रोधश्श्रियं सर्वमेवा[4]भिमानः ॥ ८

धृतराष्ट्रः—

शतायुरुक्तः पुरुषः सर्ववेदेषु वै [5]यदा ।
नाप्नोत्यथ च तत् सर्वम् आयुः केनेह [6]हेतुना ॥ ९

विदुरः—

[7]अभिमानोऽतिवादश्च [8]तथाऽत्यागो नराधिप ।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १०

एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११

---

1. अ-क—वर्तितव्यः । 2. ख-घ-ङ-मा—प्रत्युदेयः ।
3. ख-मा—श्लोकोऽयं नास्ति । 4. घ-ङ—तिमानः ।
5. ख-घ-ङ—तथा । 6. ख-ङ—कर्मणा ।
7. ग—अतिमानो । ख-घ-ङ-मा—अतिवादोऽतिमानश्च ।
8. ख-घ-ङ—तथाऽत्याशा ।

विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ १२

[1]आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।
शरणागतहा चैव सर्वे [2]ब्रह्महणैस्समाः ॥ १३

एतैस्समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १३॥

[3]गृहीतवाक्यो नयविद्वदान्यश्
शेषान्नभोक्ता ह्यविहिंसकश्च ।
नानर्थकृत्याकुलितः कृतज्ञस्
सत्यो मृदुस्स्वर्गमुपैति विद्वान् ॥ १४॥

[4]सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १५॥

यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १६॥

[5]त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १७॥

---

1. ख-मा—इदमर्धं नास्ति
2. ख-ग-घ-ङ—ब्रह्महभि ।
3. ग-घ-ङ-मा—गृही वदान्योऽनपविद्धाग्निहोत्रः ।
   ख—गृही वदान्यो नृपतिश्चाग्निहोत्री ।
4. ख—इतः श्लोकद्वयं नास्ति
5. ख-ग-घ-ङ-मा—त्यजेत् कुलार्थे पुरुषं

आपदर्थं धनं रक्षेद् दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि ॥ १८॥

[1]द्यूतमेतत् पुरा कल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९॥

उक्तं मया द्यूतकालेऽपि राजन्
[2]नेदं युक्तं वचनं प्रातिपेय ।
यथौषधं पथ्यमिवातुरस्य
न रोचते तव वैचित्रवीर्य ॥ २०॥

काकैरिमांश्चित्रबर्हान् मयूरान्
[3]पराजयेथाः पाण्डवान् धार्तराष्ट्रैः ।
हित्वा सिंहान् क्रोष्टुकान् गूहमानः
प्राप्ते काले शोचिता त्वं नरेन्द्र* ॥ २१॥

यस्तात नो क्रुध्यति सर्वकालं
भृत्यस्य भक्तस्य हिते रतस्य ।
यस्मिन् भृत्या भर्तरि विश्वसन्ति
न चैनमापत्सु परित्यजन्ति ॥ २२॥

---

1. ख-घ-ङ-मा—श्लोकोऽयं नास्ति
2. घ—नैवं युक्तं प्रातिपीयादिकाले ।
मा—नैवं युक्तं वचनं प्रातिपीय ।
3. घ-ङ—पराजैषीः । मा—पराजयिष्ठाः ।
*ग-घ-ङ—अत्रैवाध्यायसमाप्तिर्दृश्यते ।

न भृत्यानां वृत्तिसंरोधनेन
[1]राज्यं धनं सञ्जिघृक्षेदपूर्वम् ।
[2]त्यजन्ति ह्येनं वञ्चिता वै विरुद्धास्
स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ २३॥

कृत्यानि पूर्वं परिसङ्ख्याय सर्वा-
[3]ण्यायव्ययौ चानुरूपां च वृत्तिम् ।
सङ्गृह्णीयादनुरूपान् सहायान्
सहायसाध्यानि हि दुष्कराणि ॥ २४॥

अभिप्रायं यो विदित्वा तु भर्तुस्
सर्वाणि कार्याणि करो[4]त्यतन्द्री ।
वक्ता हितानामनुरक्त आर्यश्
शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २५॥

वाक्यं तु यो नाद्रियतेऽ[5]नुशिष्टः
[6]प्रत्याह यश्चापि नियुज्यमानः ।
[7]प्रज्ञाभिमानी प्रतिकूलवादी
त्याज्यस्स तादृक् त्वरयैव भृत्यः ॥ २६॥

---

1. ख-ङ-मा—बाह्यं जनं ।
2. ग-घ-ङ—त्यजन्त्यमी ह्येनमुचितापराधाः ।
ख-मा—त्यजन्ति ह्येनमुचितापराधाः ।
3 ख-ग-घ-ङ-मा—नायव्ययाभ्यामनु·
4. ख-ग-घ-ङ-मा—त्यवक्रः । 5. ग-ङ—विशिष्टः । ख—ऽनुशिष्टं ।
6. ख—प्रत्याख्यायी च । 7. ख-ग-घ-ङ-मा—आत्माभि ।

अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं [1]श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २७॥

न विश्वासाज्जातु परस्य [2]गेहे
गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो
[3]न राजकाम्यां योषितं [4]प्रार्थयेत ॥ २८॥

न निह्नवं [5]मन्त्रगतस्य गच्छेत्
संसृष्टमन्त्रस्य कुसङ्गतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति
सकारणं व्यपदेशं तु कुर्यात् ॥ २९॥

घृणी राजा पुंश्चली राजभृत्यः
पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृत[6]भूतिरेव
व्यवहारे वै वर्जनीयास्स्युरेते ॥ ३०॥

1. घ—सकुलं भार्यमन्यैः ।　ख—कुशलं ।　ङ—कुशलं हार्यमन्यैः ।
2. ख-ग-घ-ङ-मा —गेहं ।
3. ख-घ—न राजन्यां योषितं प्रार्थयेत ।　4. ग—प्रार्थयीत ।
5. ख-घ-ङ-मा—पुत्र ।　6. ङ-मा—भूमिरेव

[1]अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ३१॥

एतान् गुणांस्तात महानुभावान्
एको गुणस्संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान् गुणानेष गुणो बिभर्ति ॥ ३२॥

गुणा दश स्नानशीलं भजन्ते
बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च
श्रीस्सौकुमार्यं प्रवराश्च [2]नार्यः ॥ ३३॥

गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्य[3]मायुश्च बलं सुखं च ।
अनाविलं चास्य भवत्यपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ३४॥

अकर्मशीलं च महाशनं च
लोकद्विष्टं बहुमायं नृशंसम् ।

1. ख-घ-ङ-मा—इतः श्लोकद्वयं नास्ति 2. ख-घ-ङ—भार्याः ।
3. ख-ग-घ-ङ-मा—मायुः प्रतिभा बलं च ।

अदेशकालज्ञमनिष्टवेषम्
एतान् गृहे न प्रतिवासयेत ॥ ३५॥

कदर्यमाक्रोशकमश्रुतं च
[1]वनौकसं धूर्तममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्नम्
एतान् भृशार्तोऽपि न जातु याचेत् ॥ ३६॥

संक्लिष्टकर्माणमतिप्रमादं
नित्यानृतं [2]चादृढभक्तिकं च ।
[3]विस्पष्टरागं पटुमानिनं चा-
प्येतान् न सेवेत नराधमान् षट् ॥ ३७॥

सहायबन्धना ह्यर्थास् सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनाऽन्योन्यं न सिद्ध्यतः ॥ ३८॥

उत्पाद्य पुत्राननृणांश्च कृत्वा
वृत्तिं च तेभ्योऽनुविधाय काञ्चित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ३९॥

---

1. ङ-मा—वराकसम्भूतममान्य ।
2. घ—चानृत । मा—दृढभक्तिनं च ।
3. ख-ग-ङ-मा—विकृष्टरागं बहुभाषिणं ।
घ—निकृष्टरागं बहुभाषिणं ।

हितं यत् सर्वभूतानाम् आत्मनश्च सुखावहम् ।
तत् कुर्यादीश्वरो ह्येतन्मूलं धर्मार्थसिद्धये ॥ ४०॥

वृद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च ।
व्यवसायश्च [1]यस्य स्याद् वृत्तितस्तु भयं कुतः ॥ ४१॥

पश्य दोषान् पाण्डवैर्विग्रहे त्वं
यत्र [2]व्यथेयुरपि देवास्सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो
यशःप्रणाशो द्विषतां च हर्षः ॥ ४२॥

भीष्मस्य कोपस्तव चैवेन्द्रकल्प
द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं [3]प्रवृद्धश्
श्वेतो ग्रहस्तिर्यगिवापतन् खे ॥ ४३॥

तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुर् अखिलां सागराम्बराम् ॥ ४४॥

धार्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः ।

1. ख-ग-घ-ङ—यस्यास्ति तस्य वृत्ति ।
मा—यस्य स्यात् तस्यावृत्ति ।

2. ख-ग-ङ-म-मा—व्यथेरन्नपि सर्वदेवाः ।
घ—व्यथेरन्वयं सर्वथैव ।

3. ख-घ-ङ—प्रवृद्धः श्वेतग्रहस्त्वापतन् वै यथैव ।
म-मा—प्रवृद्धः श्वेतो ग्रहस्त्वापतन् वै यथैव ।

मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन् वनात् ॥ ४५॥

न स्याद्वनमृते व्याघ्रो व्याघ्रो न स्यादृते वनम् ।
वनं हि रक्ष्यते व्याघ्रैर् व्याघ्रान् रक्षति काननम् ॥ ४६॥

[1]न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान् ।
यदेषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४७॥

अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थस् स्वर्गलोकादिवामृतम् ॥ ४८॥

यस्यात्मा विरतः पापात् कल्याणे च निवेशितः ।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९॥

यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च [2]विन्दति ॥ ५०॥

सन्नियच्छति यो वेगम् उत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति ॥ ५१॥

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम प्रथमं बलमुच्यते ॥ ५२॥

[3]अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहु[4]र्मनीषिणः ॥ ५३॥

---

1. ख—नास्त्ययं श्लोकः । 2. ग-घ-ङ-मा—नन्दति । ख—मोदते ।
3. म—इतः श्लोकद्वयं न दृश्यते 4. ग-घ-ङ—र्जिगीषवः ।

यत्त्वस्य सहजं राजन् पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५४॥

[1]येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत् प्रज्ञाबलमुच्यते ॥ ५५॥

महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ५६॥

स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ५७॥

प्रज्ञाशरेणाभिहतस्य जन्तोश्
चिकित्सकास्सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि
नाथर्वणा नाप्यगदास्सुसिद्धाः ॥ ५८॥

सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९॥

अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
[2]न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ६०॥

स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।

---

1. ख—श्लोकोऽयं नास्ति
2. क—रक्षेव युङ्क्ते तद्दारु यावता दीप्यते परैः ।
ग—न चोपभुङ्क्ते तद्दारु यावन्नोद्दीप्यते ।

तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१॥
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ६२॥
[1]लताधर्मा त्वं सपुत्रस् सालाः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ६३॥

[2]वनं राजंस्तव पुत्रोऽम्बिकेय
सिंहान् वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्येत्
सिंहा विनश्येयुरृते वनेन ॥ ६४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ५१ ॥ प्रजागरपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये ६४॥ श्लोकाः]

## ॥ सप्तत्रिंशोऽध्यायः ॥

विदुरेण धृतराष्ट्रं प्रति नीतिकथनपूर्वकं पाण्डवेभ्यो राज्याप्रदाने दुर्योधनस्य राज्यभ्रंशकथनम् ॥ १ ॥

विदुरः—

ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनस्स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ १

1. ख—लताधर्मास्तव पुत्राः । घ-ङ—लताधर्मास्तु ते पुत्राः ।
2. ख—नास्त्ययं श्लोकः ।

पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा [1]प्रतिवेद्यात्मसंस्थां
ततो दद्यादन्नमवेक्ष्य धीरः ॥ २

यस्योदकं मधुपर्कं च गां च
न मन्त्रवित् प्रतिगृह्णाति गेहे ।
लोभाद्भयादर्थकार्पण्यतो वा
तस्यानर्थं जीवितमाहुरार्याः ॥ ३

चिकित्सकश्शल्यकर्ताऽवकीर्णी
स्तेनः [2]क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४

अविक्रेयं लवणं पक्वमन्नं
दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं मूलफलानि शाकं
रक्तं वासस्सर्वगन्धा गुडं च ॥ ५

अरोषणो यस्समलोष्टकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।

1. ग—परिवेद्यासनस्थां । ख-घ-ङ-म-मा—परिवेद्यासनस्थं ।
2. ख-ग-घ-ङ-म-मा—पापो ।

निन्दाप्रशंसोपरतः प्रियाप्रिये
[1]त्यजन्नुदासीनवदेष भिक्षुकः ॥　　६

नीवारमूलेङ्गुदशाकवृत्तिस्
[2]सुसंयतात्माऽग्निकार्येषु [3]चोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो
धुरन्धरः पुण्यकृदेष तापसः ॥　　७

अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥　　८

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥　　९

[4]अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् ॥　　१०

पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियश्श्रियो गृहस्योक्तास् तस्माद्रक्ष्या विशेषतः ॥　　११

[5]भोजने मातरं कुर्यात् पितरं [6]चात्मरक्षणे ।

---

1. ग-घ-ङ-म-मा—चरन्नु ।
2. ग-घ-ङ-म-मा—सुसंशिता ।
3. ग-घ-ङ—शोच्यः ।　ख—स्वशोच्यः ।
4. ख—अनिष्ठुरो गुप्तदारस् । ङ—अनीर्ष्यो गुप्तदारस्स्यात् ।
म-मा—अनीर्ष्युर्गुप्तदारस्स्यात् ।
5. अ-क—पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् 　[पाठान्तरम्]
6. ख-म-मा—दाररक्षणे ।

गोषु चात्मसमं दद्यात् स्वयमेव कृषिं व्रजेत् ॥ १२

भृत्यैर्वाणिज्यचारं च पुत्रैस्सेवेत च द्विजान् ॥ १२॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम् अश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजस् स्वासु योनिषु शाम्यति ॥ १३॥

नित्यं सन्तः कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ १४॥

यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश् चिरमैश्वर्यमश्नुते ॥ १५॥

[1]करिष्यन् न प्रभाषेत कृतान्येव तु दर्शयेत् ।
धर्मकामार्थकार्याणि तदा मन्त्रो न भिद्यते ॥ १६॥

गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निश्शलाके वा तत्र मन्त्रो विधीयते ॥ १७॥

नासुहृत् परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत् पण्डितो वाऽप्यनात्मवान् ॥ १८॥

[2]नापरीक्ष्य महीपालः कुर्यात् सचिवमात्मनः ॥ १९

अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ।
कृतानि सर्वकार्याणि यस्य [3]पारिषदा विदुः ॥ २०

---

1. ख-ग-घ-ङ—मन्त्रितं न ।
2. ख-घ-ङ-म-मा - नास्तीदमर्धम् ।
3. ख-ग-घ-ङ—राज्ञ. परे विदुः ।

[1]धर्मे चार्थे च कामे च स राजा राजसत्तमः ।
गूढमन्त्रस्य नृपतेस् तस्य सिद्धिरसंशयम् ॥ २१

अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।
[2]स तेषां विपरिभ्रंशाद् भ्रश्यते जीवितादपि ॥ २२

कर्मणां तु प्रशस्तानाम् अनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं महत् ॥ २३

[3]अनधीत्य यथा वेदान् न विप्रश्श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥ २४

स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥ २५

अमोघक्रोधहर्षस्य [4]स्वयं कृत्यान्यवेक्षतः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुन्धरा ॥ २६

नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान् नैकस्सर्वहरो भवेत् ॥ २७

ब्राह्मणो ब्राह्मणं वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८

---

1. ख-घ-ङ-म-मा—नास्तीदमर्धम्।
2. ख-घ—सर्वेषां । ङ—सर्वेषां विपरिभ्रंशो ।
म—स तेषां विपरिभ्रश्येद् ।
3. ख-घ-ङ-म-मा—श्लोकोऽयं नास्ति
4. ख-ङ—स्वयं कृत्वाऽन्ववेक्षिणः । म-मा—स्वयं कृत्यान्यवेक्षिणः ।

न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः ।
अहताद्धि भयं तस्माज् जायते नचिरादिव ॥ २९

दैवतेषु च यत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यस्सदा क्रोधो वृद्धबालातुरेषु च ॥ ३०

निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ३१

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ ३२

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३३

विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ।
धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३४

अनार्यवृत्तमप्राज्ञम् असूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३५

[1]अविसंवादनं दानं [2]समयस्यानतिक्रमः ।
[3]आवर्जयन्ति भूतानि सम्यक् प्रणिहिता च वाक् ॥ ३६

अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।

1. ख-घ-ङ-म—अविसंवादिनं दान्तं ।
2. अ-क—समत्वस्याव्यतिक्रमः ।
3. अ-क-म-मा—आवर्तयन्ति ।

[1]अपि संक्षीणकोशो वा लभते परिवारणम् ॥ ३७

धृतिश्शमो दमश्शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहस् सप्तैतास्समिधश्श्रियः ॥ ३८

असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्नराधमो लोके वर्जनीयो नराधिप ॥ ३९

न स रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ४०

येषु दुष्टेषु दोषस्स्याद् योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ४१

येऽर्थास्स्त्रीषु समासक्ताः प्रमत्तपतितेषु च ।
ये चानार्यसमासक्तास् सर्वे ते संशयं गताः ॥ ४२

यत्र स्त्री यत्र कितवो यत्र बालोऽनुशास्ति च ।
मज्जन्ति तेऽवशा [2]राजन्नुदधावप्लवा इव ॥ ४३

प्रयोजनेषु ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान् मन्ये विशेषा [3]हि प्रसङ्गिनः ॥ ४४

---

1. क—अपि संक्षीणकोपो हि लभते परिवारणम् ।
   ख-घ-ङ—अतिसंक्षीणकोशोऽपि लभते परिचारिणम् ।
   ग-म-मा—ऽपि लभते परिचारिणम् ।
2. ख-ग-घ-ङ-म-मा—एव नद्यामश्मप्लवा यथा ।
3. ख-ग-घ-ङ-म-मा—विघ्नकारकाः ।

यं प्रशंसन्ति कितवा यं प्रशंसन्ति [1]चोरकाः ।
यं प्रशंसन्ति [2]बन्धक्यो न स जीवति मानवः॥ ४५

हित्वा तान् परमेष्वासान् पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ४६

तं द्रक्ष्यसि परिभ्रष्टं तस्मात् त्वं नचिरादिव ।
ऐश्वर्यमदसम्मूढं बलिं लोकत्रयादिव ॥ ४७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ ५१ ॥ प्रजागरपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ अस्मिन्नध्याये ४७ श्लोकाः ]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

---

विदुरेण धृतराष्ट्रं प्रति ज्ञातिसङ्ग्रहे गुणवर्णनपूर्वकं पुनः कुरुपाण्डवेषु साम्येन वर्तनविधानम् ॥ १ ॥

---

धृतराष्ट्रः—

अनीश्वरोऽयं पुरुषो भवाभवे
सूत्रप्रोता दारुमयीव योषा ।

---

1. ग-व—गायकाः । म-मा—चारणाः ।
2. ख-ग-घ-ङ-म—वर्धक्यस् स्त्रीप्रशस्ते विनश्यति ।

धात्रा तु दिष्टस्य वशे [1]कृतोऽहं
तस्माद्वद [2]त्वं श्रवणे धृतोऽहम् ॥　　१

विदुरः—

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानम् अवमानं च भारत ॥　　२

प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्र[3]मूलबलेनान्यो यः प्रियः प्रिय एव सः ॥　　३

द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि [4]कार्याणि द्वेष्ये पापानि चैव ह ॥　　४

[5]उक्तं मया जातमात्रेऽपि राजन्
दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात् पुत्रशतस्य वृद्धिर्-
अस्यात्यागात् पुत्रशतस्य नाशः ॥　　५

न वृद्धिर्बहुमन्तव्या या वृद्धिः क्षयमावहेत् ।

---

1 ग-घ-ङ-म-मा—किलायं । ख—वधे किलायं ।
2. ख-ग-घ—श्रवणेनादृतोऽस्मि । ङ—त्वत्तः श्रवणेनादृतोऽस्मि ।
म-मा—तत्त्वं श्रवणेनादृतोऽस्मि ।
3. ग-घ-ङ—होमजपैरन्यो । म-मा—मूलफलैरन्यो ।
4. ख-ग—घ-ङ-म-मा—सर्वाणि द्वेष्ये पापानि भारत ।
क—प्रिये शुभानि कर्माणि द्वेषे पापानि चैव ह ।
5. ख-घ-ङ-म-मा—इतः श्लोकद्वयं नास्ति ।

क्षयोऽपि बहुमन्तव्यो यः क्षयो वृद्धिमावहेत् ॥ ६

न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयस्स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ७

समृद्धा गुणतः केचिद् भवन्ति धनतोऽपरे ।
[1]धनवृद्धान् गुणैर्हीनान् धृतराष्ट्र [2]विवर्जय ॥ ८

धृतराष्ट्रः—

[3]सर्वं त्वमायतीयुक्तं वदसि प्राज्ञसम्मतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ९

विदुरः—

[4]अतीव गुणसम्पन्नो न जातु विनयान्वितः ।
सुसूक्ष्ममपि भूतानाम् उपमर्द[5]मपेक्षते ॥ १०

परापवादनिरता परदुःखोदयेषु च ।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ११

सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने महान् दोषः प्रदाने च महद्भयम् ॥ १२

---

1. ख-ग-घ-ङ—धनैः स्फीतान् ।
   म-मा—धनैर्हीनान् गुणैर्हीनान् ।
2. ङ-म-मा—विवर्जयेत् ।
3. ख-ग-घ-ङ—धर्म्यं त्वया युक्तियुक्तं भाषितं ।
4. ख-ग-घ-ङ-म-मा—स्वभात्र ।
5. ग—मुपेक्षते ।   ख-घ-ङ-म-मा—र्दं प्रचक्षते ।

[1]ये वै भेदनशीलास्तु सकामा निस्त्रपाश्शठाः ।
ये पापा इति विख्यातास् संवासे परिगर्हिताः ॥　　१३
युक्ताश्चान्यैर्महादोषैर् ये नरास्तान् विवर्जयेत् ॥　　१३॥
निवर्तमाने सौभाग्ये प्रीतिर्नीचे प्रणश्यति ॥　　१४
या चैव फलनिर्वृत्तिस् सौहृदे चैव यत् सुखम् ।
यतते चापवादाय यत्नमारभते क्षये ॥　　१५
स्वल्पेऽप्यपकृते मोहान्न शान्तिमुपगच्छति ॥　　१५॥
तादृशैस्सङ्गतं नीचैर् नृशंसैरकृतात्मभिः ।
निशाम्य निपुणं बुद्ध्या विद्वान् दूराद्विवर्जयेत् ॥　　१६॥
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्तमश्नुते ॥　　१७॥
ज्ञातयो वर्धनीयास्तैर् य इच्छन्त्यात्मन[2]स्सुखम् ।
कुलवृद्धिं च राजेन्द्र तस्मात् साधु समाचर ॥　　१८॥
श्रेयसा योक्ष्यसे राजन् कुर्वाणो ज्ञातिसत्क्रियाम् ॥　　१९
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ॥　　२०
प्रसादं कुरु [3]वीराणां पाण्डवानां विशाम्पते ।

---

1. ख-घ-म-मा—नास्तीदमर्धम् ।
2. ख-ग-घ-म—श्शुभम् ।　　मा—नो भवम् ।
3. ख-घ-ङ-म-मा—दीनानां ।

दीयन्तां ग्रामकाः केचित् तेषां वृत्त्यर्थमीश्वर ॥ २१

एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
वृद्धेन हि त्वया कार्यं पुत्राणां तात रक्षणम् ॥ २२

मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ॥ २२॥

ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २३॥

सभोजनं सङ्कथनं सम्प्रीतिश्च परस्परम् ।
ज्ञातिभिस्सह कार्याणि न विरोधः कदाचन ॥ २४॥

ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
[1]सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २५॥

सुवृत्तो भव राजेन्द्र पाण्डवान् प्रति मानद ।
अधर्षणीयश्शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ २६॥

श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ २७॥

पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान् वा हतान् सुतान् वाऽपि श्रुत्वा तदनुचिन्तय ॥ २८॥

येन खट्वां समारूढः परितप्येत कर्मणा ।
आदावेव न तत् कुर्याद् अध्रुवे जीविते सति ॥ २९॥

1. म—इदमर्धं नास्ति ।

न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषसम्प्रतिपत्तिस्तु बुद्धिमत्स्ववतिष्ठति ॥ ३०॥

दुर्योधनेन यद्येतत् तत् पापं ते पुराकृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥ ३१॥

तान् स्वे पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ३२॥

[1]सुव्याहृतानि धीराणां फलतः परिचिन्तय ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ३३॥

[2]असम्यगुपयुक्तं हि [3]ज्ञानं सुकुशलैरपि ।
उपलभ्यं चाविदितं विदितं चाननुष्ठितम् ॥ ३४॥

पापोदयफलं विद्वान् यो नारभति वर्धते ॥ ३५

यस्तु पूर्वकृतं [4]पापम् अविमृश्यानुवर्तते ।
[5]अगाधपङ्के दुर्मेधा विषमे विनिपात्यते ॥ ३६

मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ।
अर्थसन्ततिकामश्च रक्षेदेतानि नित्यशः ॥ ३७

---

1 ङ-ङ-म-मा—अव्याहृतानि ।
2. ख-म-मा—इतः सार्धनवश्लोकाः न सन्ति ।
3. ग-घ-ङ—नानासूलशतैरपि ।
4. क-ग—पापमवमृश्याथ वर्तते । 　घ-ङ—पापं नानुमृश्यानु ।
5. ग-घ-ङ—सोऽन्यापराधे ।

[1]मद्यं स्वप्नमविज्ञानम् आकारं चात्मसम्भवम् ।
दुष्टामात्येषु [2]विस्रम्भं दूताच्चाकुशलादपि ॥ ३८

द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृपः ।
त्रिवर्गाचरणे युक्तस् स-शत्रूनधितिष्ठति ॥ ३९

न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥ ४०

नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ॥ ४१

[3]सत्यं परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाऽथ विज्ञाय [4]प्राज्ञैर्मैत्रीं समाचरेत् ॥ ४२

[5]अवृत्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधम् आचारो हन्त्यलक्षणम् ॥ ४३

परिच्छदेन क्षेत्रेण वेश्मना [6]ब्रह्मचर्यया ।
परीक्षेत कुलं राजन् भोजनाच्छादनेन च ॥ ४४

[7]उपस्थितस्य कामस्य प्रतिवादो न विद्यते ।

---

1. अ-क— मन्दस्वर ।
2. ग-ङ—विस्रम्भं दूतांश्चाकुशलानपि ।
3. ग-घ-ङ—बुद्धया ।
4. म-व-ङ—प्राज्ञो मन्त्रं । ग—अकीर्तिं विनयो ।
5. म-मा—अवृत्तं विनयो । क—अवृत्तिं विलयो ।
6. अ-क-ग—परिचर्यया ।
7. ख-व-ङ-म-मा—इतः श्लोकत्रयं नास्ति

अपि निर्मुक्तदेहस्य कामसक्तस्य किं पुनः ॥ ४५

राजोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ।
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥ ४६

दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्धीमान् स कुलीनशताद्वरः ॥ ४७

[1]ययोश्चित्तेन वा चित्तं [2]निभृतं निभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यते ॥ ४८

दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन् मैत्री प्रणश्यति ॥ ४९

अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥ ५०

कृतज्ञं धार्मिकं सत्यम् अक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमित्यभिवाञ्छति ॥ ५१

इन्द्रियाणामनुत्सर्गो मृत्युना न विशिष्यते ।
अत्यर्थं पुनरुत्सर्गस् [3]साधयेद्दैवतान्यपि ॥ ५२

मार्दवं सर्वभूतानाम् अनसूया क्षमा धृतिः ।

---

1. म-मा—यो यश्चित्तेन वा चित्तं ।　　ङ—ययोर्वित्तेन वा वित्तम् ।
2. क—नैर्भृतं निर्वृतेन वा ।
घ-ङ-मा—नैर्भृतं नैर्भृतेन वा ।　　मा—नैभृतं नैभृतेन वा ।
3. ख-घ—सातयेद्दै ।
ङ-मा—शातयेद्दैव ।

आयुष्याणि [1]बुधाः प्राहुर् मित्राणां चाविमानना ॥ ५३

अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषति ।
मतिमास्थाय सुदृढां [2]तदरौ पुरुषव्रतम् ॥ ५४

आयत्यां प्रतिकारज्ञस् तथात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ५५

कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात् कल्याणमाचरेत् ॥ ५६

मङ्गला[3]लम्भनं योगश् श्रुतमुत्थानमार्जवम् ।
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ५७

अनिर्वेदश्श्रियो मूलं [4]लाभस्य च शुभस्य च ।
महान् भवत्यनिर्विण्णस् सुखं चानन्तमश्नुते ॥ ५८

[5]नातश्श्रीमत्तरं किञ्चिद् अन्यत् पथ्यतमं मतम् ।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ ५९

---

1. ग-ङ-मा—विजानीयुर्मित्राणां चापि माननम् ।
ख-घ-म—विजानीया ।

2. क-ग—तदकापुरुष । ङ—तदेकं पुरुषव्रतम् ।
घ—तथा कापुरुष । ख—स तु कापुरुषस्स्मृतः ।
म—तामागात् पुरुषव्रतम् । मा—तदागात् पुरुषव्रतम् ।

3. ग—चरणे । ख—मङ्गलालापनं यागः ।
ङ-म—मङ्गलालपनं योगः । मा—मङ्गलालभने योगं ।

4. ग-घ-मा—दुःखनाशः सुखस्य च ।
ख-ङ-म—दुःखनाशे सुखस्य च ।

5. अ-क—इदमर्धं नास्ति

क्षमेदशक्तस्सर्वस्य शक्तिमान् धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ६०

[1]यत् सुखं सेवमानोऽपि [2]धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ६१

दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्री[3]र्वर्तत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ६२

आर्जवेन नरं युक्तम् [4]आर्जवात् सव्यपत्रपम् ।
[5]अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६३

अत्यार्यमतिदातारम् अतिशूरमतिव्रतम् ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ६४

[6]न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ।
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ॥ ६५

अग्निहोत्रफला वेदाश् शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दत्तभुक्तफलं धनम् ॥ ६६

---

1 ख—इतः पञ्च श्लोकाः न दृश्यन्ते ।
2. अ-क—धर्मारव्यं न हि हीयते ।
मा—यस्सुखं सेवमानोऽपि धर्मार्थाभ्यां विहीयते ।
3. ग—र्वसत्य ।    घ-ङ-मा—र्भवत्य ।
4. घ-ङ-म-मा—मार्दवात् ।
5. ग-घ-ङ-म—अशक्तिमन्तं मन्यन्ते ।  मा—अशक्तिमन्यं मन्यन्ते ।
6. घ-ङ-मा—श्लोकोऽयं नास्ति

अधर्मोपार्जितैरर्थैर् यः करोत्यौर्ध्वदेहिकम् ।
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ॥ ६७

कान्तारवनदुर्गेषु कृच्छ्रास्वापत्सु सम्भ्रमे ।
उद्यतेषु च शस्त्रेषु [1]नास्ति सत्ववतां भयम् ॥ ६८

उत्थानं संयमो दाक्ष्यम् अप्रमादो धृति[2]स्स्मृतिः ।
समीक्ष्य च समारम्भो [3]वृद्धिमूलं भवस्य तु ॥ ६९

तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ७०

अष्टौ तान्यव्रतघ्नानि आपो मूलं [4]घृतं पयः ।
हविर्ब्राह्मणकामा च गुरोर्वचनमौषधम् ॥ ७१

न तत् परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ।
[5]सङ्ग्रहेणैव धर्मस्स्यात् कामा[6]दन्यः प्रवर्तते ॥ ७२

अक्रोधेन जयेत् क्रोधम् असाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन जयेत् सत्येन चानृतम् ॥ ७३

[7]स्त्रीषु धूर्तेऽलसे भीरौ चण्डे [8]पुरुषमानिनि ।

---

1. ख-घ-ङ—भयं नास्ति महात्मनाम्।
2. ख-ग-घ-ङ-म-मा—:क्षमा। 3. क—विद्धि।
4. म-मा—फलं। 5. ख—नास्तीदमर्थम्।
6. घ-ङ-म-मा—दन्यत्। मा—दन्यात्।
7. म—स्त्रीधूर्तके। मा—स्त्रियां धूर्ते।
8. ग-घ-ङ-म-मा—परुषवादिनि।

चोरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ७४

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि सम्प्रवर्धन्ते [1]आयुः प्रज्ञा यशो बलम् ॥ ७५

अतिक्लेशेन येऽर्थास्स्युर् धर्मस्यातिक्रमेण च ।
अरेर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ॥ ७६

अविद्यः पुरुषश्शोच्यश् शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाश्शोच्याश् शोच्यं राष्ट्रमराजकम् ॥ ७७

अध्वा जरा [2]देहवतां पर्वतानां जलं जरा ।
असम्भोगो जरा स्त्रीणां [3]वाक्छल्यं मनसो जरा ॥ ७८

अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
[4]मलं पृथिव्या बाह्लीकाः पुरुषस्यानृतं मलम् ॥ ७९
कौतूहलमला साध्वी विप्रवासमलास्स्त्रियः ॥ ७९॥

सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥ ८०॥

न स्वप्नेन जयेन्निद्रां न कामेन जयेत् स्त्रियः ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ८१॥

---

1. अ-क-ख—कीर्तिरायुर्यशो
2. ग—देहभृतामर्वतामचलं ।　　म—देहभृतां ।
3. ग-म-मा—अश्वानां मैथुनं जरा ।
4. ख-ङ-म-मा—नास्तीदमर्धम् ।

यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।
अन्नपानजिता दारास् सफलं तस्य जीवितम् ॥ ८२॥

सहस्रिणोऽपि जीवन्ति [1]जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न [2]कथञ्चिन्न जीव्यते ॥ ८३॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः ।
[3]नालमेकस्य तत् सर्वम् इति पश्यन् न मुह्यति ॥ ८४॥

राजन् भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन् स्वेषु पाण्डुसुतेषु च ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ५१ ॥ प्रजागरपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ८५॥ श्लोकाः ]

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

विदुरेण धृतराष्ट्रं प्रति तत्तद्वर्णधर्माणां तैस्तैरवश्यानुष्ठेयत्वकथन-पूर्वकं युधिष्ठिरस्य राज्यं प्रदाय क्षात्रधर्मे नियोजनचोदनम् ॥ १ ॥

विदुरः—

यो[4]ऽभ्यर्चितस्सद्भिरसज्जमानः
[5]करोत्यर्थं शक्तिमहापयित्वा ।

---

1. घ-ङ—दरिद्राश्च ।
2. ख-ग-घ-ङ-म-मा—कथञ्चन जीर्यते । ङ—जीव्यते ।
3. ख-ग-घ-ङ-म-मा—तदेकस्य न पर्याप्तम् ।
4. ग-घ-ङ-म-मा—ऽभ्यर्थितः ।
5. ख-ग-घ-ङ-म-मा—करोति स्वां ।

क्षिप्रं यशस्तं समुपैति सन्तम्
अलं प्रसन्ना हि सुखाय [1]सन्तः ॥ १

महान्तमप्यर्थमधर्मयुक्तं
य[2]स्सन्त्यजत्यनुपाकृष्ट एव ।
सुखं स दुःखान्यवमुच्य शेते
जीर्णां त्वचं सर्प इवावमुच्य ॥ २

अनृते च समुत्कर्षो राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धं समानि ब्रह्महत्यया ॥ ३

[3]असूयैकपदं मृत्युर् अतिवादश्श्रियो वधः ।
अशुश्रूषा त्वरा श्लाघा विद्यायाश्शत्रवस्त्रयः ॥ ४

[4]आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।
स्तब्धता चातिमानित्वं तथा त्यागित्वमेव च ॥ ५

एते वै सप्त दोषास्तु सदा विद्यार्थिनां मताः ॥ ५॥

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनस्सुखम् ।

---

1. ख-ग-घ-ङ-म-मा—सद्भिः।
2. ग—स्सन्त्यजेदनपाकृष्ट एव।
   ख-घ-ङ-म-मा—स्सन्त्यजेदनुपकृष्ट एव।
3. ग-घ-ङ—असूया संपदो मृत्युरनिवादस् स्त्रियो।
   क—असूयैकपरं मृत्युरतिवादश् श्रियो वधः।
   ख—नास्त्ययं श्लोकः।
4. ख-घ-ङ-म-मा—इतः सार्धश्लोको नास्ति

सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम् ॥ ६॥

[1]नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकस्सर्वभूतानां न पुंसां वामलोचना ॥ ७॥

आशा धृतिं हन्ति समृद्धिमन्तकः
क्रोधश्श्रियं हन्ति यशः कदर्यता ।
अपालनं हन्ति पशूंश्च राज-
न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ८॥

[2]अजाश्च कांस्यं रजतं च नित्यं
मध्वादर्शश्शकुनिश्श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नः [3]कुलीन
एतानि ते सन्तु गृहे सदैव ॥ ९॥

अजोऽश्वश्चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खस् स्वर्णनाभोऽथ रोचना ॥ १०॥

गृहे स्थापयितव्यानि [4]धान्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थम् अतिथीनां च भारत ॥ ११॥

1. ख—इतः श्लोकपञ्चकं नास्ति
2. घ-ङ—अयश्च कांस्यं च रसं च।
ग—कांस्यं वृषभकाञ्चने। म—कांस्यं च रसश्च नित्यं।
मा—कांस्यं च रजश्च नित्यं।
3. ग-ख-ङ-म—वयस्य।
4. घ-ङ-म-मा—धर्म्याणि।

इदं च त्वां सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभाद्
धर्मं जह्या जीवितस्यापि हेतोः ॥ १२॥

नित्यो धर्मस्सुखदुःखे ह्यनित्ये
जीवो नित्यो धातुरस्य त्वनित्यः ।
त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये
संतुष्य सन्तोषपरा हि सन्तः ॥ १३॥

महाबलान् पश्य महानुभावान्
प्रशास्य भूमिं धनधान्यपूर्णाम् ।
सज्जान् हित्वा विपुलांश्च भोगान्
गतान् नरेन्द्रान् वशमन्तकस्य ॥ १४॥

मृतं पुत्रं दुःखपुष्टं मनुष्या
उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं [1]रुदन्तश्
चितामध्ये काष्ठमिव [2]क्षिपन्ति ॥ १५॥

अन्यो धनं प्रेतगतस्य भुङ्क्ते
वयांसि चाग्निश्च शरीरधातून् ।

---

1. ङ—रुदन्त्यश् ।
2. ख-घ-ङ—त्यजन्ति ।

द्वाभ्यामयं सह गच्छत्यमुत्र
पुण्येन पापेन च वेष्ट्यमानः ॥ १६॥

उत्सृज्य विनिवर्तन्ते ज्ञातयस्सुहृदस्सुताः ।
[1]अपुष्पानफलान् वृक्षान् यथा तात पतत्रिणः ॥ १७॥

[2]अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयं कृतम् ।
[3]तस्मात्तु सुसुखो यत्नाद् धर्मं सञ्चिनुयाच्छनैः ॥ १८॥

अस्माल्लोकादूर्ध्व[4]ममुष्य चाधो
महत् तमस्तिष्ठति [5]ह्यन्धकारम् ।
तद्वै महामोहनमिन्द्रियाणां
बुद्ध्यस्व मा त्वां प्रलभेत राजन् ॥ १९॥

इदं वचश्शक्ष्यसि चेद् यथाव-
न्निशम्य सर्वं प्रतिपत्तुमेव ।
यशः परं प्राप्स्यसि जीवलोके
भयं न चामुत्र न चेह तेऽस्ति ॥ २०॥

---

1. ख-घ-म—नास्तीदमर्धम् ।
2. ख-घ-ङ-म-मा—अग्निं प्राप्तं हि पुरुषं कर्मैवान्वेति यत् कृतम् ।
[पाठान्तरम्]
3. ख-ङ-म-मा—इदमर्धं नास्ति ।
4. ग—मधश्च विश्वं । म-मा—मधश्च विद्वन् ।
घ-ङ—मधश्च तिर्यक् ।
5. ख-ग-घ-ङ-म—चान्तकाले । मा—ह्यन्तकाले ।

आत्मा नदी भारत पुण्यतीर्था
　सत्योदका धृतिकूला दयोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा
　पुण्यो ह्यात्मा नित्यमच्छोऽम्भ एव ॥　　२१॥

कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥　　२२॥

प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं
　विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयि[1]त्वा प्रसाद्य
　यस्सम्पृच्छेन्न स मुह्येत् कदाचित् ॥　　२३॥

धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा ।
चक्षुश्श्रोत्रे च मनसा मनो वाचं च [2]कर्मणा ॥　　२४॥

नित्योदकी नित्ययज्ञोपवीती
　नित्यस्वाध्यायी [3]पतितान्नवर्जी ।
[4]सत्यं ब्रुवन् गुरवे कर्म कुर्वन्
　न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥　　२५॥

---

1. ग-घ-ङ-म-मा—त्वोपपद्य ।
2. ख-ग-घ-ङ-मा—विद्यया ।
3. ख-ग-घ-ङ-म-मा—वृषलान्न ।
4. मा—ऋतं ब्रुवन् ।　म—मतं ब्रुवन् ।　ख-घ-ङ—ऋतं वदन् ।

अधीत्य वेदान् परिसंस्तीर्य चाग्नीन्
इष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतस्सङ्ग्रामे क्षत्रियस्स्वर्गमेति ॥ २६॥

वैश्योऽधीत्य ब्राह्मणान् क्षत्रियांश्च
धनैः काले संविभज्याश्रितांश्च ।
[1]त्रेतापूतं धूममाघ्राय पुण्यं
प्रेत्य स्वर्गे देवसुखानि भुङ्क्ते ॥ २७॥

[2]ब्रह्म क्षत्रं वैश्यवर्णं च शूद्रः
क्रमेणैतान् न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपापस्
त्यक्त्वा देहं [3]स्वर्गसुखानि भुङ्क्ते ॥ २८॥

चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो
हेतुं चात्र ब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्रस्
तत् त्वं राजन् राजधर्मे नियुङ्क्ष्व ॥ २९॥

धृतराष्ट्रः—
एवमेतद्यथाऽऽत्थ त्वं अनुशाससि नित्यदा ।
ममापि च मतिस्सौम्य भवत्येवं यथाऽऽत्थ माम् ॥ ३०॥

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ग—सिद्धिमिष्टां व्रजेच्च । ङ-म-मा—सिद्धसुखानि भुङ्क्ते ।

विदुरः—

सा तु बुद्धिः कृताऽप्येवं पाण्डवान् प्रति [1]मे सदा ।
दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ३१॥

न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।
[2]दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ५१ ॥ प्रजागरपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः]

## ॥ चत्वारिंशोऽध्यायः* ॥

धृतराष्ट्रेण पुनर्धर्मरहस्यकथनं चोदितेन विदुरेण स्वस्य शूद्रयोनिजातत्वेन तत्कथनानौचित्यकथनम् ॥ १ ॥ तथा स्मरणमात्रसन्निहितं सनत्सुजातं प्रति धृतराष्ट्राय तत्त्वोपदेशप्रार्थना ॥ २ ॥

धृतराष्ट्रः—

अनुक्तं यदि ते किञ्चिद् वाचा विदुर विद्यते ।
[3]तन्मे शुश्रूषतो ब्रूहि विचित्रा[4]णि हि भाषसे ॥ १

1. ग-घ-ङ-म—भारत ।
2. ग—दैवमेव कृतं । ङ-म—दिष्टमेव कृतं । मा—दिष्टमेतत्कृतं ।
3. ख-घ-ङ—धर्मं । म—धर्मं । मा—धर्मं शुश्रूषते ।
4. क-ख-घ-ङ-मा—णीह भाषसे ।

* यद्यप्ययमध्यायः भगवद्गीताप्रथमाध्याय इव सनत्सुजातीयोपोद्घाततया सनत्सुजातपर्वणि प्रथमाध्याय एव भवितुमर्हति । तथैवाद्ययावत् सर्वेषु मुद्रितेषु कोशेषु समुद्रित चापि । तथाऽपि अस्माभिरुपलब्धासु सर्वासु मातृकासु प्रजागरपर्वान्तिमाध्यायतया दर्शनाद् यथामातृकमस्माभिस्समुद्रित ॥

विदुरः—

धृतराष्ट्र कुमारो वै यः पुराणस्सनातनः ।
[1]सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ २

[2]स ते गुह्यान् प्रकाशांश्च सर्वान् हृदय[3]संश्रयान् ।
प्रवक्ष्यति महाराज [4]सर्वबुद्धिमतां वरः ॥ ३

धृतराष्ट्रः—

[5]किं त्वं न वेद तद्भूयो यन्मे ब्रूयात् सनातनः ।
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत् तव ॥ ४

विदुरः—

शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
[6]कुमारस्य तु या बुद्धिर् वेद तां शाश्वतीमहम् ॥ ५

ब्राह्मीं हि योनिमापन्नस् सुगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ६

धृतराष्ट्रः—

ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन [7]देहेन स्यादिहैव समागमः ॥ ७

---

1. ख-ग-घ-ङ-मा—सनत्कुमारः । 3. क—संशयान् ।
2. ख-घ-ङ-म-मा—यस्ते ।
4. ग-घ-ङ-म—मनोबुद्धिसमन्वितान् ।
5. ग-घ-ङ-म-मा—तमहं नाभिजानामि तत्त्वतो वै सनातनम् ।
[ पाठान्तरम् ]

6. घ-ङ-म-मा—कवेरस्य तु ।
7. ग—दैवेन । ख-घ-ङ-म-मा—देवेन ।

वैशम्पायनः—

चिन्तयामास विदुरस् तमृषिं संशितव्रतम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ॥ ८

स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तम् अथैनं विदुरोऽब्रवीत् ॥ ९

विदुरः—

भगवन् संशयः कश्चिद् धृतराष्ट्रस्य [1]मानसे ।
यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥ १०

यं श्रुत्वाऽयं मनुष्येन्द्रस् सर्वदुःखातिगो भवेत् ॥ १०॥

लाभालाभौ प्रिय[2]द्वेषौ [3]यथैनं न जरान्तकौ ।
[4]विषहेरन् क्षयामर्षौ क्षुत्पिपासे भयाभये ॥ ११॥

अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ॥ १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ ५१ ॥ प्रजागरपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये १२ श्लोकाः]

[ प्रजागरपर्व समाप्तम्* ]

---

1. अ-क-ख-ग-घ—मानसः ।
2. म-मा—द्वेष्यौ यथैव तु ।
3. ख-घ-ङ—तथैव तु जरान्तकौ ।
4. ख-ग-घ-ङ—मदोन्मादौ । म-मा—भयोन्मादौ ।

* ख-घ-ङ-म-मा—प्रजागरं समाप्तम् इति वर्तते ।
अ-क-ग—न किञ्चिदुक्तम् ।

## ॥ एकचत्वारिंशोऽध्यायः ॥

[ सनत्सुजातपर्व ]

सनत्सुजातेन धृतराष्ट्रं प्रति संसारमोक्षस्वरूपोपदेशः।

वैशम्पायनः—

ततो राजा धृतराष्ट्रो मनीषी
सम्पूज्य [1]वाक्यं विदुरेरितं तत्।
सनत्सुजातं रहिते महात्मा
पप्रच्छ बुद्धिं परमां बुभूषन् ॥ १

धृतराष्ट्रः—

सनत्सुजा[2]त यदिमं शृणोमि
मृत्युर्हि नास्तीति [3]तवोपदेशम्।
देवासुरा ह्याचरन् ब्रह्मचर्यम्
अमृत्यवे तत् कतरन्नु सत्यम् ॥ २

सनत्सुजातः—

अमृत्युः कर्मणा [4]केचिन्मृत्युर्नास्तीति चापरे।
शृणु मे ब्रुवतो राजन् यथैतन्मा [5]विशङ्किथाः ॥ ३

1. अ-क—तं धर्मभृतां वरिष्ठं। 2. अ-क—ताहमिमं।
3. अ-क—तव प्रवादं। ख-मा—तत्रोपदेशः।
4. अ—यन्मां।
5. अ-क-ख-घ-ङ-म-मा—विशङ्कथाः।

उभे सत्ये क्षत्रियाद्य प्रवृत्ते
मोहो मृत्युस्सम्मतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि
सदाऽप्रमादममृतत्वं ब्रवीमि ॥ ४

प्रमादाद्वा असुराः पराभव-
न्नप्रमादाद् ब्रह्मभूतास्सुराश्च ।
न वै मृत्युर्व्याघ्र इवात्ति जन्तून्
[1]नाप्यस्य रूपमुपलभ्यते हि ॥ ५

यमं त्वेके मृत्युमतोऽन्यमाहुर्
आत्मावासममृतं ब्रह्मचर्यम् ।
पितृलोके राज्यमनुशास्ति [2]देवश्
शिवश्शिवानामशिवोऽशिवानाम् ॥ ६

[3]आस्यादेष निस्सरते नराणां
क्रोधः प्रमादो [4]मोहरूपश्च मृत्युः ।
अहङ्कृतेनैव चरन् विमार्गान्
न चात्मनो योगमुपैति [5]किञ्चित् ॥ ७

---

1. अ-क-ख-ङ—नेहास्य । ग—न ह्यस्य । म-मा—न चास्य ।
2. अ-क—'देवः' इति नास्ति—परं तु पादादौ "स वै" इत्यधिकतया विद्यते ।
3. अ-क—आस्यादीषश्च ख—आस्यात्कायं नि । ग—आस्यादेव नि । घ—आस्यादेताश्च ।
4. अ-ग—लोभ । 5. अ-क-ख-घ-म-मा—कश्चित् । ग—देही ।

ते मोहितास्तद्वशे वर्तमाना
इतः प्रेतास्तत्र पुनः पतन्ति ।
[1]ततस्तं देवा [2]अनुपरिप्लवन्ते
अतो [3]मृत्युं मरणादभ्युपैति ॥ ८

कर्मोदये कर्मफलानुरागास्
[4]तत्रानुयान्ति न तरन्ति मृत्युम् ।
[5]सदर्थयोगानवगमात् समन्तात्
प्रवर्तते भोगयोगेन देही ॥ ९

तद्वै महामोहनमिन्द्रियाणां
मिथ्यार्थ[6]योगेऽस्य गतिर्हि नित्या ।
मिथ्यार्थयोगाभिहतान्तरात्मा
स्मरन्नुपास्ते विषयान् समस्तान् ॥ १०

अभिध्या वै प्रथमं हन्ति [7]चैनं
कामक्रोधौ गृह्य चैनं तु पश्चात् ।
एते बालान् मृत्यवे प्रापयन्ति
धीरास्तु धैर्येण तरन्ति मृत्युम् ॥ ११

1. अ-क-ङ-म-मा—अतस्तं । 2. अ-क-ख-ग-घ-ङ—अनु विप्लवन्ते ।
3. अ-ख-ग-घ-ङ—मृत्युः । म-मा—मृत्युः कर्मणा ह्यभ्युपैति ।
4. घ—तत्रानुधावन्ति न तरन्ति मृत्युम् । 6. ग-घ-ङ—योगस्य ।
5. म-मा—इतः सार्धश्लोको नास्ति
7. अ—लोकान् ।

[1]योऽभिध्यायन्नुत्पतिष्णून् निहन्याद्
　　अनादरेणाप्रतिबुध्यमानः ।
स वै मृत्युं मृत्युरिवात्ति भूत्वा
　　एवं विद्वान् योऽभिहन्तीह कामान् ॥　　१२

कामानुसारी पुरुषः कामाननु विनश्यति ।
कामान् व्युदस्य धुनुते यत् किञ्चित् पुरुषो रजः ॥　　१३

[2]देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।
[3]गृध्यन्त एव धावन्ति गच्छन्तश्श्वभ्रमुन्मुखाः ॥　　१४

[4]अमूढवृत्तेः पुरुषस्येह कुर्यात्
　　किं वै मृत्युस्तार्ण इवास्य व्याघ्रः ।
अमन्यमानः क्षत्रिय [5]कश्चिदन्यं
　　[6]नाधीयते तार्ण इवास्य व्याघ्रः ॥　　१५

क्रोधाल्लोभान्मोह[7]भयान्तरात्मा
　　स वै मृत्युस्त्वच्छरीरे य एषः ॥　　१५॥

---

1 अ-क-ख-घ-ङ—सो ।
2. क-ग-घ-ङ-म-मा—तमोऽ ।
3. अ-क-ख—गृध्नन्त इव ।　म-मा—कृष्यन्त इव ।
4. ख-घ-ङ-म-मा—इदमर्धं नास्ति
5. अ-क-ख-ग-घ-ङ-म—किञ्चिदन्यं ।
6. अ-क—नाधीयीत निर्णुदन् पापमायुः ।
7. ङ-म-मा—मया ।

एवं मृत्युं जायमानं विदित्वा
ज्ञाने तिष्ठन् न बिभेतीह मृत्योः ।
विनश्यते विषये तस्य मृत्युर्
मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥ १६॥

धृतराष्ट्रः—
यानेवाहु[1]रिज्यया साधुलोकान्
द्विजातीनां पुण्यतमान् सनातनान् ।
तेषां परार्थं कथयन्तीह वेदा
नैतद्विद्वानेति कथं नु कर्म ॥ १७॥

सनत्सुजातः—
[2]एवं ह्यविद्वान् परियाति तत्र
तथाऽर्थजातं च वदन्ति वेदाः ।
स नेहायाति परं परात्मा
प्रयाति मार्गेण निहन्त्यमार्गान् ॥ १८॥

धृतराष्ट्रः—
कोऽसौ नियुङ्क्ते तमजं पुराणं
स चेदिदं सर्वमनुक्रमेण ।
किं वाऽस्य कार्यमथवा सुखं च
तन्मे विद्वन् ब्रूहि सर्वं यथावत्* ॥ १९॥

---

1. अ-क-ख-म-मा—र्यजतां। 2. अ-म-मा—श्लोकद्वयं नास्ति
*ख-घ-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

सनत्सुजातः—

[1]दोषो महानत्र विभेदयोगे
ह्यनादियोगेन भवन्ति नित्याः ।
तथाऽस्य नाधिक्यमपैति किञ्चिद्
अनादियोगेन भवन्ति पुंसः ॥ २०॥

[2]यदेतद्द्वा भगवान् स नित्यं
विकारयोगेन करोति विश्वम् ।
तथा च तच्छक्तिरिति स्म मन्ये
[3]तदर्थयोगेन भवन्ति वेदाः ॥ २१॥

धृतराष्ट्रः—

यस्मा[4]द्धर्मानाचरन्तीह केचित्
तथाऽधर्मान् केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते [5]वा
उताहो धर्मः प्रति[6]हन्ति पापम् ॥ २२॥

सनत्सुजातः—

[7]तस्मिन् स्थितो वाऽप्युभयं हि नित्यं
ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम् ।

---

1. म-मा—कोशयोः श्लोकद्वयं नास्ति
2. अ-क-म-मा —यदेतदात्थ भगवांस्तु नित्यं ।
3. अ-ख-ग-घ-म-मा—तदाऽर्थयोगेन भवन्ति नित्याः ।
4. अ-ख-म-मा —द्धर्मान् नाचरन्तीह । 5. अ-क—स्म । ङ—स्विद् ।
6. ख-घ-ङ—हन्तीह । 7. म-मा—श्लोकोऽयं नास्ति

अतोऽन्यथा पुण्यमुपैति देही
तथागतं पापमुपैति सिद्धम् ॥ २३॥

[1]गत्वोभयं कर्मणा भुज्यते[2]ऽस्थिरं
शुभस्य पापस्य स चापि [3]कर्मणा ।
[4]धर्मेण पापं प्रणुदतीह विद्वान्
धर्मो बलीयानिति तत्र विद्धि[5] ॥ २४॥

धृतराष्ट्रः—

[6–7]यानिहाहुस्स्वस्य धर्मस्य लोकान्
द्विजातीनां पुण्यकृतां सनातनान् ।
तेषां क्रमान् कथय ततोऽपि चान्यान्
एतद्विद्वन् वेत्तुमिच्छामि कर्म ॥ २५॥

---

1. ब-ङ—स्थित्वोभयं कर्मणि ।
2. अ-क-म-मा—तेदं ।
3. अ-क-म-मा—कर्मणः ।
4. अ-क-म-मा—धर्मेणाधर्मं ।
5. म-मा—उभयं तत्रोपभुज्यते शुभाशुभं फलं धर्मस्यैतरस्य च ।
धर्मेणाधर्मं प्रणुदन्तीह विप्राः धर्मो बलीयानिति तत्र विद्धि॥
[पाठान्तरम्]

6. ख-ब-ङ—नास्त्ययं श्लोकः ।
7. म-मा—यानेवाहुस्त्विज्यया साधु लोकान्
द्विजातीनां पुण्यतमान् सनातनान् ।
तेषां पराक्रमं कथयन्तस्ततोऽन्ये
एतद्विद्वानेति कुलं च धर्मम् ॥ [पाठान्तरम्]

सनत्सुजातः—

येषां [1]धर्मेषु विस्पर्धा बले बलवतामिव ।
ते ब्राह्मणा इतः प्रेत्य [2]स्वर्गे यान्ति प्रकाशताम् ॥ २६॥

[3]येषां धर्मे च न स्पर्धा तेषां [4]तज्ज्ञानसाधनम् ।
ते ब्राह्मणा इतो मुक्तास् स्वर्गं यान्ति त्रिविष्टपम् ॥ २७॥

तस्य सम्यक्समाचारम् आहुर्वेदविदो जनाः ।
नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २८॥

[5]यत्र मन्येत भूयिष्ठं प्रावृषीव [6]तृणोदकम् ।
[7]अन्नपानं च ब्राह्मणस् तज्जीवन् नानुसञ्ज्वरेत् ॥ २९॥

[8]यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन् [9]स श्रेयान् नेतरो जनः ॥ ३०॥

यो वाऽ[10]कथयमानस्य [11]ह्यात्मानं नानुसञ्ज्वरेत् ।

---

1. अ-क—व्रतेऽथ । म-मा—बलेऽथ ।
2. अ—ब्रह्मलोकप्रकाशकाः । क—स्वर्गलोकप्रकाशकाः । म-मा—स्वर्गलोके प्रकाशते ।
3. म-मा—श्लोकद्वयं नास्ति 4. अ—ज्ञानं हि ।
5. अ-क-ख—यत्तु ।
6. अ-ख-ग-घ-ङ-म-मा—तृणोलपम् ।
7. अ—अनु हीनं ब्राह्मणस्य । क—अन्नं पानं च गोष्ठं च तज्जीवन् ।
8. अ—यत्र वै कथ्यमानस्य विप्रयात्यशिवं भयं ।
9. अ-ङ—श्रेयसां नेतरो जनः ।
10. अ-क-ङ—ऽकामय । 11. अ-ङ—स ह्यन्नं ।

[1]ब्रह्मस्वं [2]नोपहन्याद्वा तदन्नं सम्मतं सताम् ॥ ३१॥

[3]ये यथा [4]वान्तमश्नन्ति बाला नित्यमभूतये ।
[5]एवं ते वान्तमश्नन्ति स्ववीर्यस्योप*भोजनात् ॥ ३२॥

नित्यमज्ञात[6]चर्या म इति मन्येत [7]ब्राह्मणः ।
ज्ञातीनां तु वसन् मध्ये [8]नैवं विन्देत किञ्चन ॥ ३३॥

[9]को ह्येवमन्तरात्मानं ब्राह्मणो [10]मन्तुमर्हति ।
[11]निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥ ३४॥

योऽन्यथा सन्तमात्मानम् अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ३५॥

[12]अश्रान्तस्स्याद[13]नादाता सम्मतो निरुपद्रवः ।

---

1. म-मा—एको वै ह्यन्तरात्मानं ब्राह्मणो हन्तुमर्हति। [अधिकः पाठः]
2. अ-क-ख-घ-म-मा—नोपभुञ्जीत।
3. ग-घ-ङ—कुशवल्कलचेलाद्यं ब्रह्मस्वं योगिनो विदुः। [अधिकः पाठः]
4. अ-क—वा समश्नन्ति। ख—वान्नमश्नन्ति।
5. अ-क—एवमेवान्नमश्नन्ति। ख—एवं ते चान्नमश्नन्ति।
* अ-क—जीवनात्॥ ग—सेवनात्॥
6. अ—चर्येण। 7. अ-क—वै द्विजः।
8. मा—नैव। अ-क—तं विदुर्ब्राह्मणं बुधाः।
9. अ-क—को ह्यनन्तरमात्मानं। म-मा—को ह्येव स्वान्तरात्मानं।
10. अ-क-ग-घ-ङ-मा—हन्तु।
11. अ-क—निर्लीन। म-मा—अर्धलयं न दृश्यते
12. अ-क-ग—तस्माद्धि क्षत्रियस्यापि ब्रह्मावसति पश्यति। [अधिकः पाठः]
13. अ-क—थाधीतः। म-मा—नादानात्।

शिष्टो न शिष्टवत् स स्याद् ब्राह्मणो ब्रह्मवित् कविः ॥ ३६॥

अनाढ्या [1]मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।
ते दुर्धर्षा दुष्प्रकम्प्यास् तान् विद्याद्ब्रह्मणस्तनुम् ॥ ३७॥

सर्वान् स्विष्टकृतो देवान् विद्याद् य इह कश्चन ।
न समानो ब्राह्मणस्य यस्मिन् प्रयतते स्वयम् ॥ ३८॥

यमप्रयतमानं तु मानयन्ति स मा[2]नितः ।
[3]न मान्यमानो मन्येत नावमाने[4]ऽनुसञ्ज्वरेत् ॥ ३९॥

[5]लोकस्वभाव[6]वृत्तिर्हि निमेषोन्मेषवत् सदा ।
विद्वांसो मानय[7]न्तीह इति मन्येत मानितः ॥ ४०॥

अधर्म[8]विदुषो मूढा [9]लोकशास्त्रविवर्जिताः ।
न मान्यं मानयिष्यन्ति [10]इति मन्येदमानितः ॥ ४१॥

न वै मानं च मौनं च सहितौ चरतस्सदा ।
[11]अयं हि लोको मानस्य ह्यसौ मौनस्य तद्विदुः ॥ ४२॥

---

1. अ—मानुषा वित्ते आढ्या दैवे तथा क्रतौ । 2. ग-घ-ङ—हिताः ।
3. अ-क—तं मन्यमानो । 4. ग-घ-ङ-म-मा—ऽति ।
5. अ-ख-म-मा—इदमर्धं नास्ति 6. ग-घ—एषो हि ।
7. अ-क-ख-व-ङ—न्तीति माऽवमन्येदमानितः ।
8. अ-क-ख-ग-घ-ङ-म—निपुणा ।
9. अ-क-ग-म-मा—लोके मायाविशारदाः ।
10. अ-क—मान्यानामवमानिता ।
ख-ग-घ-ङ-म—एवं मन्येत मानितः ।
11. ख-ग-घ-ङ—अयं मानस्य विषयो।

[1]श्रीर्हि मानार्थसंवासा सा चापि परिपन्थिनी ।
ब्राह्मी [2]सुदुर्लभा श्रीर्हि [3]प्रज्ञाहीनेन क्षत्रिय ॥ ४३॥

द्वाराणि तस्याः प्रवदन्ति सन्तो
बहुप्रकाराणि [4]दुराचराणि ।
सत्यार्जवे [5]ह्रीर्दमशौचविद्याष्
षण्मानमोहप्रति[6]बन्धनानि ॥ ४४॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ५२ ॥ सनत्सुजातपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४४॥ श्लोकाः]

## ॥ द्विचत्वारिंशोऽध्यायः ॥

धृतराष्ट्रेण सनत्सुजातं प्रति सन्यासस्वरूपस्य तपसः समृद्धात्यृद्धविभेदस्य तपःकल्मषस्य कल्मषापनयनस्य ब्रह्मवेदनस्य ब्रह्मवित्स्वरूपस्य च प्रश्नः ॥ १ ॥ सनत्कुमारेण तत्प्रश्नसमाधिः—

धृतराष्ट्रः—
[7]कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावम् ।

1. अ-क-म-मा—श्रीस्सुखस्येह संवासा । 2. अ-क—तु दुश्चरा ।
3. ख-ग-घ-ङ-म—विद्याहीनेन ते क्षयः ।
4. अ-क—दुरुद्धराणि । ख-ग-घ-ङ-म—दुरावराणि ।
5. अ-ख—ह्रीर्दमशौचे च । ङ—ह्रीदमौ शौचविद्ये च ।
6. अ-क—रोधनानि । 7. म-मा—श्लोकद्वयं नास्ति

मौनेन विद्वा[1]नुत याति मौनं
कथं मुने मौनमिहाचरन्ति ॥ १

सनत्सुजातः—

यतो न वेदा मनसा सहैनम्
अनुप्रविशन्ति ततोऽथ मौनम् ।
यत्रोत्थितो वेदशब्दस्तथाऽयं
स तन्मयत्वेन विभाति राजन् ॥ २

धृतराष्ट्रः—

ऋचो यजूं[2]ष्यथोऽधीते सामवेदं च यो द्विजः ।
पापानि कुर्वन् पापेन लिप्यते [3]न स लिप्यते* ॥ ३

सनत्सुजातः—

नैनं सामान्यृचो वाऽपि [4]यजूंषि च विचक्षण ।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ४

न छन्दांसि वृजिनात् तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षाश्
छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५

---

1. अ-क-म-मा—ननु ।
2. क-म—ष्यथो वेद । ख—ष्यधीयीत । ब—ष्यधीतेऽथ ।
अ—षि यो वेद ।
3. अ—किं न विद्यते । क—किं न लिप्यते ।
* न स लिप्यते इति काकुः ।
4. अ-ख-मा—न यजूंष्यविचक्षणम् । क-म — न यजूंषि विचक्षण ।

धृतराष्ट्रः—

न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण ।
अथ कस्मात् प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ६

सनत्सुजातः—

[1]तस्यैव नामादिविशेषरूपैर्
इदं जगद्भाति महानुभाव ।
निर्दिश्य सम्यक् प्रवदन्ति वेदास्
तद्विश्ववैरूप्यमुदाहरन्ति ॥ ७

तदर्थमुक्तं तप एतदिज्या
ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चात्
[2]स जायते ज्ञानविदीपितात्मा ॥ ८

ज्ञानेन चात्मानमुपैति विद्वान्
अथान्यथा वर्गफलानुकाङ्क्षी ।
अस्मिन् कृतं तत् परिगृह्य सर्वम्
अमुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ९

अस्मिँल्लोके तपस्तप्तं फलमन्यत्र [3]भुज्यते ।
ब्राह्मणानामिमे लोका [4]ऋद्धे तपसि संयताः ॥ १०

1. म-मा—श्लोकत्रयं नास्ति 2. अ-ख-ग-ङ—सञ्जायते ।
3. अ-क-म-मा—दृश्यते ।
4. अ—ऋद्धौ तपसि तिष्ठताम् । क—बुद्धौ तपसि तिष्ठताम् ।

[1]ब्राह्मणानां तपस्स्वृद्धम् अन्येषां तावदेव तत् ।
एतत् समृद्धमत्यृद्धं तपो भवति केवलम् ॥ ११

धृतराष्ट्रः—

[2]कथं [3]समृद्धमत्यृद्धं तपो भवति केवलम् ।
सनत्सुजात तद्ब्रूहि कथं विद्यामहं प्रभो ॥ १२

सनत्सुजातः—

[4]निष्कल्मषं तपस्त्वेतत् केवलं परिचक्षते ।
एतत् समृद्ध[5]मत्यृद्धं तपो भवति नान्यथा ॥ १३

[6]तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।
तपसा वेदविद्वांसः [7]परं त्वमृतमाप्नुयुः ॥ १४

धृतराष्ट्रः—

कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।
सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ १५

सनत्सुजातः—

क्रोधादयो द्वादश यस्य दोषास्
तथा नृशंसानि षडत्र राजन् ।

---

1. म-मा—श्लोकोऽयं नास्ति		2. घ—इदमर्धं नास्ति
3. ख-ङ—समृद्धमत्यर्थं । क—समृद्धमसमृद्धं । ग—समस्तमत्यृद्धं ।
4. म-मा—श्लोकद्वयं नास्ति		5. ख-घ-ङ—मत्यर्थं ।
6. एतच्छ्लोकमारभ्य 37 श्लोकपर्यन्ताः 24 श्लोकाः अ-क—कोशयोः नोपलभ्यन्ते ।
7. ख—परमं धनमाप्नुयुः ॥

[1]ज्ञानादयो द्वादश चाततानाश्
शास्त्रे गुणा ये विदिता द्विजानाम् ॥ १६

क्रोधः कामो लोभमोहौ विवित्सा
[2]कृपाऽसूया मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च महागुणेन
सदा वर्ज्या द्वादशैते नरेण ॥ १७

एकैक[3]मेते राजेन्द्र मनुष्यान् पर्युपासते ।
लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥ १८

विकत्थनस्स्पृहयालुर्मनस्वी
बिभ्रत् क्रोधं चपलो रोषणश्च ।
एते प्रोक्ताष्षण्णराः पापशीलाः
प्रकुर्वते नोत धर्मं सुदुर्गम् ॥ १९

सम्भोगसंविद्विषमोऽथ मानी
दत्तानुतापी कृपणो बलीयान् ।
वर्गप्रशंसी [4]वनितां च द्वेष्टा
एते परे सप्त नृशंस[5]रूपाः ॥ २०

ज्ञानं च सत्यं च दमश्श्रुतं च
अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।

1. म—मा—धर्मा । 2. ग—क्षमा । 3. ग—ङ—मेव ।
4. ख—यतिनां । 5. म—वर्गाः ।

यज्ञश्च दानं च धृतिश्शमश्च
महाव्रता द्वादश ब्राह्मणस्य ॥ २१

यस्त्वेतेभ्यो[1]ऽप्रवसेद्द्वादशभ्यस्
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वा विशिष्टो
नास्य स्वमस्तीति स वेदितव्यः ॥ २२

दमस्त्यागोऽथाप्रमाद एतेष्वमृतमाहितम् ।
तानि सत्यमुखान्याहुर् ब्राह्मणानां मनीषिणाम् ॥ २३

[2]दमोऽष्टादशदोषस्स्यात् त्यागो भवति षड्गुणः ।
दोषत्यागोऽप्रमादस्स्यात् स चाप्यष्टगुणो मतः ॥ २४

दमोऽष्टादशदोषस्स्यात् प्रतिकूलं [3]कृते भवेत् ॥ २४॥

अनृतं [4]पैशुनं तृष्णा प्रातिकूल्यं तमोऽरतिः ।
[5]लोकद्वेषोऽतिमानश्च विवादः प्राणिपीडितम् ॥ २५॥

परिवादोऽतिवादश्च परितापोऽक्षमाऽधृतिः ।
[6]असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ॥ २६॥

एतैर्दोषैर्विमुक्तो यस् स दमस्साद्भिरुच्यते ॥ २७

---

1. ग—न।
2. म—श्लोकोऽयं नास्ति
3. घ-ङ—कृतो।
4. ग-घ—वैशसं।
5. म-मा—श्लोकद्वयं नास्ति
6. ग-ङ—असन्धिः।

विपर्ययात् स्मृता एते [1]मददोषा उदाहृताः ।
[2]दोषा दमस्य ये प्रोक्तास् तान् दोषान् परिवर्जयेत् ॥ २८

श्रेयांस्तु षड्विधस्त्यागस् तृतीयस्तत्र दुष्करः ।
तेन दुःखं तरत्येव तस्मिंस्त्यक्ते जितं भवेत् ॥ २९

अर्हते याचमानाय पुत्रान् वित्तं ददाति यत् ।
इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ ३०

कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ।
त्यक्तैर्द्रव्यैः प्रियो भूयो नोपयुङ्क्ते च कामतः ॥ ३१

अप्रिये तु समुत्पन्ने त्यक्तं जातु न वाञ्छति ।
अप्रमादी भवेदेतैस् स चाप्यष्टगुणो महान् ॥ ३२

सत्यं दानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयो ब्रह्मचर्यं च तथाऽसङ्ग्रह एव च॥ ३३

एवं दोषा दमस्योक्तास् तान् दोषान् परिवर्जयेत् ।
दोषत्यागेऽप्रमादस्स्यात् स चाप्यष्टगुणो मतः ॥ ३४

तांस्तु सत्यमुखानाहुस् सत्ये ह्यमृतमाहितम् ॥ ३४॥

सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।
निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ॥ ३५॥

एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३६

---

1. ब-ङ—दम ।  2. ख-ब-ङ—नास्तीदमर्धम्

[1]दोषैरेतैर्वियुक्तं तु गुणैरेतैस्समन्वितम् ।
एतत् समृद्धमत्यृद्धं तपो भवति केवलम् ॥　　३७

यन्मां पृच्छसि राजेन्द्र [2]सङ्क्षेपात् तद्ब्रवीमि ते* ।
[3]एतत् पापहरं [4]शुद्धं जन्ममृत्यु[5]जरापहम् ॥　　३८

धृतराष्ट्रः—
[6]ऋद्धात्यृद्धाविभेदं मे कथयस्व महामुने ॥　　३८॥

सनत्सुजातः—
[7]ऋद्धं तद्ब्राह्मणानां यद् अत्यृद्धमिह कामिनाम् ॥　　३९

[8]इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्तश्चेत् स सुखी भवेत् ॥　　४०

धृतराष्ट्रः—
आख्यानपञ्चमैर्वेदैर् भूयिष्ठं कथ्यते जनः ।
तथा चान्ये चतुर्वेदास् त्रिवेदाश्च तथा परे ॥　　४१

द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ।
एतेषु मेऽधिकं ब्रूहि यमहं वेद वै द्विजम् ॥　　४२

सनत्सुजातः—
एकस्य वेदस्याज्ञानाद् वेदास्ते बहवोऽभवन् ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥　　४३

---

1. घ-ङ—दोषैरशेषैर्मुक्तं तु ।
2. अ-क-म-मा—किं भूयः श्रोतुमिच्छसि ।
*मा—अत्रैवाध्यायसमाप्तिर्दृश्यते ।　3. मा—इदमर्धं नास्ति
4. अ-ङ—पुण्यं ।　5. अ-क-ख-ग-घ-म—भया ।
6. अ-क-ग—कोशेष्वेवेदमर्धं दृश्यते
7. अ-क-ग—कोशेष्वेवेदमर्धं वर्तते　8. म-मा—श्लोकोऽयं नास्ति

[1]य एनं वेद तत् सत्यं प्राज्ञो भवति नित्यदा ॥ ४३॥
दानमध्ययनं यज्ञो लोभादेतत् प्रवर्तते ॥ ४४

सत्यात् प्रच्यवमानानां [2]सङ्कल्पा वितथा भवन् ।
[3]ततः कर्म प्रतायेत [4]सत्यस्यानवधारणात् ॥ ४५

मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्मणा ।
सङ्कल्पासिद्धः पुरुषस् सङ्कल्पानधितिष्ठति ॥ ४६

[5]अनैभृत्येन वैतस्य दीक्षितव्रतमाचरेत् ।
नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥ ४७

[6]ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते [7]तपः।
विद्याद्बहु पठन्तं तु [8]द्विजं वै बहुपाठिनम् ॥ ४८

[9-10]तस्मात् क्षत्रिय मा मंस्था जपितेनैव वै द्विजम् ।
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ४९

1. अ-क—एनं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते। [पाठान्तरम्]
म-मा—एकं वेदमनुत्साद्य।
2. अ—सङ्कल्पश्च वृथा भवेत्। ग-घ-म-मा—सङ्कल्पो वितथो भवेत्।
क—सङ्कल्पश्च तथा भवेत्।
3. अ-क-म-मा—ततो यज्ञः।
4. क-म-मा—सत्यस्यैवावधारणात्। 5. ङ-म-मा—सुतैर्भृत्यैर्न।
6. ग-घ-ङ—विज्ञानं चैतत्। 7. ग-घ-ङ—मृषा।
8. ग-ङ-म-मा—बहुवागिति ब्राह्मणम्।
9. ग-म-मा—न स क्षत्रिय पन्था वै जहि तेनैव ब्राह्मणम्।
10. ङ—इदमर्धं न दृश्यते।

[1]छन्दांसि नाम क्षत्रिय तान्यथर्वणः
पुरा जगौ महर्षिसङ्घ एषः ।
छन्दोविदस्ते य उतानधीतवेदा
न वेदवेद्यस्य विदुर्हि तत्त्वम् ॥ ५०

[2]छन्दांसि नाम द्विपदां वरिष्ठ
स्वच्छन्दयोगेन भवन्ति तत्र ।
छन्दोविदस्तेन च तानधीत्य
गता हि वेदस्य न वेद्यमार्याः[3] ॥ ५१

न वेदानां वेदिता कश्चिदस्ति
कश्चित्त्वेतान् बुध्यते वाऽपि राजन् ।
यो वेद वेदान् न स वेद वेद्यं
सत्ये स्थितो यस्तु स वेद वेद्यम् ॥ ५२

[4]न वेदानां वेदिता कश्चिदस्ति
वेदेन वेदं न विदुर्न वेद्यम् ।

---

1. म-मा—श्लोकोऽयं नोपलभ्यते ।
2. अ-क—श्लोकोऽयं न दृश्यते ।
3. ख-ग-घ-ङ-म-मा—छन्दांसि नाम द्विपदां वरिष्ठ
सुरैः पुरस्तादृषिसेवितानि ।
छन्दोविदस्तेन च तानधीत्य
नामैव वेदस्य विदुर्न वेद्यम् ॥ [पाठान्तरम्]
4. अ-क—सार्धश्लोकोऽयं नास्ति

यो वेद वेदं स च वेद वेद्यं
यो वेद वेद्यं न स वेद सत्यम् ॥ ५३

यो वेद वेदान् स च वेद वेद्यं
न तं विदुर्वेदविदो न वेदाः ।
[1]तथाऽपि वेदेन विदन्ति वेदं
ये ब्राह्मणा वेदविदो भवन्ति ॥ ५४

धर्मांशभागस्य तथा हि वेदा
यथा हि शाखा च महीरुहस्य ।
संवेदने चैव यथाऽऽमनन्ति
तस्मिन् हि सत्ये परमात्मनोऽर्थे ॥ ५५

अभिजानामि ब्राह्मणम् व्याख्यातारं विचक्षणम् ।
[2]एवं यो हि विजानाति स जानाति परं हि तत् ॥ ५६

[3]यश्छिन्नविचिकित्सस्स व्याचष्टे सर्वसंशयान् ।
[4]तस्य चान्वेषणं गच्छेत् प्राचीनं नोत दक्षिणम् ॥ ५७

[5]नार्वाचीनं कुतस्तिर्यङ् मा विशन्तु कदाचन ॥ ५७॥

नास्य पर्येषणं गच्छेत् प्रत्यर्थिषु कथञ्चन ॥ ५८

1. अ-क-म-मा—इदमर्धं नास्ति
2. अ-क-म-मा—नास्तीदमर्धम् ।
3. ख-ग-घ-ङ—नास्तीदमर्धम् ।
4. क-ग-घ-ङ—नास्तीदमर्धम् । 5. ङ-म-मा—नास्तीदमर्धम् ।

[1]अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम् ॥ ५८॥
तूष्णीम्भूत उपासीत [2]न चेच्छेन्मनसा ह्यपि ।
[3]अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ॥ ५९॥
मौनाद्धि मुनिर्भवति नारण्यवसनान्मुनिः ।
[4]अक्षरं तं तु यो वेद स मुनिश्रेष्ठ उच्यते ॥ ६०॥
सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते ।
[5]तन्मूलतो व्याकरणं व्याकरोतीति तत् तथा ॥ ६१॥
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।
सत्ये वै ब्राह्मणस्तिष्ठंस् [6]तद्विद्वान् सर्वविद्भवेत् ॥ ६२॥
[7]ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।
[8]वेदानां चानुपूर्व्येण चैत[9]द्विद्वन् ब्रवीमि ते ॥ ६३॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ५२ ॥ सनत्सुजातपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ६३॥ श्लोकाः ]

---

1. अ-क-ग-ख-म-मा—इदमर्धं न दृश्यते ।
2. अ-क—नापेक्षेन्म । म-मा—न चेष्टेन्म ।
3. अ-म-मा—अभ्यावर्तस्व तद्ब्रह्म अन्तरात्मनि वै श्रुतम् ।
4. अ-क—स्वलक्षणं तु । 5. अ-क-म-मा—इदमर्धं न दृश्यते ।
6. अ-क-म-मा—ब्रह्म पश्यति क्षत्रिय ।
7. अ-क-म-मा—इदमर्धं नास्ति
8. अ-क—वेदेषु । 9. अ-क-ख-ग-घ—बुद्ध्वा ।

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

सनत्सुजातेन धृतराष्ट्रं प्रति तत्त्वोपदेशः ॥

धृतराष्ट्रः—

सनत्सुजात [1]यदिमां परार्थां
ब्राह्मीं वाचं [2]वदसि हि विश्वरूपाम् ।
परां हि [3]कार्येषु सुदुर्लभां कथां
तद् ब्रूहि मे वाक्य[4]मेवं कुमार ॥ १

सनत्सुजातः—

[5]नैतद्ब्रह्म त्वरमाणेन लभ्यं
[6]यन्मां पृच्छस्यभिषङ्गेण राजन् ।
[7]बुद्धौ विलीने मनसि प्रचिन्त्या
[8]विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २

---

1. अ—यामिमां । क—य इमां ।
2. अ-ख-ग-घ-स-मा—वदसे ।
3. अ—कार्म्येन । क—कामेन । घ—कालेषु । 4. अ-क—मेतत् ।
5. क—नेदं ब्रह्म । 6. अ-क-म-मा—यन्मां पृच्छन्नतिहृष्यस्यतीव ।
7. अ-क—अत्यन्तविद्यामभिधास्ये पुराणीम् ।
म—अन्यां विद्यां हि वदन्ति बुद्धा ।
मा—अन्यां विद्यामभिवदन्ति सन्तो ।
8. अ-क—बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् ।
म-मा—बुध्यन्ति यां ब्रह्मचर्येषु जीर्णाम् ।

धृतराष्ट्रः—

[1]आद्यां विद्यां वदसि हि [2]सत्यरूपां
　　या प्राप्यते ब्रह्मचर्येण सद्भिः ।
अनारभ्यां वसतीह कार्यकाले
　　कथं ब्राह्मण्यममृतत्वं लभेत ॥　　३

सनत्सुजातः—

[3]अव्यक्तविद्यामभिधास्ये पुराणीं
　　बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् ।
यां प्राप्यैनं मर्त्यभावं त्यजन्ति
　　या वै विद्या गुरुवृद्धेषु नित्या ॥　　४

धृतराष्ट्रः—

[4]ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।
तत् कथं ब्रह्मचर्यं स्याद् एतद्विद्वन् ब्रवीहि मे ॥　　५

सनत्सुजातः—

आचार्ययोनिमिह ये प्रविश्य
　　भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति
　　विहाय देहं परमं यान्ति [5]सत्यम् ॥　　६

[6]येऽस्मिँल्लोके विजयन्तीह कामान्
　　ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।

---

1. अ-क—अत्यन्तविद्यामिति यत् सनातनीम्
　　ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम् ।　　[ पाठान्तरम् ]
2. ग-ङ—विश्वरूपां ।
3. इदमर्धम् अ-क—कोशयोः द्वितीयश्लोकोत्तरार्धतया वर्तते ।
4. अ-क-ख-म-मा—श्लोकोऽयं नास्ति　　5. अ-क—योगम् ।
6. ग-म-मा—अस्मिल्लोके ।

त आत्मानं निर्हरन्तीह देहा-
न्मुञ्जादिषीकामिव [1]धीरभावात् ॥ ७

[2]शरीरमेतौ कुरुतः पिता माता च भारत ।
[3]आचार्यतस्तु यज्जन्म तत् सत्यं वै तथाऽमृतम् ॥ ८

य आवृणोत्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ ९

गुरुं शिष्यो नित्य[4]मभिवादयीत
स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानान्न माद्येन्नादधीत रोषम्
एष प्रथमो ब्रह्मचर्यस्य पादः ॥ १०

[5]शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यश्शुचिः ।
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते[6] ॥ ११

[7]यथा नित्यं गुरौ वृत्तिर् गुरुपत्न्यां तथाऽऽचरेत् ।

---

1. अ-क—सत्वसंस्थाः । 2. ख—श्लोकोऽयं नास्ति
3. अ-क-म-मा—आचार्यशास्ता या जातिः सा पुण्या साऽजराऽमरा ।
4. अ-क—मभिवन्दमानः । घ-ङ—मभिमन्यमानः ।
5. अ-क-म-मा—श्लोकोऽयं नास्ति
6. अ-क-ङ-म-मा—आचार्यस्य प्रियं कुर्यात् प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥
[अधिकः पाठः]
7. अ-म-मा—समा गुरौ यथा वृत्तिर् गुरुपत्न्यां तथा भवेत् ।
यथोक्तकारी प्रियकृत् तृतीयः पाद उच्यते ॥ [पाठान्तरम्]

तत्पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते ॥ १२

य आचार्येणात्मकृतं विजानन्
ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
यन्मन्यते तं प्रति हृष्टबुद्धिस्
स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ १३

[1]नाचार्याय कृतमिति चाभिमानात्
प्राज्ञो मन्येन्नैतदहं करोमि ।
इतीव मन्येत न भाषयेत
स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ १४

आचार्याय प्रियं कुर्यात् प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ॥ १५

[2]कालेन पादं लभते तथाऽयं
तथैव पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छेच्
छास्त्रेण पादं च ततोऽभियाति ॥ १६

---

1. ब—एवं वसन्तं यदुपप्लवेद्धि
नाचार्याय कृतमिति चाभिमानात् ।
प्राज्ञो मन्येतैतदहं करोमि
स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ [पाठान्तरम्]
अ-क—नाचार्यस्यानुपकृत्य प्रवासं प्राज्ञः कुर्वीत नैतदहं करोमि । [पाठान्तरम्]

2. म-मा—श्लोकोऽयं न दृश्यते।

[1]ज्ञानादयो द्वादश यस्य रूपम्
अन्यानि चाङ्गानि तथा बलं च ।
आचार्ययोगे फलतीति चाहुर्
ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ १७

[2]एवं प्रवृत्तो यदुपालभेत वै
धनं ह्याचार्याय तदनुप्रयच्छेत् ।
सतां वृत्तिं बहुगुणामेवमेति
गुरोः पुत्रे भवति च वृत्तिरेषा ॥ १८

एवं वसन् सर्वतो [3]वर्धते च
बहून् पुत्राँल्लभते च प्रतिष्ठाम् ।
[4]वर्षन्ति चास्मै प्रदिशो दिशश्च
वसन्त्यस्मिन् ब्रह्मचर्ये जनाश्च ॥ १९

एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा [5]ब्रह्मचर्येण चाभवन् ॥ २०

---

1. म-मा—श्लोकोऽयं नास्ति ।
2. ख-ग-घ—एवं वसन्तं यदुपप्लवे धनम् ।
म-मा—एवं सन्तं यदुपप्लवेरन् धनम् ।
ङ—एवं सन्तं यदुपप्लवेद्धनम् ।
3. अ-क—दृश्यते हि ।
4. ख-ग-घ-ङ-म-मा—प्राप्य प्रतिष्ठेत् प्रदिशो दिशश्च
धीरः पुनर्ब्रह्मचर्यं चरेत ॥ [पाठान्तरम्]
5. अ-क—ब्रह्मलोकं मनीषिणः ।
ग-घ-ङ—ब्रह्मचर्यान्मनीषिणः ।
म-मा—ब्रह्मचर्यं मनीषिणः ।

[1]एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् ।
एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ २१

[2]आकाङ्क्ष्यार्थसमायोगाद् रसभेदोऽर्थिनामिव ।
एवमेतत् समाज्ञाय तादृग्भावं गतास्त्विमे ॥ २२

[3]य आश्रयेत् पावयेच्चापि राजन्
सर्वं शरीरं तपसा तप्यमानः ।
एतेन वै [4]बलमभ्येति विद्वान्
मृत्युं तथा स जयत्यन्तकाले ॥ २३

अन्तवतः क्षत्रिय ते जयन्ति
लोकाञ्जनाः कर्मणा [5]निर्मलेन ।
[6]ज्ञानेन विद्वांस्तेज अभ्येति नित्यं
न विद्यते ह्यन्यथा तस्य पन्थाः ॥ २४

धृतराष्ट्रः—
आभाति शुक्लमिव लोहि[7]तमिवाथो
कृष्णम[8]थार्जुनं [9]काद्रवं वा ।

---

1. अ-क—गन्धर्वाणामनेनैव रूपमप्सरसामभूत् ।
2. अ-क-म-मा—श्लोकोऽयं नास्ति ।
3. अ-क-म-मा—श्लोकोऽयं न दृश्यते  4. ग—बाल्य ।
5. ङ-मा—निर्मितेन ।
6. अ-क—ब्रह्मैव विद्वांस्तेनाभ्येति सर्वं
नान्यः पन्था अयनाय विद्यते ॥  [ पाठान्तरम् ]
7. अ-क—ताम्यमि ।  8. अ—थाञ्जनं  9. अ-क—वा द्रवं वा ।

यद्ब्राह्मणः पश्यति यत्र विद्वान्
कथंरूपं [1]तदमृतमक्षरं परम् ॥ २५

सनत्सुजातः—

नाभाति शुक्लमिव लोहितमिवाथो
[2]कृष्णमथार्जुनं काद्रवं वा ।
न पृथिव्यां तिष्ठति नान्तरिक्षे
नैतत् समुद्रे सलिलं बिभर्ति ॥ २६

न तारकासु न च विद्युदाश्रितं
न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु
न वै चन्द्रे दृश्यते नोत सूर्ये ॥ २७

नैवर्क्षु तन्न यजुष्षु नाप्यथर्वसु
[3]न दृश्यते वै विमलेषु सामसु ।
रथन्तरे [4]बार्हद्रथे वाऽपि राजन्
[5]महाव्रतस्यात्मनि दृश्यते तत् ॥ २८

1. अ-क—यात्यमृत ।
2. अ-क—कृष्णमायसमर्कवर्णम् । म-मा—कृष्णमथार्कवर्णम् ।
3. ङ-म-मा—न चापि दृश्यत्यमलेषु सामसु ।
4. ख-ग-घ-ङ-म-मा—बार्हते ।
5. अ-क-ख-घ—महाव्रते नैव दृश्येद्ध्रुवं तत् ।

अपारणीयं तमसः परस्तात्

[1]तदन्ततोऽभ्येति विनाशकाले ।

अणीयरूपं [2]च तथाऽप्यणीयसां

[3]महत् स्वरूपं त्वपि पर्वतेभ्यः ॥ २९

सा प्रतिष्ठा तदमृतं [4]लोकस्तद्ब्रह्म तद्यशः ।

भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र च ॥ ३०

अनामयं तन्महदुद्यतं यशो

वाचो विकारं कवयो वदन्ति ।

[5]अस्मिञ्जगत् सर्वमिदं प्रतिष्ठितं

ये तद्विदुरमृतास्ते भवन्ति ॥ ३१

तदेतदह्ना संस्थितं भाति सर्वं

तदात्मवित् पश्यति ज्ञानयोगात् ।

तस्मिञ्जगत् सर्वमिदं प्रतिष्ठितं

य एतद्विदुरमृतास्ते भवन्ति ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ५२ ॥ सनत्सुजातपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

1. ग—तदन्तकोऽभ्येति । 2. अ-क-मा—क्षुरधारया तु
3. अ—महच्च रूपं तद्वै 4. ख-घ-ङ-म-मा—लोकास्ते ब्रह्म तद्यशः।
5. म-मा—सार्धश्लोको न दृश्यते ॥

## ॥ चतुश्चत्वारिंशोऽध्यायः* ॥

सनत्सुजातेन धृतराष्ट्रं प्रति तत्त्वोपदेशः ॥ १ ॥

सनत्सुजातः—

शोकः क्रोधश्च [1]कामश्च लोभो मानः परासुता ।
ईर्ष्या [2]मोहो विवित्सा च कृपाऽसूया जुगुप्सुता ॥ १
द्वादशैते महादोषा मनुष्यप्राणनाशनाः ॥ १॥
एकैकमेते राजेन्द्र मनुष्यान् पर्युपासते ।
[3-4]यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ॥ २॥

[5]स्पृहयालुरुग्रः [6]परुषो वा वदान्यः
[7]क्रोधं बिभ्रन्मनसा वै विकत्थी ।
नृशंसधर्माष्षडिमे जना वै
प्राप्याप्यर्थं नोत [8]सभाजयन्ते ॥ ३॥

सम्भोगसंविद्वि[9]षमोऽतिमानी
दत्वा [10]विकत्थी कृपणो दुर्बलश्च ।

1. ङ-म-मा—दम्भश्च कामो लोभः। 2. अ-क—मनो विधित्सा च ।
3. म—कोशे इदमर्धं नास्ति । 4. घ-ङ—सार्धश्लोकपञ्चकं नास्ति ।
5. म-मा—स्पृहालुरुग्रः पुरुषो वदान्यः। 6. क—पुरुषो वदान्यः ।
7. म-मा—श्चाक्रोशाद्बिभ्रन्मनसा विकत्थी ।
8. म-मा—सम्भावयन्ति । 9. क—षमोऽतीव मानी ।
10. म-मा—कदर्थी कृपणो दुर्बलीयान् । वर्गप्रशंसी वन्दिवत् तथैव ।

* अस्याऽध्यायस्य शङ्कराचार्यैः कृतं भाष्यं नोपलभ्यते । अथापि सर्वासु प्राचीनतालपत्रमातृकासु दर्शनात् । लक्षालङ्कारकारैः व्याख्यानाच्चायमध्यायो यथामातृकमस्माभिस्समसुद्यत इति ज्ञेयम् ॥

बहुप्रशंसी वनिताद्विट् सदैव
सप्तैवोक्ताः पापशीला नृशंसाः ॥ ४॥

धर्मश्च सत्यं च तपो दमश्च
अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं श्रुतं चैव धृतिः क्षमा च
महाव्रता द्वादश ब्राह्मणस्य ॥ ५॥

[1]यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यस्
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्या[2]मेकतो वाऽर्थितो यो
नास्य स्वमस्तीति च वेदितव्यम् ॥ ६॥

[3]धर्मस्त्यागोऽप्यप्रमाद इत्येते ह्यमृतं स्मृतम् ।
एतानि ब्रह्म[4]संख्यानां ब्राह्मणानां मनीषिणाम् ॥ ७॥

सद्वाऽसद्वा परीवादो [5]ब्राह्मणस्य न शस्यते ।
[6]नरके ते प्रतिष्ठास्स्युर् य एवं कुर्वते [7]जनाः ॥ ८॥

---

1. म-मा—य एतेभ्यः प्रवसेद् ।
2. म—मेकेनान्ततो वा । मा—मेकतो वा विशिष्टं ।
3. म-मा—दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् ।
4. म-मा—मुख्यानां ।
5. घ—ब्राह्मणो न प्रशस्यते । ख—ब्राह्मणे न प्रशस्यते
6. घ-ङ-म-मा—नरकप्रतिष्ठितास्ते स्युः ।
7. क-ख-घ—नराः ।

[1]मदोऽष्टादश[2]दोषस्स्या[3]ल्लोमशेन प्रकीर्तितः ।
लोकद्वेष्यं प्रातिकूल्यम् अभ्यसूया मृषावचः ॥ ९॥

कामक्रोधौ [4]पराधीन्यं परिवादोऽथ पैशुनम् ।
अर्थहानि[5]र्विवादश्च मात्सर्यं प्राणिपीडनम् ॥ १०॥

ईर्ष्या मोहोऽति[6]मानश्च संज्ञानाशोऽप्यनार्यता ।
तस्मात् प्राज्ञो न माद्येत [7]सतां ह्येतद्विगर्हितम् ॥ ११॥

सौहृदे वै षड्गुणा वेदितव्याः
प्रिये हृष्यन्त्यप्रिये च व्यथन्ते ।
[8]स्यादात्मन[9]स्सुचिरं याचितो यो
ददात्ययाच्यमपि देयं खलु स्यात् ॥ १२॥

[10]इष्टान् पुत्रान् विभवान् स्वांश्च दारान्
अभ्यर्थितश्चार्हति शुद्धभावः ।
त्यक्तद्रव्य[11]स्संवसते न कामाद्
भुङ्क्ते कर्मस्वाशिषं बाधते च ॥ १३॥

---

1. ख-मा—दमो ।
2. अ-क—धा वा स्या ।
3. अ-क—पुरा योऽनुप्रकीर्तितः ।
4. अ-क-ख—पारतन्त्र्यम् ।
5. ग-ङ-म-मा—र्विवित्सा च ।
6. अ-क-ख-म—वादश्च संज्ञानाशोऽभ्यसूयता ।
7. अ-क-ख—न वदेच्चापि पैशुनम् । म—सदा ह्येतद्विगर्हितम् ।
8. अ-क—सदाऽऽत्मानं ।
9. ख-ग-घ-ङ—स्सहितो ।
10. ख-ग-घ-ङ-म-मा—इष्टापूर्तं ।
11. अ-क—स्सर्वतश्चेह ।

द्रव्यवान् गुणवान् यश्च त्यागी भवति [1]सात्विकः ।
[2]पञ्च भूतानि पञ्चभ्यो निवर्तयति तादृशः ॥ १४॥
एतत् समृद्ध[3]मत्यृद्धं तपो भवति केवलम् ॥ १५
[4]सत्वात् प्रच्यवमानानां [5]सङ्कल्पेन समाहितम् ।
[6]यतो यज्ञाः प्रवर्धन्ते सत्यस्यैवावरोधनात् ॥ १६
मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्मणा ।
सङ्कल्पसिद्धं पुरुषम् असङ्कल्पोऽधितिष्ठति ॥ १७
ब्राह्मणस्य विशेषेण [7]किञ्चान्यदपि मे शृणु ॥ १७॥

[8]अध्यापयीत महदेतद्यशस्यं
[9]वाचो विकारान् कवयो वदन्ति ।
अस्मिन् योगे सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ १८॥

न कर्मणा सुकृते[10]नेह राजन्
सत्यं वदेज्जुहुया[11]द्वा यजेद्वा ।

---

1 ख-ग-घ-ङ-म-मा—तादृशः ।
2. ख-घ-ङ-मा—नास्तीदमर्धं ।  3. ख-ग-घ-ङ-म—मप्यूर्ध्वं ।
4. अ—सत्पालमुच्य ।  घ-ङ-मा—सत्यात्प्रच्य ।
5. ङ-मा—सङ्कल्पो न समाहितः ।
6. ङ—ततो यज्ञः प्रवर्तेत ।  म—यतो यज्ञः प्रवर्तेत ।
मा—यतो यज्ञः प्रवर्तेत सत्यस्यैवावधारणात् ।
7. मा—मनोज्ञानमयं शृणु ।  8. अ-क—अध्यापयेन्महदेतद् ।
9. घ—वाचा ।  मा—वाचो विकारं ।
10. म-मा—नैव ।  11. घ—द्याजयेद्वा ।

नैतेन बालोऽमृत्युमभ्येति राजन्
[1]रतिं चासौ न लभत्यन्तकाले ॥ १९॥

तूष्णीमे[2]कमुपासीत [3]नेष्टेन मनसाऽपि न ।
तथा संस्तुतनिन्दाभ्यां प्रीति[4]द्वेषौ विवर्जयेत् ॥ २०॥

अत्रैव तिष्ठन् [5]क्षत्रिय ब्रह्मावसति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन् ब्रवीमि ते ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ ५२ ॥ सनत्सुजातपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

सनत्सुजातेन धृतराष्ट्रं प्रति तत्त्वोपदेशः ॥

---

सनत्सुजातः —

यत्तच्छुक्रं महज्ज्योतिर् दीप्यमानं महद्यशः ।
यद्वै देवा उपासते [6]यस्मादर्को विराजते ॥ १

---

1. ख—मतिं। ब—धृतिं। 2. ख-ग-ब-ङ-म-मा—क उपासीत।
3. ग—स चेच्छेन्म। ख-घ-ङ—न चेच्छेन्म।
म—न चेष्टं। मा—न चेदं। 4. अ-क-म-मा—रोषौ।
5. ग—वसति क्षत्रियो ब्रह्म। म-मा—क्षत्रियो।
6. अ-क-ख-ग-ब—यस्माद् सूर्यो।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १॥

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ॥ २॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३

[1]पूर्णात् पूर्णमुद्धरन्ति पूर्णात् पूर्णं प्रचक्षते ।
हरन्ति पूर्णात् पूर्णं च [2]पूर्णेनैवावशिष्यते ॥ ४

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्[3] ॥ ४॥

[4]आपोऽथाद्भ्यस्सलिलं यस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे ।
[5]आदध्रीचीस्सविषूचीर्वसाना-
वुभौ बिभर्ति पृथिवीं दिवं च ॥ ५॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६

उभौ च [6]देव्यौ पृथिवीं दिवं च
दिशश्च शुक्रं भुवनं बिभर्ति ।
तस्माद्दिशस्सरितश्च स्रवन्ति
तस्मात् समुद्रा विहिता महान्तः ॥ ७

---

1. अ-क-ख-ग-घ-म-मा—सार्धश्लोको नास्ति 2. ङ—पूर्णमेवा
3. ङ—आपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रं आदित्यं गिरते परः॥ [अधिकः पाठः]
4. म—श्लोकोऽयं न । 5. ग-घ-ङ—स सध्रीचीस् । 6. ग—देवौ ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ७॥

चक्रे रथस्य तिष्ठन्तं ध्रुव[1]स्याव्ययकर्मणः ।
केतुमन्तं [2]वहन्त्यश्वास् तं दिव्यमजरं दिवि ॥ ८॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९

न [3]सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति [4]कश्चिदेनम् ।
मनीषयाऽथो मनसा हृदा च
य एनं विदुरमृतास्ते भवन्ति ॥ १०

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १०॥

[5]द्वादश[6]पूगास्सरितस् सततं देवरक्षिताः ।
[7]मध्वीशते तथा शुद्धां तथा सञ्चरन्तीह घोराम् ॥ ११॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२

तदर्धमासं पिबति [8]सञ्चितं भ्रमरो मधु ।
ईशानस्सर्वभूतेषु हविर्भूतमकल्पयत् ॥ १३

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १३॥

---

1. अ-क-मा—स्याप्रिय ।
2. अ-क-मा—वहन्तश्च तं । 3. अ-क-मा—सादृश्ये ।
4. ग—कश्चनैनम् । 5. ङ—श्लोकोऽयं न । 6. अ—पूर्णां ।
7. अ-क—तद्विशन्तस्तथा शुद्धास् सन्तरन्ति च सागरम् ।
8. अ-क-म-मा—संचित्य ।

हिरण्यपर्णमश्वत्थम् अभिपत्य ह्यपक्षकाः ।
ते तत्र पक्षिणो भूत्वा प्रपतन्ति [1]यथासुखम् ॥ १४॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५
[2]यस्माच्च वायुरायातो यस्माच्च प्रलयस्तथा ।
तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः ॥ १६
[3]योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥* १६॥
[4]अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रम् आदित्यं गिरते परः ॥ १७॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १८
एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत् सतत[5]मुत्क्षिपेन्न मृत्युर्नामृतं भवेत् ॥ १९
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १९॥

---

1. अ-क-मा—यथादिशः ।
2. ङ—कोशं विना सर्वेषु कोशेषु
पूर्णात्पूर्णमिति चतुर्थश्लोकः अत्रैव विद्यते ।
3. अ-क-ग-ङ-म-मा—सर्वमेव ततो विद्यात् तद्वक्तुं न च शक्नुमः ।
[अधिकः पाठः]
* क-ग-घ-म-मा—पूर्णात् पूर्णमिति चतुर्थश्लोकः अत्र
पुनरुक्ततया अस्ति-
4. अपानं गिरति इति श्लोकः ङ—कोशे द्विरुक्तः ।
म-मा—कोशयोः अयं श्लोकः अन्यत्र विद्यते ।
5. ग—मत्यन्तं न । घ-ङ—प्रत्यर्थं न ।

एवं[1]रूपो महात्मा स पावकं पुरुषो गिरन् ।
यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ॥ २०॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २१

यस्सहस्रं सहस्राणां पक्षान्[2]सन्तत्य सम्पतेत् ।
[3]नान्तं गच्छेत् कारणस्य अपि वा स्यान्मनोजवः ॥ २२

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २२॥

न दर्शने तिष्ठति रूपमस्य
पश्यन्ति चैनं [4]सुसमिद्धसत्त्वाः ।
[5]ह्रीनो मनीषी मनसाऽभि[6]पश्येद्
ये प्रव्रजेयुरमृतास्ते भवन्ति ॥ २३॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २४

[7]अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
लिङ्गस्य योगेन स याति नित्यम् ।
तमीशमीड्यमनुकल्पमाद्यं
पश्यन्ति मूढा न विराजमानम् ॥ २५

1. अ-ग-घ-ङ-म-मा—देवो। 2. ग-ङ—संभृत्य ।
3. अ-क-घ-म—मध्यमे मध्य आगच्छेद् अपि चेत् स्यान्मनोजवः।
मा—अमध्यमध्यं नो गच्छेत् अपि च स्यान्मनोजवः ।
4. अ-क-ग—सुविशुद्धसत्त्वाः । मा—सुसमृद्धसत्वाः ।
5. ग—ह्रदा । ख—भीतो ।
6. अ-क—तप्यते । 7. अ-क-म-मा—श्लोकोऽयं नास्ति

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २५॥

[1]गूहन्ति सर्पा इव गह्वरेषु
क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् ।
ते विप्रमुह्यन्ति जना विमूढास्
तैर्दृत्ता वै मोहयन्ते भवाय ॥ २६॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २७

[2]नाहं सदा[3]ऽसत्कृतस्स्यां न मृत्युर्
अप्यव्ययस्येह मृतं कुतस्स्यात् ।
सत्यानृते सत्यसमानबन्धे
सतश्च योनिरसतश्चैक एव ॥ २८

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २८॥

[4]असाधना वाऽपि ससाधना वा
ऽसमानमेतद्दृश्यते मानुषेषु ।
[5]समानमेतदमृतस्येतरस्य
युक्तास्तत्र मध्व उत्सं समापुः ॥ २९॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३०

---

1. अ-क—श्लोकोऽयं नास्ति
2. ङ—श्लोकोऽयं न दृश्यते । 2. अ—सत्कृत्य ।
4. अ-ग-म—न साधुना नोत असाधुना वा ।
5. ग-म-मा—समानमेतदमृतं सुविद्याद् एवं युक्तो मधु तद्वै परीप्सेत् ।
क—समानमेतदमृतस्येह विद्याद् एतेन युक्तो मधु तद्वै परीप्सेत् ।

[1]उभौ लोकौ विद्यया चाप्य याति
[2]तदा हुतं चाहुतमग्निहोत्रम् ।
[3]मा ते ब्राह्मी लघुतामादधीत
[4]प्रज्ञानं स्यान्नाम धीरा लभन्ते ॥ ३१

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३१॥

नास्यातिवादा हृदयं तापयाना
[5]नानाहुतं नाहुतमग्निहोत्रम् ।
[6]मनो ब्राह्मीं लघुतामादधीत
प्रज्ञां चास्मै नाम धीरा लभन्ते ॥ ३२॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३३

एवं यस्सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत् ततः परम् ॥ ३४

यथोदपाने महति सर्वतस्सम्प्लुतोदके ।
एवं सर्वेषु [7]वेदेषु ब्राह्मणस्य [8]विजानतः ॥ ३५

अङ्गुष्ठमात्रः पुरुषो[9]ऽन्तरात्मा
न दृश्यतेऽसौ [10]हृदये निविष्टः ।

---

1. अ-क-घ-ङ—श्लोकोऽयं नोपलभ्यते ।
2. मा—नास्याहुतं नाहुतमग्निहोत्रम् । 3. ख-ग—ततो ।
4. ख-ग—प्रज्ञातारं नित्यधीरं लभन्ते ।
5. क—नानाहितं । 6. क-मा ते ।
7. क-ख-ङ-म-मा—भूतेषु । 8. ख-ग-मा—विशेषतः
9. अ-क-ङ—महात्मा । 10. अ-क-घ-ङ—हृदि संनिविष्टः ।

[1]अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रपन्नः ॥ ३६

[2]अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माऽहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ ३७

पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं [3]न चाप्यहम् ॥ ३८

आत्मैव स्थानं मम जन्म चात्मा
[4]ओतप्रोतोऽहमजरप्रतिष्ठः ॥ ३८॥

अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ ३९

अणोरणीयान् सुमनास् [5]सर्वभूतेष्ववस्थितः ।
पितरं सर्व[6]भूतानां पुष्करे निहितं विदुः[7] ॥ ४०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ५२ ॥ सनत्सुजातपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ४० श्लोकाः]
॥ सनत्सुजातपर्व समाप्तम् ॥

---

1. ङ-म—इदमर्धं नोपलभ्यते
2. क-घ—अहमेवास्मि ते माता। ङ-म-मा—अहमेवास्मि वो माता।
3. अ-ग-ङ-मा—न वो ह्यहम्।
4. अ-क-ख-ग-घ-म-मा—वेदप्रोक्तो।
5. अ-क-घ-म-मा—सर्वभूतेषु जाग्रति।
6. अ-क-ख-म-मा—भूतेषु।
7. घ—एवमुक्त्वा कुमारस्तं तत्रैवान्तरधीयत। [अधिकः पाठः]

## ॥ षट्चत्वारिंशोऽध्यायः ॥

( व्यासाभिगमनपर्व )*

पाण्डववचनशुश्रूषया धृतराष्ट्रादीनां सभाप्रवेशः ॥ १ ॥ सञ्जयेन धृतराष्ट्राय पाण्डवप्रतिसन्देशकथनम् ॥ २ ॥

**वैशम्पायनः—**

एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञस् सा व्यतीयाय शर्वरी ॥ १

तस्यां रजन्यां व्युष्टायां राजानस्सर्वे [1]पार्थिवाः ।
सभामाविविशुर्हृष्टास् सूतस्योपदिदृक्षया ॥ २

शुश्रूषमाणाः पार्थानां [2]वाचो धर्मार्थसंहिताः ।
धृतराष्ट्रमुखास्सर्वे ययू राजन् सभां शुभाम् ॥ ३

सुधावदातां [3]सम्पूर्णकनकाजिरभूषणाम् ।

---

1. अ-क—एव ते ।
2. म-मा—वचो धर्मार्थसंहितम् ।
   क—वाचो धर्मार्थसम्मिताः । ख-घ-ङ—वचो धर्मार्थसंयुतम् ।
3. ख-ग-घ-ङ-म-मा—विस्तीर्णां कनकाजिरभूषिताम् ।

* इदं पर्व इतः पूर्वं मुद्रितेषु पुस्तकेषु यानसन्धिपर्व इत्युच्यते परं तु पर्वसङ्ग्रहपर्वणि व्यासाभिगमनपर्व इति नामैवोपलभ्यते (See vol I pp. 10.)

चन्द्रप्रभां सुरुचिरां सिक्तां चन्दनवारिणा ॥ ४
रुचिरैरासनैस्स्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैस् स्वास्तीर्णैस्सोत्तरच्छदैः ॥ ५
भीष्मो द्रोणः कृपश्शल्यः कृतवर्मा जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ ६
विदुरश्च महाप्राज्ञो [1]युयुत्सुश्च महारथः ।
[2]सर्वे च सहिताश्शूराः पार्थिवा भरतर्षभ ॥ ७
[3]धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् ॥ ७॥
दुश्शासनश्चित्रसेनश् शकुनिश्चापि सौबलः ।
दुर्मुखो दुस्सहः कर्ण उलूकोऽथ विविंशतिः ॥ ८॥
[4]एते चान्ये च बहवः पार्थिवा भरतर्षभ ।
कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम् ॥ ९॥
विविशुस्तां सभां राजन् सुराश्शक्रसदो यथा ॥ १०
आविशद्भिस्तदा राजन् शूरैः परिघबाहुभिः ।
शुशुभे सा सभा राजन् सिंहैरिव गिरेर्गुहा ॥ ११
ते प्रविश्य महेष्वासास् सभां [5]सर्वे महौजसः ।
आसनानि [6]विचित्राणि भेजिरे सूर्यवर्चसः ॥ १२

1. अ-क—पार्थिवा भरतर्षभ ।
2. अ-क—इदमर्धं नास्ति    3. घ—इतः श्लोकद्वयं नास्ति
4. ङ—इदमर्धं न दृश्यते
5. ङ-म-मा—समितिशोभनाः ।
6. ख-ग-घ-ङ-म-मा—महार्हाणि ।

आसनस्थेषु सर्वेषु तेषु राजसु भारत ।
द्वास्थो निवेदयामास सूतपुत्रमुपस्थितम् ॥ १३

अयं [1]सरथ आयाति योऽयासीत् पाण्डवान् प्रति ।
दूतो नस्तूर्णमायातस् सैन्धवैस्साधुवाहिभिः ॥ १४

उपेयाय स तु क्षिप्रं रथात् प्रस्कन्द्य कुण्डली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ १५

सञ्जयः—

प्राप्तोऽस्मि पाण्डवान् गत्वा मां विजानीत कौरवाः ।
[2]यथावयः कुरून् सर्वान् प्रतिनन्दन्ति पाण्डवाः ॥ १६

अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
पुनश्चाभ्यवदन् पार्थाः प्रतिपूज्य यथावयः ॥ १७

[3]यथाऽहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः ।
[4]अब्रवं पाण्डवान् गत्वा तं निबोधत पार्थिवाः ॥ १८

अब्रूतां तत्र धर्मेण वासुदेवधनञ्जयौ ॥ १८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये १८॥ श्लोकाः ]

---

1. ख-घ-ग-ङ—सारथिरायातो ।
2. ख-ग-घ-ङ-म-मा—सर्वान् कुरून् पाण्डवेयो ह्यभ्यभाषत धर्मवित् । [पाठान्तरम् ]
3. ख—इतः सार्धः श्लोको नास्ति
4. ग-घ-ङ—तमब्रुवं वचो युक्तं नात्र किञ्चन हापितम् । [पाठान्तरम्]
म-मा— अब्रवं वचनं युक्तं नात्र किञ्चिन्न हापितम् ।

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

भगवता उक्तं सन्देशं प्रति धृतराष्ट्रेण पृष्टस्सञ्जयः स्वस्य पाण्डव-स्थानं प्रति गमनं तत्रार्जुनस्य भगवतश्चैकत्र स्थितिं भगवदुक्तसन्देशं स्वाभिप्रायं च कथयति ॥ १ ॥

धृतराष्ट्रः—

पृच्छामि त्वां सञ्जय राजमध्ये
यदब्रवीद्वाक्यमदीनसत्वः ।
जनार्दनस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ १

सञ्जयः—

आगुल्फेभ्योऽभिसंवीतस् सर्वतोऽहं कृताञ्जलिः ।
शुद्धान्तं प्राविशं राजन्नाख्यातो नरसिंहयोः ॥ २

न चाभिमन्युर्न यमौ तं देशमभिजग्मतुः ।
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ॥ ३

उभौ मध्वासवक्षीबौ वरचन्दनरूषितौ ।
स्रग्विणौ वरवस्त्राङ्गौ वराभरणभूषितौ ॥ ४

[1]नैकरत्नविचित्रं च काञ्चनं च वरासनम् ।
नानास्तरणसंस्तीर्णं [2]यत्रास्तां तौ नरर्षभौ ॥ ५

---

1. ख—नास्त्ययं श्लोकः । 2. ग-घ-ङ—यत्रासाते ।

[1]सत्याङ्कमुपधानं तु कृत्वा शेते जनार्दनः ।
अर्जुनाङ्कगतौ पादौ केशवस्योपलक्षये ॥ ६

अर्जुनस्य च कृष्णायाश् शुभायाश्चाङ्कगावुभौ ॥ ६॥

काञ्चनं पादपीठं तु पार्थो [2]मे प्रादिशन्मुदा ।
दासीभ्यामाहृतं मह्यं स्पृष्ट्वा भूमावुपाविशम् ॥ ७॥

ऊर्ध्वरेखाङ्कितौ पादौ पार्थस्य शुभलक्षणौ ।
पादपीठादपहृतौ धारयेतां वरस्त्रियौ ॥ ८॥

न नूनं कल्मषं किञ्चिन्मम कर्मसु विद्यते ।
स्त्रीरत्नाभ्यां समेतौ यन्मिथो मामभ्यभाषताम् ॥ ९॥

विस्मयो मे महानासीद् आस्त्रं मे बहुसङ्गतम् ।
हृष्टानि चैव रोमाणि दृष्ट्वा तौ सहितावुभौ ॥ १०॥

श्यामौ बृहन्तौ तरुणौ नागाविव समुच्छ्रितौ ।
एकशय्यागतौ दृष्ट्वा भयं मे महदाविशत् ॥ ११॥

ततो ह्यचिन्तयं तत्र दृष्ट्वा तौ पुरुषर्षभौ ॥ १२

सङ्कल्पो धर्मराजस्य नानवाप्योऽस्ति कश्चन ।
निदेशगाविमौ यस्य नरनारायणावुभौ ॥ १३

सत्कृतश्चान्नपानाभ्याम् [3]अहं वै लब्धसत्क्रियः ।

---

1. ब—इतः सार्धश्लोको नास्ति म-मा—इदमर्धं नास्ति
2. ग-ब-ङ—वै । 3. ख-ग-घ-ङ-म-मा—आच्छन्नो ।

अञ्जलिं मूर्ध्नि सन्धाय सन्देशं चाभ्यचोदयम् ॥ १४

धनुर्धरोचितेनाथ पाणिनैकं सुलक्षणम् ।
पाद[1]मानाययत् पार्थः केशवस्य यशस्विनः ॥ १५

इन्द्रकेतुरिवोत्थाय दिव्याभरणभूषितः ।
इन्द्रवीर्योपमः कृष्णस् संविष्टो मां ह्यभाषत ॥ १६

स वाचं वदतां श्रेष्ठ [2]आददे वचनक्षमाम् ।
दीपनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥ १७

बहिश्चरस्य प्राणस्य प्रियस्य प्रियकारिणः ।
मतिमान् मतिमास्थाय केशवस्सन्दधे वचः ॥ १८

[3]वचनं वचनज्ञस्य शिक्षाक्षरसमन्वितम् ।
[4]मनः प्रह्लादमश्रौषं पश्चाद्धृदयतापनम् ॥ १९

**श्रीभगवान्—**

सञ्जयैतद्वचो ब्रूयाः प्राप्य क्षत्रियसंसदम् ।
शृण्वतः कुरुवृद्धस्य आचार्यस्य च धीमतः ॥ २०

अर्थांस्त्यजत पात्रेषु सुखमाप्नुत कामजम् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ २१

---

1. क—मानामयत् पार्थः ।　　ङ—मानाय्य यत् पार्थः ।
म-मा—मादाय यत् पार्थः ।
2. अ-क—आरभे ।　　3. ख—नास्त्ययं श्लोकः ।
4. अ—पुनः　　ग—मनःप्रसाद ।
ङ—मनःप्रह्लादनं श्रेष्ठं ।

यजध्वं विविधैर्यज्ञैर् दक्षिणाश्च प्रयच्छत ।
पुत्रैर्दारैश्च मोदध्वम् आगतं वो महद्भयम् ॥ २२

गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम् ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ॥ २३

तेजोमयं दुराधर्षं बिभ्रता गाण्डिवं धनुः ।
मद्द्वितीयेन पार्थेन वैरं वः प्रत्युपस्थितम् ॥ २४

सञ्जयः—

कृष्णस्यैतद्वचश्श्रुत्वा भयं मे महदाविशत् ।
तव पुत्रस्य लोभं च वर्धमानं प्रपश्यतः ॥ २५

सोऽयमिन्द्रसमौ वीरौ तौ मन्दो नावबुध्यते ।
भीष्मद्रोणाश्रयाच्चैव कर्णस्य च विकत्थनात् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ५३ ॥ व्यासाभिगमनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २६ श्लोकाः]

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

सञ्जयेन धृतराष्ट्रं प्रति श्रीकृष्णमहिमादिप्रतिपादकानामर्जुनवचसां विस्तरेण कथनम् ॥ १ ॥

धृतराष्ट्रः—

पृच्छामि त्वां सञ्जय राजमध्ये
किमब्रवीद्वाक्यमदीनसत्वः ।

धनञ्जयस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ १

सञ्जयः—

दुर्योधनो वाचमिमां शृणोतु
[1]यदब्रवीदर्जुनो योत्स्यमानः ।
युधिष्ठिरस्यानुमते महात्मा
धनञ्जयश्शृण्वतः केशवस्य ॥ २

[2]अवित्रस्तो बाहुवीर्यं विजान-
न्नुपह्वरे वासुदेवस्य वीरः ।
अवोचन्मां योत्स्यमानः किरीटी
मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ३

[3]संश्रृण्वतस्तस्य दुर्भाषिणो वै
दुरात्मनस्सूतपुत्रस्य सूत ॥ ३॥
यो योद्धुमाशंसते मां सदैव
मन्दप्रज्ञः कालपक्वोऽतिमूढः ॥ ४

ये वै राजानः पाण्डवायोधनाय
समानीताश्शृण्वतां चापि तेषाम् ।

1. ख-घ-ङ—यामब्रवीद ।
2. अ-क—अम्वस्तं बाहुवीर्यं विधाय ।
3. ख-घ-ङ-म-मा—नास्त्ययं श्लोकः ।

यथा समग्रं वचनं यथोक्तं
[1]सहामात्यं श्रावयेथा नृपं तत् ॥ ५

यथा [2]गिरं देवराजस्य देवाश्
शुश्रूषन्ते वज्रहस्तस्य सर्वे ।
[3]तथाऽशृण्वन् पाण्डवास्सृञ्जयाश्च
किरीटिना वाचमुक्तां समर्थाम् ॥ ६

[4]इत्यब्रवीदर्जुनो योत्स्यमानो
गाण्डीवधन्वा लोहितपद्मनेत्रः ॥ ६॥

अर्जुनः—

न चेद्राज्यं मुञ्चति धार्तराष्ट्रो
युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ७

[5]अस्ति नूनं कर्म कृतं पुरस्ताद्
अनिर्विष्टं पापकं धार्तराष्ट्रैः ।
येषां युद्धं भीमसेनार्जुनाभ्यां
तथाऽश्विभ्यां वासुदेवेन चैव ॥ ८

शैनेयेन ध्रुवमात्तायुधेन
धृष्टद्युम्नेनाथ शिखण्डिना च ।
युधिष्ठिरेणेन्द्रकल्पेन चैव
योऽपध्यानान्निर्दहेद् गां दिवं च ॥ ९

---

1. घ-ङ—सभामध्ये। 2. अ-क—नूनं ख—हि वै।
3. घ—इदमर्धं नास्ति 4. घ—इदमर्धं नास्ति
5. ख-घ-ङ—अस्त्येव नूनं।

तैश्चेद्योद्धुं मन्यते धार्तराष्ट्रो
निर्वृत्तोऽर्थस्सकलः पाण्डवानाम् ।
मा तत् कार्षीः [1]पाण्डवस्तस्य हेतोर्
उपैति युद्धं यदि मन्यसे त्वम् ॥ १०

यां तां वने दुःखशय्यामवात्सीत्
प्रव्राजितः पाण्डवो धर्मचारी ।
[2]आप्नोतु तां दुःखतरामनाथाम्
[3]अन्त्यां शय्यां धार्तराष्ट्रः परासुः ॥ ११

[4]ह्रिया ज्ञानेन तपसा दमेन
[5]शौर्येणर्द्ध्या धर्मगुप्त्या धनेन ।
[6]अन्यायवृत्तिः कुरुपाण्डवेयान्
अध्यातिष्ठद्धार्तराष्ट्रो [7]दुरात्मा ॥ १२

---

1. ग-म-मा—पाण्डवार्थाय हेतो, रुपैहि ।
ख-घ—पाण्डवा यस्य हेतोरवेहि ।
2. ख-ग-घ-ङ-म-मा—आश्लिष्यते दुःखतरामनर्थाम्
3. अ-क—अन्यां शय्यां ।
4. ख—नास्त्ययं श्लोकः ।
5. ग-म-मा—क्रोधेन वै धर्मगुप्त्या फलेन ।
6. घ-ङ-म-मा—न्यायवृत्तान् कुरुषु पाण्डवेयान् ।
7. ग-घ-म-मा—परासुः ।

मायोपधं प्रणिधानार्जवाभ्यां
तपोदमाभ्यां धर्मगुप्त्या [1]बलेन ।
सत्यं ब्रुवन् प्रतिपन्नो नृपो नस्-
तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥ १३

यदा ज्येष्ठः पाण्डवस्संशितात्मा
क्रोधं यच्छन् वर्षपूगान् सुघोरम् ।
[2]अवस्रष्टा कुरुपूद्वृत्तचेतास्
तदा युद्धं [3]धार्तराष्ट्रानतप्स्यत् ॥ १४

कृष्णवर्त्मेव ज्वलितस्समिद्धो
यथा दहेत् कक्षमग्निर्निदाघे ।
एवं दग्धा धार्तराष्ट्रस्य सेनां
युधिष्ठिरः क्रोधदीप्तोऽन्ववेक्ष्य ॥ १५

यदा द्रष्टा भीमसेनं रथस्थं
गदाहस्तं क्रोधविषं वमन्तम् ।
अमर्षणं पाण्डवं भीमवेगं
तदा युद्धं धार्तराष्ट्रानतप्स्यत् ॥ १६

---

1. ख-ग-घ-ङ-म-मा—फलेन ।
2. ग-घ-ङ-म-मा—सदा हृष्टः कुरुपूद्धूत ।
3. ग—धार्तराष्ट्रो न तप्स्यते । म—न तप्स्येत् ।
अ-क—धार्तराष्ट्रोऽनु तप्येत् ।

[1]सेनाग्रगं दंशितं भीमसेनं
लक्षण्यवन्तं वीरहणं परेषाम् ।
घ्नन्तं चमूमन्तकसन्निकाशं
तदा स्मर्ता वचनस्यातिमानी ॥ १७

यदा द्रष्टा भीमसेनेन नागान्
निपातितान् गिरिकूटप्रकाशान् ।
कुम्भैरिवासृग्वमतो भिन्नकुम्भांस्
तदा युद्धं [2]धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १८

[3]महासिंहो गा इव सम्प्रविश्य
गदापाणिर्धार्तराष्ट्रानुपेत्य ।
यदा भीमो भीमरूपो निहन्ता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १९

[4]महाभये वीतभयः कृतास्त्रस्
समागमे शत्रुबलावमर्दी ।
सकृद्रथेन प्रतियन् रथौघान्
पदातिसङ्घान् गदया विनिघ्नन् ॥ २०

सैन्याननेकांस्तरसा विमृद्नन्
यदा छेत्ता धार्तराष्ट्रस्य सैन्यम् ।

---

1. ख-घ-ङ-मा—इतः श्लोकद्वयं नास्ति    म—इतः श्लोकत्रयं नास्ति
2. अ-क—'धार्तराष्ट्रोऽनु तप्येत्' उत्तरत्राप्येवमेव पाठो दृश्यते ।
3. ख-ग-घ-ङ—महाबलो ।    4. मा—कोशे श्लोकद्वयं नोपलभ्यते

[1]छिन्दन् वनं परशुनेव शूरस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २१

[2]तृणप्रायं ज्वलनेनेव दग्धं
ग्रामं यथा धार्तराष्ट्रान् समीक्ष्य ।
पक्वं सस्यं वैद्युतेनेव दग्धं
[3]पराजितं विपुलं स्वं बलौघम् ॥ २२

हतप्रवीरं विमुखं भयार्तं
पराङ्मुखं प्रायशो [4]नष्टयोधम् ।
शस्त्रार्चिषा भीमसेनेन दग्धं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २३

[5]उपासङ्गादुद्धरन् दक्षिणेन
वरं शरं नकुलश्चित्रयोधी ।
यदा रथाग्र्यो रथिनः प्रभेत्ता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २४

[6]सुखोचितो दुःखशय्यां वनेषु
दीर्घं कालं नकुलो यामशेत ।

1. ङ-म—छिन्नं । 2. ख—इतः श्लोकद्वयं नास्ति
3. ग-घ-ङ-म-मा—परासिक्तं । 4. अ-क—घृष्टयोधम्
5. अ-क—उपासङ्गेनाचरन् दक्षिणेषु परं शतान्नकुल
म-मा—उपासङ्गादुद्धरन् दक्षिणेन परं शतं नकुलश्चित्रयोधी ।
6. अ-क—श्लोकोऽयं नोपलभ्यते ।

आशीविषः क्रुद्ध इवाचरेद्यदा
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २५

[1]त्यक्तात्मानः पार्थिवायोधनाय
समादिष्टा [2]धार्तराष्ट्रेण सूत ।
छिन्ना भिन्नास्सहसैन्या द्रवन्ति
दृष्ट्वा पश्चात् तप्स्यते धार्तराष्ट्रः ॥ २६

[3]शिशून् [4]मृधे तानशिशुप्रकाशान्
यदा द्रष्टा कौरवः पञ्च शूरान् ।
त्यक्त्वा प्राणान् कौरवानाद्रवन्तस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २७

[5]यथा शक्रो दानवानां जयार्थं
सुवर्णतारं [6]रथमुत्तमाश्वैः ।
दान्तैर्युक्तं सहदेवोऽधिरूढश्
शिरांसि राज्ञां [7]छेत्स्यते मार्गणौघैः ॥ २८

---

1. ख—इतः श्लोकद्वयं नास्ति
2. ग-म-मा—धर्मराजेन वीराः । रथैस्सूतान् सम्यगभिद्रवन्तो ।
3. मा—श्लोकोऽयं न दृश्यते।
4. ग-म—कृताश्वानशिशु ।
5. अ-क—यदाशतोद्वाहमकूजनाक्षं ।
म-मा—यदा शरोद्वाहविकूजनार्थं सुवर्णतारं रथमुत्तमाश्वम् ।
[पाठान्तरम्]
6. अ-क—रथमाततायी ।
7. ङ-म-मा—क्षेप्स्यते ।

महाभये सम्प्रवृत्ते रथस्थं
   विवर्तमानं समरे कृतास्त्रम् ।
सर्वा दिशस्सम्पतन्तं समीक्ष्य
   तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥

ह्रीनिषेधो निपुणस्सत्यवादी
   महाबलस्सर्वधर्मोपपन्नः ।
गान्धारिमार्छंस्तुमुले क्षिप्रकारी
   क्षेप्ता जनान् सहदेवस्सपत्नान् ॥

यदा द्रष्टा द्रौपदेयान् महेषून्
   शूरान् कृतास्त्रान् रथयुद्धकोविदान् ।
आशीविषान् घोरविषानिवागतांस्
   तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥

यदाऽभिमन्युः परवीर[1]हन्ता
   शरैः परान् मेघ इवाभिवर्षन् ।
विगाहिता कृष्णसमः कृतास्त्रस्
   तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥

[2]यदा द्रष्टा बालमबालवीर्यं
   द्विषच्चमूं मृत्युमिवोत्पतन्तम् ।

1. ग-म-मा—घाती ।    ख-ष-ङ—हारी ।
2. अ-क—श्लोकोऽयं नास्ति ।

सौभद्रमिन्द्रप्रतिमं कृतास्त्रं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३३

प्रभद्रकाश्शीघ्रतरा युवानो
२९ विशारदास्सिंहसमानवीर्याः ।
यदा क्षेप्तारो धार्तराष्ट्रान् ससैन्यांस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३४

[1]वृद्धौ विराटद्रुपदौ महारथौ
३० पृथक्चमूभ्यामभिवर्तमानौ ।
यदा द्रष्टारौ धार्तराष्ट्रान् ससैन्यांस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३५

[2]यदा कृतास्त्रो द्रुपदः प्रचिन्वन्
३१ शिरांसि यूनां समरे रथस्थः ।
क्रुद्धश्शरैश्छेत्स्यति चापमुक्तैस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३६

यदा विराटः परवीरघाती
३२ [3]रणाजिरे शत्रूचमूं प्रवेष्टा ।

1. अ-क-मा—श्लोकोऽयं नास्ति
2. मा—श्लोकोऽयं न दृश्यते।
3. ख-ङ-म—कर्मान्तरे। ग—धर्मान्तरे। क—ममान्तरे। अ—रथान्तरे

मत्स्यैस्सार्धमनृशंसरूपैस्
 तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३७

ज्येष्ठं [1]मात्स्यमनृशंसमार्यरूपं
 विराटपुत्रं रथिनं पुरस्तात् ।
यदा द्रष्टा दंशितं पाण्डवार्थे
 तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३८

[2]रणे हते कौरवाणां प्रवीरे
 शिखण्डिना सत्तमे शन्तनूजे ।
न जातु नश्शत्रवो धारयेयुर्
 असंशयं सत्यमेतद्ब्रवीमि ॥ ३९

यदा शिखण्डी रथिनः प्रचिन्वन्
 भीष्मं रथेनाभियाता प्रमाथी ।
दिव्यैर्हयैरवमृद्नन् रथौघांस्
 तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ४०

यदा द्रष्टा सृञ्जयानामनीके
 धृष्टद्युम्नं प्रमुखे रोचमानम् ।
अस्त्रं यस्मै [3]गुह्यमुवाच धीमान्
 द्रोणस्तदा तप्स्यति धार्तराष्ट्रः ॥ ४१

---

1. ङ-म-मा—मत्स्यानामनृशंसरूपं ।
2. ख-ग-घ-ङ-म-मा—गते तु तस्मिन् पुरुषप्रवीरे
 शिखण्डिना सत्तमे कौरवाणाम् ।
3. ख-ग-घ-ङ-म-मा—घोर ।

यदा स सेनापतिरप्रमेयः
　　[1]परामृद्गन्निषुभिर्धार्तराष्ट्रान् ।
द्रोणं रणे शत्रुसहोऽभियाता
　　तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥　　४२

ह्रीमान् [2]मनस्वी बलवान् मनीषी
　　लक्ष्मण्यवान् सोमकानां प्रबर्हः ।
न जातु तं शत्रवोऽन्ये सहेरन्
　　येषां स स्यादग्रणीर्वृष्णिसिंहः ॥　　४३

ब्रूयाच्च मां प्रवृणीष्वेति लोके
　　युद्धेऽद्वितीयं सचिवं रथस्थम् ।
शिनेर्नप्तारं प्रवृणीम सात्यकिं
　　महाबलं वीतभयं कृतास्त्रम् ॥　　४४

[3]महारथो दीर्घबाहुः प्रमाथी
　　युद्धेऽद्वितीयः परमास्त्रवेदी ।
शिनेर्नप्ता [4]तालमात्रायुधोऽयं
　　महारथो वीतभयः कृतास्त्रः ॥　　४५

---

1. ख-ग-घ-ङ—पराभवन्ति ।　　मा—परांस्तपन्ति ।
2. ख-ग—मनीषी बलवान् कृतास्त्रः, स लक्ष्मीवान् ।
3. ङ-म—श्लोकोऽयं नास्ति ।　　4. अ-क—क्रोश

यदा शिनीनामधिपो मयोक्तश्
    शरैः परान् मेघ इव प्रवर्षन् ।
[1]प्रच्छादयिष्यत्यरिहा योधमुख्यांस्
    तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ४६

यदा धृतिं कुरुते योत्स्यमानस्
    स दीर्घबाहु[2]र्दृढधन्वा महात्मा ।
सिंहस्येव गन्धमाघ्राय गावस्
    [3]सञ्चेष्टन्ते शत्रवोऽस्माद्यथाऽग्नेः ॥ ४७

स दीर्घबाहुर्दृढधन्वा महात्मा
    भिन्द्याद्गिरीन् संहरेत् सर्वलोकान् ।
अस्त्रे कृती निपुणः [4]क्षिप्रहस्तो
    दिवि स्थितस्सूर्य इवावभाति ॥ ४८

चित्रस्सूक्ष्मस्सुकृतो यादवस्य
    अस्त्रे योगो वृष्णिसिंहस्य योऽभूत् ।
यथाविधं योगमाहुः प्रशस्तं
    सर्वैर्गुणैस्सात्यकिस्तैरुपेतः ॥ ४९

---

1. ख-ग-घ-ङ-म-मा—प्रच्छादयिष्यञ् शरजालेन योधान् ।
2. ग—र्दृढधर्मा । घ—र्धृतचापो । ङ—र्दृढचापो ।
3. ख-ग-घ-ङ-म-मा—संवेष्टन्ते शत्रवस्तद्भयेन ।
4. ग-घ-ङ-म-मा—चित्रयोधी ।

हिरण्मयं श्वेतहयैश्चतुर्भिर्
    यदा युक्तं स्यन्दनं माधवस्य ।
द्रष्टा युद्धे सात्यके[1]र्धार्तराष्ट्रस्
    तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५०

[2]यदा रथं हेममणिप्रकाशं
    श्वेताश्वयुक्तं वानरकेतुमुग्रम् ।
दृष्ट्वा [3]ममाप्यास्थितं केशवेन
    तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५१

यदा मौर्व्यास्तलनिष्पेषमुग्रं
    महाशब्दं वज्रनिष्पेषतुल्यम् ।
विधूयमानस्य महारणे मया
    [4]स गाण्डीवस्य श्रोष्यति मन्दबुद्धिः ॥ ५२

तदा मूढो धृतराष्ट्रस्य पुत्रस्
    [5]तप्ता युद्धे दुर्मतिर्दुस्सहायः ।
दृष्ट्वा सैन्यं बाणवर्षान्धकारे
    प्रभज्यन्तं गोकुलवद्रणाग्रे ॥ ५३

---

1. ग-घ-ङ-म-मा—वैं सुयोधनस्तदा युद्धं धार्तराष्ट्रो न तप्स्यते ।
2. घ-ङ—श्लोकोऽयं नास्ति
3. ख-ग-म-मा—रणे संयुतं ।
4. अ-क-ख-ग-घ—गाण्डीवशब्दं ।    5. अ-क-ख-ग-घ-ङ—सदा ।

[1]वलाहकादुच्चरतस्सुभीमान्
विद्युत्स्फुलिङ्गानिव घोररूपान् ।
सहस्रघ्नान् द्विषतां सङ्गरेषु
अस्थिच्छिदो मर्मभिदस्सुपुङ्खान् ॥ ५४

यदा द्रष्टा ज्यामुखाद् बाणसङ्घान्
गाण्डीवमुक्तानापततश्शिताग्रान् ।
हयान् गजान् वर्मिणश्चाददानांस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५५

यदा मन्दः परबाणान् विमुक्तान्
ममेषुभिः क्रियमाणान् प्रतीपम् ।
[2]तिर्यग्विध्य च्छिद्यमानान् पृषत्कैस्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५६

यदा विपाठा भुजविप्रमुक्ता
द्विजाः फलानीव महीरुहाग्रात् ।

---

1. ख-ग-घ-ङ-म—वलाहकादुच्चरन्तीव विद्युत्
उत्साहपीनद्विषतां सङ्गमेषु ।
अस्थिच्छिदो मर्मभिदो वमेच्छरांस्
तदा युद्धं धार्तराष्ट्रो न तप्स्यते ॥ [पाठान्तरम्]
2. ख-ग-घ-ङ-म-मा—तिर्यग्विद्धाञ्छिद्यमानान् क्षुरप्रैस् ।

प्रच्छेत्तार उत्तमाङ्गानि यूनां
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५७

यदा द्रष्टा [1]पततस्स्यन्दनेभ्यो
महागजेभ्योऽश्वगतान् सुयोधान् ।
शस्त्रैर्हतान् रथिनश्चैव रङ्गे
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५८

[2]असम्प्राप्तानस्त्रपथं परस्य
यदा द्रष्टा नश्यतो धार्तराष्ट्रान् ।
अकुर्वतः कर्म युद्धे समन्तात्
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५९

[3]पदातिसङ्घान् रथसङ्घान् समन्ताद्
व्यात्ताननः काल [4]इवाततेषुः ।
प्रणोत्स्यामि ज्वलितैर्बाणवर्षैश्
शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ॥ ६०

---

1. ग-घ-ङ-म-मा—धृतराष्ट्रस्य पुत्रो, महागजेभ्यश्च हतान् सुयोधान्।
शरैर्हतान् पातितानेव

2. घ-म-मा—नास्त्ययं श्लोकः।

3. ग-घ-ङ-म-मा—यदाभिसार्याद्रथसैन्यसङ्घान् ।

4. मा—इवान्तकेषु। म—इवागतेषुः ।
ग—इवाहवेषु। घ-ङ—इवागतेषु ।

सर्वा दिशस्सम्पतता रथेन
[1]रथान् ध्वस्तान् गाण्डिवेनापकृत्तान् ।
यदा द्रष्टा स्वबलं सम्प्रमूढं
-तदा [2]पश्चात् तप्स्यति मन्दबुद्धिः ॥ ६१

कान्दिग्भूतं छिन्नगात्रं विसंज्ञं
दुर्योधनो द्रक्ष्यति सर्वसैन्यम् ।
[3]हताश्ववीराग्र्यनरेन्द्रनागं
पिपासितं श्रान्तपत्रं भयार्तम् ॥ ६२

आर्तस्वरं हन्यमानं हतं च
विकीर्णकेशास्थिकपालसङ्घम् ।
[4]प्रजापतेः कर्म [5]यथाऽर्थनिष्ठितं
तदा द्रष्टा तप्स्यति मन्दबुद्धिः ॥ ६३

यदा रथे गाण्डिवं वासुदेवं
दिव्यं शङ्खं पाञ्चजन्यं हयांश्च ।

---

1. ग-घ-ङ-म-मा—रथं ध्वजं गाण्डिवेनाथ कृत्तम् ।
2. ग—युद्धं धार्तराष्ट्रो न तप्स्येत् ।
3. ख-घ-ङ—हताश्वपादातवरूथकुञ्जरं ।
   म-मा—हताश्वनागेन्द्रपदातिस्यन्दनं ।
4. मा—कालस्येव कर्म यदा च निष्ठितं । ख-घ-ङ-म—कालस्य वै
5. म—यथा च निष्ठितं । ख-घ-ङ—निष्ठुरं ।

तूणावक्षय्यौ देवदत्तं च [1]मां च
　　द्रष्टा युद्धे धार्तराष्ट्रस्समेतान् ॥ ६४

उद्वर्तयन् दस्युसङ्घान् समेतान्
　　प्रवर्तयिष्यन् युगपद्युगान्तम् ।
यदा धक्ष्याम्यग्निवत् कौरवेयांस्
　　तदा तप्ता धृतराष्ट्रस्सपुत्रः ॥ ६५

सभ्राता वै सहसैन्य[2]स्सभृत्यो
　　भ्रष्टैश्वर्यः क्रोधवशोऽल्प[3]चेताः ।
दर्पस्यान्ते निहतो वेपमानः
　　पश्चान्मन्दस्तप्स्यति धार्तराष्ट्रः ॥ ६६

पूर्वाह्ले मां कृतजप्यं कदाचिद्
　　विप्रः प्रोवाचोदकान्ते मनोज्ञम् ।
कर्तव्यं ते दुष्करं कर्म पार्थ
　　योद्धव्यं ते शत्रुभिस्सव्यसाचिन् ॥ ६७

इन्द्रो वा ते हरिमान् वज्रहस्तः
　　पुरस्ताद्यातु समरेऽरीन् विनिघ्नन् ।

---

1. ख-ग-घ-ङ—शङ्खं, दृष्ट्वा ।
　म-मा—मांच दृष्ट्वा युद्धे धार्तराष्ट्रस्समन्तात् ।
2. क-ग-घ-ङ-म—सपुत्रोः।
3. ख-ग-घ-ङ-म—तेजाः, दर्पस्यान्ते वेपमानः कृतघ्नः ।

सुग्रीवयुक्तेन रथेन वा ते
पश्चात् कृष्णो रक्षतु वासुदेवः ॥ ६८

वव्रे चाहं वज्रहस्तान्महेन्द्राद्
अस्मिन्युद्धे वासुदेवं सहायम् ।
स मे लब्धो दस्युवधाय कृष्णो
मन्ये[1]ऽप्येतद्विहितं दैवतैर्मे ॥ ६९

अयुद्ध्यमानो मनसाऽपि यस्य
जयं कृष्णः पुरुषस्याभिनन्देत् ।
ध्रुवं सर्वान् सोऽभ्यतीयादमित्रान्
सेन्द्रान् देवान् मानुषे नास्ति चिन्ता ॥ ७०

स बाहुभ्यां सागरमुत्तितीर्ष-
न्महोदधिं सलिलस्याप्रमेयम् ।
तेजस्विनं कृष्णमत्यन्तशूरं
युद्धेन यो वासुदेवं जिगीषेत् ॥ ७१

गिरिं य इच्छेत्तु तलेन भेत्तुं
शिलोच्चयं श्वेतमतिप्रमाणम् ।
तस्यैव पाणिस्सनखो विशीर्ये-
न्न चापि किञ्चित् स गिरेस्तु कुर्यात् ॥ ७२

---

1. ख-ग-घ-ङ—चाहं विदितो दैवतं मे ।
म-मा—चाहं विहितं दैवतैर्मे ।

अग्निं समिद्धं शमयेद्भुजाभ्यां
चन्द्रं च सूर्यं च निवारयेत ।
हरेद्देवानाममृतं प्रसह्य
युद्धेन यो वासुदेवं जिगीषेत् ॥ ७३

यो रुक्मिणीमेकरथेन [1]भोजान्
उच्छिद्य राज्ञस्समरे प्रसह्य ।
उवाह भार्यां यशसा ज्वलन्तीं
यस्यां जज्ञे रौक्मिणेयो महात्मा ॥ ७४

अयं [2]गान्धारांस्तरसा सम्प्रमथ्य
जित्वा पुत्रान् नग्नजितस्समग्रान् ।
बद्धं मुमोच विनदन्तं प्रसह्य
सुदर्शनीयं देवतानां ललामम् ॥ ७५

अयं कवाटे निजघान पाण्ड्यं
तथा कलिङ्गान् दन्त[3]कूले ममर्द ।
अनेन दग्धा वर्षपूगान् विनाथा
वाराणसी नगरी सम्बभूव ॥ ७६

---

1. ख-ङ—भोज्यामासाद्य । म—भोज्यामुत्साद्य ?
मा—भोज्यामुत्साद्य राज्ञां विषयं प्रसह्य ।
2. ग-घ-ङ-म-मा—गान्धारीं यशसा प्रगृह्य ।
3. ग-ङ—वक्रं । घ—वक्त्वं । ख—महतो । म—क्रूरे ।
मा—अन्तः क्रूरे ।

अयं स्म युद्धे मन्यतेऽन्यैरजेयं
तमेकलव्यं नाम निषादराजम् ।
वेगेनैव शैलमभिहत्य [1]जम्भश्
शेते स कृष्णेन हतः परासुः ॥ ७७

[2]तथोग्रसेनस्य सुतं सुदुष्टं
वृष्ण्यन्धकानां मध्यगतं [3]सभास्थम् ।
[4]अपातयद्बलदेवद्वितीयो
हत्वा ददौ चोग्रसेनाय राज्यम् ॥ ७८

अयं सौभं योधयामास खस्थं
विभीषणं मायया साल्वराजम् ।
सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं
दोर्भ्यां क एनं विषहेत मर्त्यः ॥ ७९

प्राग्ज्योतिषं नाम बभूव दुर्गं
पुरं घोरमसुराणामधृष्यम् ।
महाबलो नरकस्तत्र भौमो
जहारादित्या मणिकुण्डले शुभे ॥ ८०

1. ख-ग-घ-ङ-मा—कुम्भश् ।
2. ग—ततोऽहि तं मातुलं तं प्रदुष्टं ।
3. ख-घ-ङ-म-मा—तपन्तम् ।
4. ख—अपातयच्चपलं देवकीयो ।

न तं देवास्सह शक्रेण [1]शेकुस्
समागता युधि मृत्योरभीताः ॥ ८०॥
दृष्ट्वा च तं विक्रमं केशवस्य
बलं तथैवास्त्रमवारणीयम् ।
जानन्तोऽस्य प्रकृतिं केशवस्य
न्ययोजयन् दस्युवधाय कृष्णम् ॥ ८१॥
स तत् कर्म प्रतिशुश्राव दुष्करम्
ऐश्वर्यवान् सिद्धिषु वासुदेवः ॥ ८२
निर्मोचने षट् सहस्राणि हत्वा
सञ्छिद्य पाशान् सहसा क्षुरान्तान् ।
मुरं हत्वा विनिहत्यौघरक्षो
निर्मोचनं चापि जगाम वीरः ॥ ८३
तत्रैव तेनास्य बभूव युद्धं
महाबलेनातिबलस्य विष्णोः ।
शेते स कृष्णेन हतः परासुर्
वातेनेव मथितः कर्णिकारः ॥ ८४
आहृत्य कृष्णो मणिकुण्डले [2]ते
हत्वा च भौमं नरकं मुरं च ।

1. ग-घ-ङ—सेहिरे, सहागता आवरणाय भीताः । घ—आभरणाय । म-मा—सेहिरे समागता आभरणाय भीताः ।
2. ख-ग-ङ-म-मा—शुभे ।

श्रिया वृतो यशसा चैव विद्वान्
प्रत्याजगामाप्रतिमप्रभावः ॥ ८५

अस्मै वराण्यददुस्तत्र देवा
दृष्ट्वा भीमं कर्म कृतं रणे तत् ।
श्रमश्च ते युध्यमानस्य न स्याद्
आकाशे [1]चाप्यप्सु च ते क्रमस्स्यात् ॥ ८६

शस्त्राणि गात्रे न च ते क्रमेर-
न्नित्येव कृष्णश्च ततः कृतार्थः ।
एवंरूपे वासुदेवेऽप्रमेये
महाबले गुणसम्पत् सदैव ॥ ८७

तमसह्यं विष्णुमनन्तवीर्यम्
आशंसते धार्तराष्ट्रो [2]विजेतुम् ।
सदा ह्येनं तर्कयते दुरात्मा
तच्चाप्ययं सहतेऽस्मान् समीक्ष्य ॥ ८८

पर्यागतं मम कृष्णस्य चैवं
यो मन्यते कलहं [3]सम्प्रसह्य ।
शक्यं हर्तुं पाण्डवानां [4]ममत्वं
तद्वेदिता संयुगं तत्र गत्वा ॥ ८९

1. ख-ग-घ-ङ-म-मा—चाप्सु चैव । 2. ग-घ-ङ-म-मा—बलेन ।
3. ख-ग-घ-ङ-म-मा—संप्रयुज्य ।
4. ग-घ-ङ—महत्त्वं, तद्वेदिता ।
अ-क—तद्वेदिर्ना ।

नमस्कृत्वा शान्तनवाय राज्ञे
द्रोणायाथो सहपुत्राय चैव ।
शारद्वतायाप्रतिद्वन्द्विने च
योत्स्याम्यहं राज्यमभीप्समानः ॥ ९०

[1]धर्मेणैव निधनं तस्य मन्ये
यो योत्स्यते पाण्डवैर्धर्मचारी ।
मिथ्याग्लहे निर्जिता [2]वै नृशंसैस्
संवत्सरान् वै द्वादश [3]राजपुत्राः ॥ ९१

[4]वासः कृत्स्नो विहितश्चाप्यरण्ये
दीर्घं कालं चैकमज्ञात[5]वर्षम् ।
तेषां कस्माज्जीवतां पाण्डवानां
नन्दिष्यन्ते धार्तराष्ट्राः पदस्थाः ॥ ९२

ते चेदस्मान् युध्यमानाञ्जयेयुर्
देवैर्महेन्द्रप्रमुखैस्सहायैः ।

---

1. ख-ग-घ-ङ—धर्मेण चास्त्वं नियतं । म-मा—धर्मेणास्त्वं नियतं ।
2. ग-घ-ङ-म-मा—स्सत्यसन्धाः ।
3. ग-घ-ङ-म-मा—पाण्डुपुत्राः ।
4. ग—अवाप्य कृच्छ्रमहितं ह्यरण्ये ।
   ख-घ-ङ-म-मा—अवाप्य कृच्छ्रं विहितं ह्यरण्ये ।
5. ख-ग-घ—चर्याः । ते ह्यकस्माज्जीवितं पाण्डवानां ।
   ङ-म-मा—चर्याम् । ते ह्यकस्माज्जीवितं पाण्डवानां न मृष्यन्ते ।

धर्मादधर्मश्चरितो गरीयांस्
ततो ध्रुवं नास्ति कृतं [1]च साधु ॥ ९३

न चेदिदं पौरुषं कर्मबन्धं
न चेदस्मान् मन्यतेऽसौ विशिष्टान् ।
आशंसेऽहं वासुदेवद्वितीयो
दुर्योधनं सानुबन्धं निहन्तुम् ॥ ९४

[2]न चेदिदं कर्म नरेषु वन्ध्यं
न चेद्भवेत् सुकृतं निष्फलं वा ।
इदं च तच्चापि समीक्ष्य नूनं
पराजयो धार्तराष्ट्रस्य साधुः ॥ ९५

प्रत्यक्षं वः कुरवो यद्ब्रवीमि
युद्ध्यमाना धार्तराष्ट्रा न सन्ति ।
अन्यत्र युद्धात् कुरवो यदि स्युर्
न युद्धे वै शेष इहास्ति कश्चित् ॥ ९६

हत्वा त्वहं धार्तराष्ट्रान् सकर्णान्
राज्यं कुरूणामपि जेता समग्रम् ।
यद्वः कार्यं तत् कुरुध्वं यथास्वम्
इष्टान् [3]दारानात्मभोगान् भजध्वम् ॥ ९७

1. ख-ग-घ-ङ-म-मा—न साधु ।
2. ग-घ-ङ-म-मा—न चेदिदं पुरुषे कर्मबन्धं न विद्यते पुरुषस्य स्वकर्म ।
3. ख-ग-घ-ङ-म-मा—दारान् विषयांश्चोपभुङ्ध्वम् ।

अप्येवं नो ब्राह्मणास्सन्ति वृद्धा
बहुश्रुताश्शीलवन्तः कुलीनाः ।
सांवत्सरा ज्योतिषि चाभियुक्ता
नक्षत्रयोगेषु च निश्चयज्ञाः ॥ ९८

उच्चावचं दैवयुक्तं रहस्यं
[1]दिव्याः प्रश्ना मृगचक्रा मुहूर्ताः ।
क्षयं महान्तं कुरुसृञ्जयानां
निवेदयन्ते पाण्डवानां [2]जयं च ॥ ९९

यथा हि नो मन्यतेऽजातशत्रुस्
संसिद्धार्थो द्विषतां निग्रहाय ।
जनार्दनश्चाप्यपरोक्षविद्यो
न संशयं पश्यति वृष्णिसिंहः ॥ १००

[3]अहं तथैनं खलु भाविरूपं
पश्यामि बुद्ध्या स्वयमप्रमत्तः ।
दृष्टिश्च मे न व्यथते पुराणी
संयुध्यमाना धार्तराष्ट्रा न सन्ति ॥ १०१

---

1. ख-ग-घ-ङ – दैवप्रज्ञा गृहचर्या मुहूर्तान्
महद्भयं कौरवसृञ्जयानाम् ।
म—देवप्रज्ञान् गृहचर्यान् मुहूर्तान् भयं महद् कौरव ।
2. ख-ग-घ-ङ—जयाय ।
3. ख-ग-घ-ङ-म-मा-स्वयं चाहं यानि पश्यामि नित्यं
भविष्यन्ति वै पूर्वरूपाणि युक्त्या । [पाठान्तरम्]

अनालब्धं जृम्भति गाण्डिवं धनुर्
[1]अनाहता कम्पति मे धनुर्ज्या ।
बाणाश्च तूणीरमुखाद्विसृत्य
मुहुर्मुहुर्गन्तुमुशन्ति चैव ॥ १०२

खड्गः कोशान्निस्सरति प्रसन्नो
हित्वेव जीर्णामुरगस्त्वचं स्वाम् ।
ध्वजे वाचो रौद्ररूपा [2]भवन्ति
कदा रथो योक्ष्यते ते किरीटिन् ॥ १०३

गोमायुसङ्घाश्च नदन्ति रात्रौ
रक्षांस्यथो निष्पतन्त्यन्तरिक्षात् ।
मृगास्सृगालाश्शितिकण्ठाश्च काका
गृध्रा बकाश्चैव तरक्षवश्च ॥ १०४

[3]सुवर्णपत्राश्च पतन्ति पश्चाद्
दृष्ट्वा रथं श्वेतहयप्रयुक्तम् ।

---

1. ख-ग-घ—अनालब्धा जृम्भते मे धनुर्ज्या ।
ङ-म—अनालब्धा कम्पति मेधनुर्ज्या ।
मा—अनालब्धा जृम्भति मे धनुर्ज्या ।
2. ख-ग-घ-ङ-म-मा—वदन्ति कदा रथो योक्ष्यते ते किरीटिन् ।
3. ख-ग-घ-ङ-मा—सुवर्णपादाश्चानुवदन्ति पश्चाद् ।
म—सुवर्णपादानु वदन्ति पश्चात् ।

अहं ह्येकः पार्थिवान् सर्वयोधान्
शरान् वर्षन् मृत्युलोकं नयेयम् ॥ १०५

समाददानः पृथगस्त्रमार्गान्
यथाग्निरिद्धो गहनं निदाघे ।
स्थूणाकर्णं पाशुपतं [1]महास्त्रं
ब्राह्मं चास्त्रं यच्च शक्रोऽददान्मे ॥ १०६

वधे धृतो वेगवतः प्रमुञ्चन्
नाहं प्रजाः किञ्चिदिहावशिष्ये ।
शान्तिं लप्स्ये परमो ह्येष भावस्
स्थिरो [2]मम ब्रूहि गावल्गणे तान् ॥ १०७

[3]ये वा जय्यास्समरे सूत लब्ध्वा
देवानपीन्द्रप्रमुखान् [4]समेतान् ।
तैर्मन्यते कलहं [5]सम्प्रयुज्य
स धार्तराष्ट्रः पश्यत मोहमस्य ॥ १०८

वृद्धो भीष्मश्शान्तनवः कृपश्च
द्रोणस्सपुत्रो विदुरश्च धीमान् ।

---

1. ग-घ-ङ-म-मा—च घोरं तथा ब्राह्मं यच्च शुक्रोऽपि वेद ।
2. घ-ङ—भवान् ।
3. ख-ग-घ-ङ-म-मा—नित्यं पुनस्सचिवान् यानवोचद् ।
4. ग-घ-ङ-म-मा—सहायान् । 5. अ-क—सम्प्रसह्य

एते सर्वे य[1]द्वदेयुस्तदस्तु
आयुष्मन्तः कुरवस्सन्तु सर्वे ॥ १०९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ५३ ॥ व्यासाभिगमनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये १०९ श्लोकाः]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति कृष्णार्जुनयोः नरनारायणतादात्म्यकथनपूर्वकं तद्विरोधे कुरूणां विनाशकथनम् ॥ १ ॥ तथा मर्मोद्घाटनपूर्वकं कर्णगर्हणम् ॥ २ ॥ धृतराष्ट्रेण भीष्मद्रोणवचनानादरणे सर्वकुरूणां स्वजीवितनैराश्याधिगमः ॥ ३ ॥

---

वैशम्पायनः—

समवेतेषु सर्वेषु तेषु राजसु भारत ।
दुर्योधनमिदं वाक्यं भीष्मश्शान्तनवोऽब्रवीत् ॥ १

भीष्मः—

बृहस्पतिश्चोशना च ब्रह्माणं पर्युपस्थितौ ।
मरुतश्च सहेन्द्रेण [2]वसवश्चाग्निना सह ॥ २
आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि ।

---

1. अ-क—द्यतन्ते । म-मा—द्वदन्ते ।
2. ख-ग-व-म-मा—वसवश्च तथाऽश्विनौ ।

विश्वावसुश्च गन्धर्वश् शुभाश्चाप्सरसां गणाः ॥　　३

नमस्कृत्योपजग्मुस्ते लोकवृद्धं पितामहम् ॥　　३॥

परिवार्य च विश्वेशं पर्यासत दिवौकसः ॥　　४

तेषां [1]मनश्च तेजश्चाप्याददा[2]नाविवौजसा[3]।
पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ॥　　५

बृहस्पतिश्च पप्रच्छ ब्रह्माणं काविमाविति ।
भवन्तं नोपतिष्ठेते तौ नऽशंस पितामह ॥　　६

ब्रह्मा—

यावेतौ पृथिवीं द्यां च भासयन्तौ तपस्विनौ ।
ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ॥　　७

[4]नरनारायणावेतौ लोकाल्लोकं समास्थितौ ।
ऊर्जितौ स्वेन तपसा महासत्वपराक्रमौ ॥　　८

एतौ हि कर्मणा लोकं नन्दयामासतुर्ध्रुवम् ॥　　८॥

द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्मन् परन्तपौ ।
असुराणां विनाशाय देवगन्धर्वपूजितौ ॥　　९॥

---

1. ग-घ-म-मा—मनांसि ।
2. ख-ग-घ-ङ-म-मा—नौ दिवौकसाम् ।
3. ङ-म-मा—ज्वलन्तौ रोचमानौ च द्वावतीतौ महाबलौ ।
[अधिकः पाठः]
4. म—पूर्वदेवौ ज्वलन्तौ तौ रोचमानौ तपस्विनौ ।　[अधिकः पाठः]

भीष्मः—

जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः ।
सार्धं देवगणैस्सर्वैर् [1]बृहस्पतिपुरोगमैः ॥ १०॥

तदा देवासुरे युद्धे भये जाते दिवौकसाम् ।
अयाचत महात्मानौ नरनारायणौ वरम् ॥ ११॥

तावब्रूतां वृणीष्वेति तदा भरतसत्तम ।
अथैतावब्रवीच्छक्रस् साह्यं नः क्रियतामिति ॥ १२॥

ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि ।
ताभ्यां च सहितश्शक्रो विजिग्ये दैत्यदानवान् ॥ १३॥

नर इन्द्रस्य सङ्ग्रामे हत्वा शत्रून् परन्तपः ।
पौलोमान् कालकेयांश्च सहस्राणि शतानि च ॥ १४॥

एषोऽभ्रान्तो रथे तिष्ठन् भल्लेनापाहरच्छिरः ।
जम्भस्य ग्रसमानस्य [2]तदा ह्यर्जुन आहवे ॥ १५॥

एष पारे समुद्रस्य हिरण्यपुरमारुजत् ।
हत्वा षष्टिसहस्राणि निवातकवचान् रणे ॥ १६॥

एष देवान् सहेन्द्रेण जित्वा परपुरञ्जयः ।
अतर्पयन्महाबाहुर् अर्जुनो जातवेदसम् ॥ १७॥

नारायणस्तथैवात्र भूयसोऽन्याञ्जघान ह ॥ १८

---

1. ख-ग-घ-ङ-म-मा— सहस्राक्षस्समावृतः ।

2. ग-घ-ङ—वज्रमुद्यम्य । ख-म-मा—यज्ञमर्जुनमाहवे ।

एवमेतौ महावीर्यौ तौ पश्यत समागतौ ।
वासुदेवार्जुनौ वीरौ समवेतौ महारथौ ॥　　१९

नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः ।
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः ॥　　२०

एष नारायणः कृष्णः फल्गुनश्च नरस्स्मृतः ॥　　२०॥

नारायणो नरश्चैव सत्त्वमेकं द्विधा कृतम् ॥　　२१

एतौ हि कर्मणा लोकान् अश्नुवातेऽक्षयान् ध्रुवान् ।
तत्र तत्रैव जायेते युद्धकाले पुनः पुनः ॥　　२२

तस्मात् कर्मैव कर्तव्यम् इति होवाच नारदः ।
एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् ॥　　२३

शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम् ।
पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम् ॥　　२४

सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ ।
दुर्योधन तदा तात स्मर्तासि वचनं मम ॥　　२५

नोचेदयमभावस्स्यात् कुरूणां प्रत्युपस्थितः ॥　　२५॥
[1]अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता ॥　　२६

न चेद्ग्रहीष्यसे वाक्यं श्रोतासि सुबहून् हतान् ॥　　२६॥

---

1. ग—राज्याद्बन्धुजनादर्थात् तव बुद्धिरुपप्लुता ।
ख-घ-ङ—नार्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता ।

[1]तवैव हि मतं सर्वे कुरवः पर्युपासते ॥ २७

त्रयाणामेव च मतं तत् त्वमेकोऽनुमन्यसे॥ २७॥

रामेण चैव शप्तस्य कर्णस्य भरतर्षभ ।

दुर्जातेस्सूतपुत्रस्य शकुनेस्सौबलस्य च ॥ २८॥

तथा क्षुद्रस्य पापस्य भ्रातुर्दुश्शासनस्य च ॥ २९

कर्णः—

नैवमायुष्मता वाच्यं यन्मामात्थ पितामह ।
क्षत्रधर्मे स्थितो ह्यस्मिन् स्वधर्मादनपेयिवान् ॥ ३०

किञ्चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे ।
न हि मे वृजिनं किञ्चिद् धार्तराष्ट्रा विदुः क्वचित् ॥ ३१

नाचरं वृजिनं किञ्चिद् धार्तराष्ट्रस्य नित्यशः ।
अहं हि पाण्डवान् सर्वान् हनिष्यामि रणे स्थितान् ॥ ३२
प्राग्विरुद्धैश्शमस्सद्भिः कथं वा क्रियते पुनः ॥ ३२॥

राज्ञो हि धृतराष्ट्रस्य सर्वं कार्यं प्रियं मया ।
तथा दुर्योधनस्यापि स हि राज्ये समाहितः ॥ ३३॥

वैशम्पायनः—

कर्णस्य तु वचश्श्रुत्वा भीष्मश्शान्तनवः पुनः ।
धृतराष्ट्रं महाराजम् आभाष्येदं वचोऽब्रवीत् ॥ ३४॥

भीष्मः—

यदयं कत्थते नित्यं हन्ताऽहं पाण्डवानिति ।
नायं कलाऽपि सम्पूर्णा पाण्डवानां महात्मनाम् ॥ ३५॥

1. ख-ग-घ-ङ-म-मा—तवैव विहितं पूर्वं ।

अनयो योऽयमागन्ता पुत्राणां ते दुरात्मनाम् ।
तदस्य कर्म जानीहि सूतपुत्रस्य दुर्मतेः ॥ ३६॥
एतमाश्रित्य पुत्रस्ते मन्दबुद्धिस्सुयोधनः ।
[1]अवमन्यति तान् वीरान् देवपुत्रानरिन्दमान् ॥ ३७॥
किञ्चाप्येतेन तत् कर्म कृतं पूर्वं न दुष्करम् ।
तैर्यथा पाण्डवैस्सर्वैर् एकैकेन कृतं पुरा ॥ ३८॥
दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम् ।
[2]धनञ्जयेन विक्रम्य किमनेन तदा कृतम् ॥ ३९॥
सर्वे ह्यस्त्रविदश्शूरास् सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ४०॥
सहितान् हि कुरून् सर्वान् अभियातो धनञ्जयः ।
प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा ॥ ४१॥
गन्धर्वैर्घोषयात्रायां ह्रियते यत् सुतस्तव ।
क्व तदा सूतपुत्रोऽभूद् य इदानीं [3]वृषायते ॥ ४२॥
ननु तत्रापि भीमेन पार्थेन च महात्मना ।
यमाभ्यामेव [4]सङ्गम्य गन्धर्वास्ते पराजिताः ॥ ४३॥
एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ ।

1. ख-ग-घ-ङ-म-मा—अत्यमन्यत ।
2. घ—इतः सार्धः श्लोको नास्ति ।
3. ख-ग-घ-ङ-म-मा—प्रभाषते ।
4. ग—चाक्रम्य ।     ख-घ-ङ-म-मा—चागम्य ।

[1]वैकर्तनस्य भद्रं ते सदा [2]धर्मार्थलोपिनः ॥ ४४॥

वैशम्पायनः—

भीष्मस्य तु वचश्श्रुत्वा भारद्वाजो महामनाः ।
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ ४५॥

द्रोणः—

यदाह भरतश्रेष्ठो भीष्मस्तत् क्रियतां [3]नृप ।
न काम[4]मवलिप्तानां वचनं कर्तुमर्हसि ॥ ४६॥

पुरा युद्धात् साधु मन्ये पाण्डवैस्सह सङ्गतम् ॥ ४७

यद्वाक्यमर्जुनेनोक्तं सञ्जयेन निवेदितम् ।
सर्वं तदभिजानामि करिष्यति च पाण्डवः ॥ ४८

वधे नूनं भवेच्छान्तिस् तव वा फल्गुनस्य वा ।
न तु जेताऽर्जुनस्यास्ति हन्ता वाऽस्य न विद्यते ॥ ४९

मन्युस्तस्य कथं शाम्येन्मन्दान् प्रति य उत्थितः ॥ ४९॥
अन्येऽप्यस्त्राणि जानन्ति युध्यन्ति विजयन्ति च ॥ ५०

अयं हि विजयस्त्वेव श्रूयते फल्गुनस्य च ।
त्रयस्त्रिंश[5]त्सहेन्द्रेण खाण्डवेऽग्निमतर्पयत् ॥ ५१

विजिगाय सुरान् सर्वान् नास्य वेद्मि पराजयम् ।

---

1. ख-ग-घ-ङ-म-मा—विकत्थनस्य
2. अ-क-ग—धर्मार्थतोऽपि नः ।
3. ख-ग-घ-ङ-म-मा—परम् । 4. अ-क—मर्थलिप्सूनां ।
5. मा—त्सहस्रेण ।

यस्य यन्ता हृषीकेशश् [1]शीलवृत्तसमो युधि ॥　　५२

न ह्यस्य त्रिपु लोकेपु सदृशोऽस्ति धनुर्धरः ॥　　५२॥

वैशम्पायनः—

अनादृत्य तु तद्वाक्यम् अर्थवद्द्रोणभीष्मयोः ।

ततस्स सञ्जयं राजा पर्यपृच्छत पाण्डवान् ॥　　५३॥

तदैव कुरवस्सर्वे निराशा जीवितेऽभवन् ।

भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ॥　　५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ५४॥ श्लोकाः]

## ॥ पञ्चाशोऽध्यायः ॥

धृतराष्ट्रेण पाण्डवानां किमुपजीवनेन रणोद्योग इति पृष्टस्य सञ्जयस्य पाण्डवप्रभावानुस्मरणेन मूर्छा ॥ १ ॥ लब्धसंज्ञेन सञ्जयेन पाण्डवानां कृष्णानुगृहीतस्वसामर्थ्येन राज्ञां साहाय्येन च समरोद्यम इति कथनम् ॥ २ ॥

धृतराष्ट्रः—

किमसौ पाण्डवो राजा [2]धर्मपुत्रोऽभ्यभाषत ।

[3]श्रुत्वैतद्बहुलास्सेनाः प्रीत्यर्थं नरस्समागताः ॥　　१

---

1. अ-क—शिवपुत्र ।
2. म-मा—सूतपुत्रोऽभ्यभाषत ।　　ख-ग-घ—सूतपुत्राभ्यभाषते ।
ङ—सूतपुत्राभ्यभाषत ।
3. ङ-म-मा—श्रुत्वेमां बहुलां सेनां प्रीत्यर्थेन समागताम् ।

[1]किमसौ चेष्टते सूत योत्स्यमानो युधिष्ठिरः ।
[2]के वाऽस्मद्भ्रातृपुत्राणां पश्यन्त्याज्ञेप्सवो मुखम् ॥ २

के स्विदेनं वारयन्ति युद्धाच्छाम्येति वा पुनः ।
निकृत्या कोपितं मन्दैर् धर्मज्ञं धर्मचारिणम् ॥ ३

सञ्जयः—
राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैस्सह ।
युधिष्ठिरस्य भद्रं ते स सर्वाननुशास्ति च ॥ ४

पृथग्भूताः पाण्डवानां पाञ्चालानां [3]रथव्रजाः ।
आयान्तमभिनन्दन्ति कुन्तीपुत्रं युधिष्ठिरम् ॥ ५

[4]नभस्सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम् ।
पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोदितम् ॥ ६

आगोपालावि[5]पालाश्च नन्दमाना युधिष्ठिरम् ।
पाञ्चालाः केकया मात्स्याः प्रतिनन्दन्ति पाण्डवम् ॥ ७

ब्राह्मण्यो राजपुत्र्यश्च विशां दुहितरश्च याः ।
क्रीडन्त्योऽभिसमायान्ति पार्थं सन्नद्धमीक्षितुम् ॥ ८

---

1. ख-ग-घ-ङ-म-मा—किमिच्छत्यभिसन्धातुं ।
2. ख-ग-घ-ङ-म-मा—कस्य स्विद् भ्रातृपुत्राणां चिन्तासु मुखमीक्षते। [पाठान्तरम्]
3. ग-घ-ङ—पृथग्जनाः। म-मा—पृथक्प्रजाः। ख—पृथक् पृथक्।
4. ख-ग-ङ-म-मा—तं तु सूर्यमिवोद्यन्तं यज्ञ आश्विनशंसिनः।
5. ख-ग-घ-ङ-म-मा—पालेभ्यो वन्दमाना।

धृतराष्ट्रः—

सञ्जयाचक्ष्व येनास्मान् पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नस्य सैन्येन सोमकानां बलेन च ॥ ९

वैशम्पायनः—

गावल्गणिस्तु तत्पृष्टस् सभायां कुरुसंसदि ।
[1]निश्श्वस्य सुभृशं दीर्घं मुहुस्सञ्चिन्तयन्निव ॥ १०

तत्रानिमित्ततो दैवात् सूतं कश्मलमाविशत् ।
तदाचचक्षे विदुरस् सभायां कुरुसंसदि ॥ ११

विदुरः—

सञ्जयोऽयं महाराज मूर्छितः पतितो भुवि ।
वाचं न सृजते काञ्चिद्धीनप्रज्ञोविचेतनः ॥ १२

धृतराष्ट्रः—

अपश्यत् सञ्जयो नूनं कुन्तीपुत्रान् महारथान् ।
तैरस्य पुरुषव्याघ्रैर् भृशमुद्वेजितं मनः ॥ १३

वैशम्पायनः—

सञ्जयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत् ।
धृतराष्ट्रं महाराज सभायां कुरुसंसदि ॥ १४

सञ्जयः—

दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान् महारथान् ।
मत्स्यराजगृहावासनिरोधेनावकर्शितान् ॥ १५

---

1. अ—सार्धश्लोकचतुष्टयं नास्ति

[1-2]शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ॥ १६

यो नैव रोषान्न भयान्न लोभान्नार्थकारणात् ।
न हेतुवादाद्धर्मात्मा सत्यं जह्यात् कदाचन ॥ १७

यः प्रमाणं महाराज धर्मे धर्मभृतां वरः ।
अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ॥ १८

यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन ।
यो वै सर्वान् महीपालान् वशे चक्रे धनुर्धरः ॥ १९

[3]यः काशीनङ्गमगधान् कलिङ्गांश्च युधाऽजयत् ।
तेन वै भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ २०

[4]यस्य वीर्येण सहसा चत्वारो [5]युधि मानवाः ।
निस्सृता जतुगेहाद्वै हिडिम्बात् पुरुषादकात् ॥ २१

यश्चैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ २१॥

याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान् ।
तत्रैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ २२॥

---

1. ङ—यश्च तान् पाण्डवान् सर्वान् सङ्गतान् वारणावते ।
दह्यतो मोचयामास कुन्तीपुत्रो वृकोदरः ॥
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ [अधिकः पाठः]

2. म—इतः श्लोकत्रयं नास्ति । मा—इतः श्लोकपञ्चकं नास्ति ।

3. म—इदमर्धं नास्ति । 4. म—इदमर्धं नास्ति ।

5. म—भुवि पाण्डवाः ।

यश्च तान् सङ्गतान् सर्वान् पाण्डवान् वारणावते ।
दह्यतो मोचयामास [1] कुन्तीपुत्रो वृकोदरः ॥ २३॥

[2]तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ २४

कृष्णायाश्चरता प्रीतिं येन क्रोधवशा हताः ।
प्रविश्य विषमं घोरं पर्वतं गन्धमादनम् ॥ २५

यस्य नागायुतैर्वीर्यं भुजयोस्सारमर्पितम् ।
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ २६

कृष्णद्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः ।
अजयद्यः पुरा वीरो युध्यमानं पुरन्दरम् ॥ २७

[3]यस्स साक्षान्महादेवं गिरिशं शूलपाणिनम् ।
तोषयामास युद्धेन देवदेवमुमापतिम् ॥ २८

यश्च सर्वान् वशे चक्रे लोकपालान् धनुर्धरः ।
तेन वो विजयेनाजौ पाण्डवा अभ्ययुञ्जत ॥ २९

यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुताम् ।
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः ॥ ३०

तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ।
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत ॥ ३१

---

1. अ-क-ख—तेन वस्तेऽभ्ययुञ्जत।
2. अ-क-ख—इदमर्धं न दृश्यते।
3. ख-ग—यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन। [अधिकः पाठः]

यः काशीनङ्गमगधान् कलिङ्गांश्च युधाऽजयत् ।
तेन वस्सहदेवेन पाण्डवा अभ्ययुञ्जत ॥ ३२

यस्य वीर्येण सदृशाश् चत्वारो [1]युधि मानवाः ।
अश्वत्थामा धृष्टकेतू रुक्मी प्रद्युम्न एव च ॥ ३३

तेन वस्सहदेवेन [2]पाण्डवा अभ्ययुञ्जत ॥ ३३॥

यवीयसा नृवीरेण माद्रीनन्दकरेण च ॥ ३४

तपश्चचार या घोरं काशिकन्या पुरा सती ।
भीष्मस्य वधमिच्छन्ती प्रेत्यापि भरतर्षभ ॥ ३५

पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान् ।
स्त्रीपुंसोः पुरुषव्याघ्र यस्स वेद गुणागुणान् ॥ ३६

यः कलिङ्गान् समापेदे पाञ्चाल्यो युद्धदुर्मदः ।
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत ॥ ३७

यं यक्षः पुरुषं चक्रे भीष्मस्य निधनेच्छया ।
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत ॥ ३८

महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
[3]आमुक्तकवचाश्शूरास् तैश्च वस्तेऽभ्ययुञ्जत ॥ ३९

यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान् सत्यविक्रमः ।

---

1. ङ-म-मा—भुवि । 2. अ-क—युद्धं राजन् महात्ययम् ।
3. ख-ग-म-मा—सुमृष्ट । घ—सम्मृष्ट ।

तेन वो वृष्णिवीरेण युयुधानेन [1]सङ्गरः ॥ ४०

य आसीच्छरणं काले पाण्डवानां महात्मनाम् ।
रणे तेन विराटेन [2]पाण्डवा अभ्ययुञ्जत ॥ ४१

यस्तु काशिपती राजा वाराणस्यां महारथः ।
[3]स तेषामभवद्योद्धा तेन वस्तेऽभ्ययुञ्जत ॥ ४२

शिशुभिर्दुर्जयैस्सङ्ख्ये द्रौपदेयैर्महात्मभिः ।
आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत ॥ ४३

यः कृष्णसदृशो वीर्ये युधिष्ठिरसमो दमे ।
तेनाभिमन्युना सङ्ख्ये पाण्डवा अभ्ययुञ्जत ॥ ४४

यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महायशाः ।
दुस्सहस्समरे क्रुद्धश् शैशुपालिर्महारथः ॥ ४५
[4]तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ॥ ४५॥
[5]अक्षौहिण्या परिवृतः पाण्डवान् योऽभिसंवृतः ॥ ४६

यस्संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ॥ ४७

---

1. ख-ग-घ-ङ—सङ्गताः ।
2 अ-क—भविता वस्समागमः ।
3. ख-ग-घ-ङ-म-मा—एषामभिमतो योद्धा
4. म—श्लोकोऽयं नास्ति ।　　5. मा—अर्धद्वयं न दृश्यते ।

तथा चेदिपतेर्भ्राता [1]शरभो भरतर्षभ ।
[2]करकर्षेण सहित[3]स् ताभ्यां वस्तेऽभ्ययुञ्जत ॥ ४८

[4]जारासन्धिस्सहदेवो जयत्सेनश्च तावुभौ ।
[5]युद्धेऽप्रतिरथौ वीरौ पाण्डवार्थे व्यवस्थितौ ॥ ४९

द्रुपदश्च महातेजा बलेन महता वृतः ।
त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यवस्थितः ॥ ५०

एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः ।
शतशो [6]यानुपाश्रित्य धर्मराजो व्यवस्थितः ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये ५१ श्लोकाः ]

---

1. ख-घ-ङ-म-मा—ऋषभो नाम वीर्यवान् ।
2. ख-ग—तेनर्षभेण । म—शरवर्षेण ।
3. मा—:पाण्डवा अभ्ययुञ्जत ।
4. ङ—तेन मनुष्यर्षभेण पाण्डवास्तेऽभ्ययुञ्जत । [अधिकः पाठः]
5. ङ—इदमर्धं नास्ति ।
6. ङ-म—यान्त्युपाश्रित्य धर्मराजं व्यवस्थिताः ।
   घ—यान्त्युपाश्रित्य राजानं तु व्यवस्थिताः ।
   ख—यान्ति पाण्डव्यं धर्मराजं व्यवस्थिताः ।

## ॥ एकपञ्चाशोऽध्यायः ॥

धृतराष्ट्रस्य सञ्जयनिकटे भीमसेनप्रतापानुस्मरणेन परिशोचनम् ॥१॥

धृतराष्ट्रः—

सर्व एते महेष्वासा ये त्वया परिकीर्तिताः ।
एकतस्त्वेव ते सर्वे समेता भीम एकतः ॥ १

भीमसेनाद्धि मे भूयो भयं सञ्जायते महत् ।
क्रुद्धादमर्षणात् तात व्याघ्रादिव महारुरोः ॥ २

जागर्मि रात्रयस्सर्वा दीर्घमुष्णं च निश्श्वसन् ।
भीतो वृकोदरात् तात सिंहा[1]त् पशुरिवापरः ॥ ३

न हि तस्य महाबाहोश् शक्रप्रतिमतेजसः ।
सैन्येऽस्मिन् प्रतिपश्यामि य एनं विषहेद्युधि ॥ ४

अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः ।
[2]अनर्महासी सोन्मादस् तिर्यक्प्रेक्षी महास्वनः ॥ ५

महावेगो महोत्साहो महाबाहुर्महाबलः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ६

उरु[3]ग्राहगृहीतानां गदां बिभ्रद्वृकोदरः ।
कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ॥ ७

---

1. अ-क—दिव महागजः ।  2. अ-क—इदमर्धं नास्ति
3. ख-ग-घ-ङ-म-मा—ग्राहगृहीतेषु ।

[1]अष्टाश्रिमायसीं घोरां गदां काञ्चनभूषणाम् ।
[2]मनसाऽहं प्रपश्यामि ब्रह्मदण्डमिवोद्यतम् ॥ ८

यथा मृगाणां यूथेषु सिंहो जातबलश्चरेत् ।
मामकेषु तथा भीमो बलेषु विचरिष्यति ॥ ९

सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
[3]बह्वाशी विप्रतीपश्च बाल्येऽपि रभसस्सदा ॥ १०

उद्वेपते मे हृदयं यदा दुर्योधनादयः ।
बाल्येऽपि तेन युद्ध्यन्तो वारणेनेव मर्दिताः ॥ ११

तस्य वीर्येण सङ्क्लिष्टा नित्यमेव सुता मम ।
स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ॥ १२

ग्रसमानमनीकानि रथवारणवाजिनाम् ।
पश्यामीवाग्रतो भीमं क्रोधमूर्छितमाहवे ॥ १३

अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे ।
महेश्वरसमं क्रोधे को हन्याद्भीममाहवे ॥ १४

सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणम् ॥ १४॥

---

1. ख-ग-घ-ङ-म—सैक्यायसमयीं गुर्वीं गदां काञ्चनभूषिताम् ।
निष्कीर्णामायसीं स्थूलां सुपर्वां काञ्चनीं गदाम् ॥
[अधिकः पाठः]

2 ग-घ-ङ-म—भीमस्या ।

3. ख-ग-घ-ङ-म-मा—प्रबाधते हि मे पुत्रान् बाल्येऽपि तरसा सदा ।
[ पाठान्तरम् ]

अतिलाभं तु मन्येऽहं यत् तेन रिपुघातिना ।
तदैव न हतास्सर्वे पुत्रा मम मनस्विना ॥ १५॥

येन भीमबला यक्षा राक्षसाश्च पुरा हताः ।
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति ॥ १६॥

न स जातु वशे तस्थौ मम बाल्येऽपि सञ्जय ।
किं पुनर्मम दुष्पुत्रैः क्लिष्टस्सम्प्रति पाण्डवः ॥ १७॥

[1]निष्ठुरो रोषणोऽत्यर्थं भज्येतापि न सन्नमेत् ।
तिर्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः ॥ १८॥

[2]शूरस्तथाऽप्रतिबलो गौर[3]स्ताल इवोन्नतः ।
प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्जुनात् ॥ १९॥

जवेन [4]वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ।
[5]अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली ॥ २०॥

इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात् पुरा ।
रूपतो वीर्यतश्चैव याथातथ्येन पाण्डवः ॥ २१॥

---

1. ख-ग-घ-ङ-म-मा—निष्ठुरस्स च नैष्ठुर्यात् ।
2. ख-ङ—दिवस्पतिबलस्तात । म-मा—बृहस्पतिबलस्तात ।
3. ग—स्तरुरिवोन्नतः । ख-घ-ङ-म—स्तरुरिवोद्धतः ।
मा—स्तरुरिवोद्गतः । 4. अ-क—वाजिनोऽभ्येति बलेनाभ्येति ।
ख-घ-ङ—वायुमत्येति बलेनात्येति ।
5. ख-ग-घ-ङ-म-मा—अत्यल्पभाषी मध्वक्षो ।

आयसेन स दण्डेन रथान् नागान् हयान् नरान् ।
हनिष्यति रणे क्रुद्धो रौद्रः क्रूरपराक्रमः ॥ २२॥

[1]अमर्षी नित्यसंरब्धो भीमः प्रहरतां वरः ।
मया तात प्रतीपानि कुर्वन् पूर्वं विमानितः ॥ २३॥

निष्कर्णामायसीं स्थूलां सुपार्श्वां काञ्चनीं गदाम् ।
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः ॥ २४॥

अपारमप्लवागाधं समुद्रं शरवेगितम् ।
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः ॥ २५॥

क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः ।
[2]विषमं [3]न हि मन्यन्ते प्रपातं मधुदर्शिनः ॥ २६॥

संयुगं [4]ये गमिष्यन्ति नररूपेण मृत्युना ।
नियतं चोदिता धात्रा सिंहेनेव महामृगाः ॥ २७॥

[5]शैक्यां तात चतुष्किष्कुं षडश्रिममितौजसम् ।
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः ॥ २८॥

---

1. म—इदमर्धं नास्ति ।
2. ङ—नेदमर्धमस्ति ।
3. ग-घ-म-मा—नावबुध्यन्ते ।
4. म-मा—ते करिष्यन्ति नररूपेण वायुना ।
5. ख-ग-घ-ङ—सैक्यां तां च चतुष्किष्कुं षडश्रिममितौजसम् ।
म-मा—सैक्यां तात चतुष्किष्कुं षडश्राममितौजसम् ।

[1]गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः ॥　　२९॥

उद्दिश्य [2]नागान् पततः कुर्वतो भैरवान् रवान् ।
प्रतीपं पततो मत्तान् कुञ्जरान् प्रति गर्जतः ॥　　३०॥

विगाह्य रथमार्गेषु योधानुद्दिश्य निघ्नतः ।
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा ॥　　३१॥

वीथीं कुर्वन् महाबाहुर् द्रावयन् मम वाहिनीम् ।
नृत्यन्निव [3]गदापणिर् युगान्तं दर्शयिष्यति ॥　　३२॥

प्रभिन्न इव मातङ्गः प्रभञ्जन् पुष्पितान् द्रुमान् ।
प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः ॥　　३३॥

कुर्वन् रथान् विपुरुषान् [4]विसारथिहयध्वजान् ।
आरुजन् पुरुषव्याघ्रो रथिनस्सादिनस्तथा ॥　　३४॥

गङ्गावेग इवानूपांस् तीरजान् विविधान् द्रुमान् ।
प्रभङ्क्ष्यति रणे सेनां पुत्राणां मम सञ्जय ॥　　३५॥

वधं नूनं गमिष्यन्ति भीमसेनबलार्दिताः ।

---

1. घ—इतः श्लोकद्वयं नास्ति
2. ग—तानापततः ।　　ख-ङ—पत्तीन् पततः
   म—उत्सृज्य पातान् पततः ।
3. अ-क—महाबाहुर्　ग-घ-ङ—गदापाणिर्युगान्ताग्निरिवोत्थितः ।
4. ख-ग-घ-ङ-म-मा—विध्वजान् भिन्नपुष्करान् ।

मम पुत्राश्च भृत्याश्च राजानश्चैव सञ्जय ॥ ३६॥

येन राजा महावीर्यः प्रविश्यान्तः पुरं पुरा ।
वासुदेवसहायेन जरासन्धो निपातितः ॥ ३७॥

कृत्स्नेयं पृथिवी देवी जरासन्धेन धीमता ।
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ॥ ३८॥

भीष्मप्रतापात् कुरवो नयेनान्धकवृष्णयः ।
यन्न तस्य वशे जग्मुः केवलं दैवमेव तत् ॥ ३९॥

स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ।
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ॥ ४०॥

दीर्घकालेन संसिक्तं विषमाशीविषो यथा ।
स मोक्ष्यति रणे तेजो मम पुत्रेषु सञ्जय ॥ ४१॥

महेन्द्र इव वज्रेण दानवान् देवसत्तमः ।
भीमसेनो गदापाणिस् सूदयिष्यति मे सुतान् ॥ ४२॥

अविषह्यमनावार्यं तीव्रवेगपराक्रमम् ।
पश्यामीवातिताम्राक्षम् आपतन्तं वृकोदरम् ॥ ४३॥

अगदस्याप्यधनुषो विरथस्य [1]विवर्मणः ।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ ४४॥

भीष्मो द्रोणश्च विप्रोऽयं कृपश्शारद्वतस्तथा ।

---

1. ख-ग-घ-ङ—विखङ्गिनः। म—विचक्षण।

जानन्त्येते यथैवाहं वीर्यज्ञस्तस्य धीमतः ॥　४५॥

आर्यव्रतं तु जानन्तस् सङ्गरान्तं विधित्सवः ।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ॥　४६॥

बलीय[1]स्सर्वतो दिष्टं पुरुषस्य विशेषतः ।
पश्यन्नपि जयं तेषां न नियच्छामि यत् सुतान् ॥　४७॥

[2]ते पुराणं महेष्वासा मार्गमैन्द्रं समास्थिताः ।
त्यक्ष्यन्ति तुमुले प्राणान् रक्षन्तः पार्थिवं यशः ॥　४८॥

यथैषां मामकास्तात तथैषां पाण्डवा अपि ।
पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ॥　४९॥

[3]यत्त्वस्मदाश्रयात् किञ्चिद् दत्तमिच्छन्ति सञ्जय ।
तस्यापचितिमार्यत्वात् कर्तारस्स्थविरास्त्रयः ॥　५०॥

आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ।
निधनं क्षत्रियस्याजौ वरमेवाहुरुत्तमम् ॥　५१॥

स वै शोचामि सर्वान् वै ये युयुत्सन्ति पाण्डवैः ।
विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम् ॥　५२॥

न तु मन्ये विघाताय ज्ञानं दुःखस्य सञ्जय ।
भवत्यतिबलं ह्येतज् ज्ञानस्याप्युपघातकम् ॥　५३॥

---

1. ङ-म-मा—स्तु वै।
2. ब-ङ—अविषह्या।　ख—अविषह्यान् रणे युध्वा।
   म-मा—अविषह्यं महेष्वासा।
3 अ-क—यद्वन्मसाश्रयात्।
   ग—ये त्वस्मदाश्रयं किञ्चिद् दत्तमिष्टं च सञ्जय।
   ख-ब-ङ-म-मा—यत्त्वस्मदाश्रयात् किञ्चिद्दत्तमिष्टं च सञ्जय।

ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसङ्ग्रहान् ।
सुखे भवन्ति सुखिनस् तथा दुःखेन दुःखिताः ॥ ५४॥

किं पुनर्मोहमासक्तस् तत्र तत्र सहस्रधा ।
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ॥ ५५॥

संशये तु महत्यस्मिन् किं नु मे क्षेममुत्तमम् ।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ॥ ५६॥

द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ।
मन्देनैश्वर्यकामेन लोभात् पापमिदं कृतम् ॥ ५७॥

मन्ये पर्यायधर्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥ ५८॥

किं नु कुर्यां कथं कुर्यां क नु गच्छामि सञ्जय ।
एते नश्यन्ति कुरवो मन्दाः क्रोधवशं गताः ॥ ५९॥

अवशोऽहं तदा तात पुत्राणां निहते शते ।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥ ६०॥

यथा निदाघे ज्वलनस्समिद्धो
दहेत् कक्षं वायुना चोद्यमानः ।
गदाहस्तः [1]पाण्डवो वै तथैव
हन्ता मदीयान् सहितोऽर्जुनेन ॥ ६१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ५२ ॥ व्यासाभिगमनपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ६१॥ श्लोकाः]

---

1. ङ-म-मा—पाण्डवस्तद्वदेव ।

## ॥ द्विपञ्चाशोऽध्यायः ॥

धृतराष्ट्रेण अर्जुनप्रतापानुवर्णनपूर्वकं परिशोचनम् ॥ १ ॥ तथा धृतराष्ट्रेण कुरून् प्रति पाण्डवानां बलवत्सहायसम्पन्नत्वादिगुणसमृद्धिकथनपूर्वकं शान्त्यर्थं स्वेन प्रयतनाभिधानम् ॥ २ ॥

धृतराष्ट्रः—

यस्य वै नानृता वाचः कदाचिदनुशुश्रुम ।
त्रैलोक्यमपि तस्य स्याद् योद्धा यस्य धनञ्जयः ॥ १

तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
[1]अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥ २

अस्यतः कर्णिनालीकान् मार्गणान् हृदयच्छिदः ।
प्रत्येता न समः कश्चिद् विद्यते सव्यसाचिना ॥ ३

द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ ।
[2]कृतास्त्रौ बलिनां श्रेष्ठौ समरेष्वपराजितौ ॥ ४

[3]उभाभ्यां संशयो लोके न त्वस्ति विजयो मम ॥ ४॥
घृणी कर्णः प्रमादी च आचार्यस्स्थविरो गुरुः ॥ ५

समर्थो बलवान् पार्थो दृढधन्वा जितक्लमः ।
भवेत् सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ॥ ६

---

1. अ-क—अर्धद्वयं नास्ति
2. ख-घ-ङ-म-मा—नास्तीदमर्धम्।
3. अ-क-ख-ग-म—महान् स्यात्। मा—माहात्म्यात्।

सर्वे ह्यस्त्रविदश्शूरास् सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ७

वधे नूनं भवेच्छान्तिस् तयोर्वा फल्गुनस्य वा ।
न तु हन्ताऽर्जुनस्यास्ति जेता चास्य न विद्यते ॥ ८

मन्युस्तस्य कथं शाम्येन्मन्दान् प्रति य उत्थितः ॥ ८॥
अन्येऽप्यस्त्राणि जानन्ति [1]जीयन्ते च जयन्ति च ।
एकान्तविजयस्त्वेव श्रूयते फल्गुनस्य ह ॥ ९॥
त्रयस्त्रिंश[2]त्सहस्राणि खाण्डवेऽग्निमतर्पयत् ।
जिगाय च सुरान् सर्वान् नास्य विद्मः पराभवम् ॥ १०॥

यस्य यन्ता हृषीकेशश् शीलवृत्तसमो युधि ।
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा ॥ ११॥

कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ।
युगपत् त्रीणि तेजांसि समेतान्यनुशुश्रुम ॥ १२॥

नैवास्ति नो धनुस्तादृङ् न योद्धा न च सारथिः ।
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः ॥ १३॥
शेषयेदशनिर्दीप्तो निष्पतन् मूर्ध्नि सञ्जय ।
न तु शेषं शरास्तात कुर्युरस्ताः किरीटिना ॥ १४॥

---

1. ख-ग-ङ-म-मा—युद्ध्यन्ति विजयन्ति च ।
 घ—विजयन्ति जयन्ति च ।
2. अ-क—त्सुरास्सूत । म—त्सहेन्द्रेण ।

अपि चास्यन्निवाभाति [1]निघ्नन्निव धनञ्जयः ।
[2]उद्धरन्निव कायेभ्यश् शिरांसि शरवृष्टिभिः ॥　१५॥

अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः ।
गाण्डीवोत्थं दहेदाजौ पुत्राणां मम वाहिनीम् ॥　१६॥

अपि सा रथघोषेण भयार्ता सव्यसाचिनः ।
वित्रस्ता बहुला सेना भारती प्रतिभाति मे ॥　१७॥

यथा कक्षं [3]महानग्निः [4]प्रवृद्धस्सर्वतश्चरन् ।
महार्चिरनिलोद्धूतस् तद्वद्धक्ष्यति मामकान् ॥　१८॥

[5]यथोद्वमन् निशितान् बाणसङ्घांस्
तानाततायी समरे किरीटी ।
सृष्टोऽन्तकस्सर्वहरो विधात्रा
यथा भवेत् तद्वद[6]वारणीयः ॥　१९॥

यदा ह्यभीक्ष्णं सुबहून् प्रणादान्
श्रोतास्मि तानावसथे कुरूणाम् ।
तेषां समन्ताच्च तथा रणाग्रे
क्षयः किलायं [7]भरतानुपैति* ॥　२०॥

---

1. ङ-म-मा—विनिघ्नन्निव फल्गुनः ।
2. ङ-मा—उत्पतन्तीव　म—उत्पतन्निव ।
3. ख-ङ-म-मा—दहत्यग्निः ।　4. अ-क—प्रदहेत् सर्वत ।
5. ङ- यथोद्वहन् ।　म—यतो बृहन्निहितान् बाणवर्षान् ।
मा—यद्वोद्वमन् ।
6. अ-ग-म—पारणीयः ।　7. ख-ङ-म-मा— भवतामुपैति ।
* सर्वेषु कोशेष्वत्रैवाध्यायसमाप्तिर्दृश्यते ।

धृतराष्ट्रः—

यथैव पाण्डवास्सर्वे पराक्रान्ता जिगीषवः ।
तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ २१।

८

त्वमेव हि पराक्रान्तान् आचक्षीथाः परान् मम ।
पाञ्चालान् केकयान् मत्स्यान् मागधान् वत्सभूमिपान् ॥ २२॥

यश्च सेन्द्रानिमाँल्लोकान् इच्छन् कुर्याद्वशे बली ।
[1]स श्रेष्ठो जगतस्स्रष्टा पाण्डवानां जये धृतः ॥ २३॥

समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् ।
शैनेयस्समरे स्थाता बीजवत् प्रवपञ् छरान् ॥ २४॥

धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः ।
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ॥ २५॥

युधिष्ठिरस्य च क्रोधाद् अर्जुनस्य च विक्रमात् ।
यमाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ २६॥

अमानुषं मनुष्येन्द्रैर् जालं विततमन्तरा ।
[2]न मे सैन्यास्तारिष्यन्ति ततः क्रोशामि सञ्जय ॥ २७॥

दर्शनीयो मनस्वी च लक्ष्मीवान् ब्रह्मवर्चसी ।
मेधावी सुकृतप्रज्ञो धर्मात्मा पाण्डुनन्दनः ॥ २८॥

1. ग-ङ—श्रेष्ठस्स जगतः कृष्णः। ख-म-मा—स श्रेष्ठो जगतः कृष्णः।
2. ख-ग-घ-ङ-म-मा—मम सेनां हनिष्यन्तीत्याक्रोशामि ।

मित्रामात्यैस्सु[1]सम्पन्नस् सम्पन्नो याज्ययाजकैः ।
भ्रातृभिश्श्वशुरैर्वीरैर् उपपन्नो महारथैः ॥ २९॥

धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः ।
अनृशंसो वदान्यश्च ह्रीमान् सत्यपराक्रमः ॥ ३०॥

बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः ॥ ३१
तं सर्वगुणसम्पन्नं समिद्धमिव पावकम् ।

तपन्तमिव को मन्दः पतिष्यति पतङ्गवत् ॥ ३२
पाण्डवाग्निमनावार्यं मुमूर्षुर्[2]नष्टचेतनः ॥ ३२॥

तनुरुच्चाशिखी राजा [3]मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ३३॥

[4]न साधु मन्ये तैर्युद्धं कुरवस्तन्निबोधत ।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥ ३४॥

एषा मे परमा [5]बुद्धिर् यया शाम्यति मे मनः ।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ ३५॥

---

1. ङ-म-मा—प्रसन्नः सम्पन्नो योज्ययोजकैः।
2. ख-ग-घ-ङ—मूढचेतनः।
3. ख-ग-घ-ङ-म-मा—शुद्धजाम्बूनदप्रभः।
4. ङ-म-मा—तैरयुद्धं साधु मन्ये।
5. ख-ग-घ-ङ-म-मा—शान्तिर्।

न तु नश्शिक्षमाणानाम् उपेक्षेत युधिष्ठिरः ।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ३६॥ श्लोकाः]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

---

सञ्जयेन पाण्डवेषु जयसाधनसामग्रीमभिधाय तेषु धार्तराष्ट्रकृतापकारानुस्मारणपूर्वकं धृतराष्ट्रगर्हणम् ॥ १ ॥

---

सञ्जयः—

एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ १

इदं तु नाभिजानामि तव धीरस्य [1]धीमतः ।
[2]यत् पुत्रवशमागच्छेस् [3]तत्त्वज्ञस्सव्यसाचिनः ॥ २

नैष कालो महाराज तव शश्वत् कृतागसः ।
त्वया [4]ह्येवादितः पार्था [5]निकृता भरतर्षभ ॥ ३

---

1. ग—निर्णयम् । ख-घ-ङ-म-मा—नित्यशः ।
2. ख-घ-म-मा—यत् पुत्रशतमागच्छेत् ।
3. अ-क—सत्त्वज्ञः । ख-घ—सत्त्वस्थं सव्यसाचिनम् ।
4. घ-ङ—त्वयैव बाधिताः । ख—त्वयाद्यैवार्दिताः ।
म—त्वया ह्यावेदिताः । 5. ख-ग-घ-ङ—निकृत्या ।

स्वीकृतास्तैर्जनपदाः कुरवस्ते सजाङ्गलाः ।
कथं वीरैर्जितां भूमिम् अखिलां प्रतिपद्यथाः ॥ ४

पिता श्रेष्ठस्सुहृद् यश्च सम्यक् प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ५

इदं जितमिदं लब्धम् इति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ६

परुषाण्युच्यमानांश्च पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ७

पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
कथं वीरार्जितामुर्वीम् अखिलां प्रतिपद्यथाः ॥ ८

बाहुवीर्यैर्जिता भूमिस् तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ९

ग्रस्तान् गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ १०

कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वने राजन् प्रव्रजत्सु पुनः पुनः ॥ ११

प्रवर्षतश्शरव्रातान् अर्जुनस्य शितान् बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ १२

अस्यतां फल्गुनश्श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवस्सर्वभूतानाम् आयुधानां सुदर्शनम् ॥ १३

वानरो रोचमानश्च केतुः केतुमतां वरः ॥ १३॥

एवमेतानि सरथो वहञ्श्वेतहयो रणे ।
क्षपयिष्यति नो राजन् कालचक्रमिवोद्यतम् ॥ १४॥

तस्याद्य वसुधा राजन् निखिला भरतर्षभ ।
यस्य भीमार्जुनौ योधौ स राजा राजसत्तमः ॥ १५॥

तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ।
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ॥ १६॥

न [1]भीमार्जुनयोर्भीता लप्स्यन्ते विजयं विभो ।
तव पुत्रा महाराज राजानश्चानुसारिणः ॥ १७॥

मत्स्यास्त्वामद्य नार्चन्ति पञ्चालाश्च सकेकयाः ।
साल्वेयाश्शूरसेनाश्च [2]सर्वे त्वामवजानते ॥ १८॥

पार्थं ह्येते गतास्सर्वे वीर्यज्ञास्तस्य धीमतः ॥ १९

[3]पुत्रस्य तव दोषेण नानुशोचितुमर्हसि ।
[4]भक्ता अपि विरुध्यन्ते तव पुत्रैस्सदैव ते ॥ २०

अनर्हानेव तु वने धर्मयुक्तान् विकर्मणा ।
योऽक्लेशयत् पाण्डुपुत्रान् यो विद्वेष्टयधुनाऽपि च ॥ २१

---

1. ग—हि भीमबलाद् भीता लभन्ते ।
ख-ङ-म—हि भीमभयाद् भीता लभन्ते ।
2. ख-ग-घ-ङ-म-मा—सर्वप्राच्याश्च मारिष ।
3. अ-क—नास्तीदमर्धम् ।
4. ख-घ-ङ—इतः सार्धं श्लोकद्वयं नास्ति ।

सर्वोपायैर्नियन्तव्यस् सानुगः पापपूरुषः ।
तव पुत्रो महाराज नानुशोचितुमर्हसि ॥ २२

अपरोक्षं महाराज साक्षाच्चैनं ब्रवीम्यहम् ।
द्यूतकाले मया प्रोक्तं [1]विदुरेण च धीमता ॥ २३

यदिदं ते विलपितं पाण्डवान् प्रति भारत ।
अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये २४ श्लोकाः]

---

## ॥ चतुःपञ्चाशोऽध्यायः ॥

दुर्योधनेन धृतराष्ट्रं प्रति कृष्णादिभिः कुरुसमुच्छेदप्रतिज्ञापूर्वकपाण्डवसमाश्वासनश्रवणचकिताय स्वस्मै भीष्मादिभिरभयप्रदानकथनम् ॥ १ ॥
तथा स्वपरपक्षयोः बलाबलनिरूपणपूर्वकं धृतराष्ट्रं प्रति समाश्वासनम् ॥२॥

---

दुर्योधनः—

न भेतव्यं महाराज न शोच्या भवता वयम् ।
[2]समर्थास्स्म पराञ्जेतुं बलिनस्समरे विभो ॥ १

---

1. ङ-म-मा—तथा भीष्मेण ।
2. म-मा—नास्तीदमर्धम् ।

वने प्रव्राजितान् पार्थान् यदायान्मधुसूदनः ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ २

केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः ।
राजानश्चान्वयुः पार्थान् बहवोऽन्येऽनुयायिनः ॥ ३

इन्द्रप्रस्थस्य चादूरान् समाजग्मुर्महारथाः ।
[1]व्यगर्हयंश्च सङ्गम्य भवन्तं कुरुभिस्सह ॥ ४

ते युधिष्ठिरमासीनम् अजिनैः परिवारितम् ।
कृष्णप्रधानास्संहत्य पर्युपासत भारत ॥ ५

प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतस्सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ६

श्रुत्वा चैवं मयोक्तास्तु भीष्मद्रोणकृपास्तथा ।
ज्ञातिक्षयभयाद्राजन् भीतेन भरतर्षभ ॥ ७

न च स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
[2]समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ८

ऋते च विदुरात् सर्वे यूयं वध्या [3]मता मम ।
धृतराष्ट्रस्तु धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ९

समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।

---

1. ङ-म-मा—विगर्हयन्तः । 2. म—इतोऽर्धद्वयं न दृश्यते ।
3. ख-ग-घ-ङ—महात्मना ।

एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे ॥     १०

तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान् वा सम्परित्यज्य प्रतियुध्यामहे परान् ॥     ११

प्रतियुद्धे तु नियतस् स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥     १२

विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैस्सर्वैस् स्वजनेन च सर्वशः ॥     १३

प्रणिपाते न दोषोऽस्ति [1]सन्धिर्नश्शाश्वतीस्समाः ।
पितरं त्वेव शोचामि प्रज्ञानेत्रं जनाधिपम् ॥     १४

मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनुत्तमम् ॥     १४॥

[2]कृतं हि तव पुत्रैश्च परेषामवरोधनम् ।
मत्प्रियार्थं पुरैवैतद् विदितं ते नरोत्तम ॥     १५॥

ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥     १६॥

ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
मत्वा मां महतीं चिन्ताम् आस्थितं व्यथितेन्द्रियम् ॥     १७॥

अभिद्रुग्धाः परे चेन्नो न भेतव्यं परन्तप ।

---

1. ख-घ-ङ-म-मा—बन्धूनां ।
2. घ-ङ—इतः श्लोकद्वयं नास्ति

असमर्थाः परे जेतुम् अस्मान् युधि समास्थितान् ॥ १८॥

एकैकशस्समर्थास्स्मो विजेतुं सर्वपार्थिवान् ॥ १९

आगच्छन्तु विनेष्यामो दर्पमेषां शितैश्शरैः ।
पुरैकेन हि भीष्मेण विजितास्सर्वपार्थिवाः ॥ २०

मृते पितर्यतिक्रुद्धो रथेनैकेन भारत ।
जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ॥ २१

ततस्ते शरणं जग्मुर् देवव्रतमिमं भयात् ॥ २१॥

स भीष्मस्सुसमर्थोऽयम् अस्माभिस्सहितो रणे ।
परान् विजेतुं तस्मात् ते व्येतु भीर्भरतर्षभ ॥ २२॥

इत्येषां निश्चयो ह्यासीत् तत्कालेऽमिततेजसाम् । २३
पुरा परेषां पृथिवी कृत्स्नाऽऽसीद्वशवर्तिनी ॥ २३॥

अस्मान् पुनरमी नाद्य समर्था जेतुमाहवे ।
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः ॥ २४॥

अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थास्सुखदुःखेषु समानीताश्च पार्थिवाः ॥ २५॥

अप्यग्निं प्रविशेयुस्ते समुद्रं वा परन्तप ।
मदर्थं पार्थिवास्सर्वे तद्विद्धि कुरुसत्तम ॥ २६॥

उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।

विलपन्तं बहुविधं भीतं परविकत्थने ॥ २७॥

एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान् प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते [1]भयमागतम् ॥ २८॥

जेतुं समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं [2]ब्रह्मणोऽपि स्वयम्भुवः ॥ २९॥

[3]युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान् प्रयाचते ।
भीतो हि मामकात् सैन्यात् प्रभावाच्चैव मे विभो ॥ ३०॥

समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्सि भारत ॥ ३१॥

मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत् कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ३२॥

युक्तो [4]दुःखोषितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ३३॥

दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
सङ्कर्षणस्य [5]भवने यत्तदैनमुपावसम् ॥ ३४॥

1. ख-ब-ङ-म-मा—मानसं भयम् ।
2. ङ-म-मा—ब्रह्मणाऽपि स्वयम्भुवा ।
3. ख-ग-ब-ङ-म—युधिष्ठिरोऽपि तज्ज्ञात्वा ।
4. ख-घ-ङ-म-मा—दुःखोचितश्चाहं ।
5. अ-क-म-मा—भद्रं ते ।

युद्धे सङ्कर्षणसमो बले नास्त्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ३५॥

एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयेद्घोरः क्षिप्रं वैवस्वतक्षयम् ॥ ३६॥

इच्छेयं च गदाहस्तं राजन् द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं [1]मनोरथः ॥ ३७॥

गदया निहतो ह्याजौ मया पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ३८॥

गदाप्रहाराभिहतो [2]हिमवानपि पर्वतः ।
सकृन्मया विदीर्येत गिरिश्शतसहस्रधा ॥ ३९॥

स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ४०॥

तत् ते वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन् विमना भव ॥ ४१॥

तस्मिन् मया हते क्षिप्रम् अर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ४२॥

भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपश्शल्यस् सिन्धुराजो जयद्रथः ॥ ४३॥

1. ग-ध-ङ-म-मा—वृकोदरः । 2. ख-घ-ङ-म—हिमवानिव ।

एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
[1]समेतास्तु क्षणेनैतान् नेष्यन्ति यमसादनम् ॥　　४४॥

[2]समग्रा पार्थिवी सेना पार्थिवानां धनञ्जयम् ।
कस्मादशक्ता निर्जेतुम् इति हेतुर्न विद्यते ॥　　४५॥

शरव्रातैस्तु भीष्मेण [3]शतशोऽथ सहस्रशः ।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ॥　　४६॥

पितामहोऽपि गाङ्गेयश् शन्तनो रथिनां वरः ।
ब्रह्मर्षिसदृशो जज्ञे देवैरपि सुदुस्सहः ॥　　४७॥

[4]न हन्ता विद्यते चापि राजन् भीष्मस्य कश्चन ।
पित्राऽप्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ॥　　४८॥

ब्रह्मर्षेश्च भरद्वाजाद् द्रोणो द्रोण्यामजायत ।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ॥　　४९॥

कृपश्चाचार्यमुख्योऽयं महर्षेर्गौतमादपि ।
शरस्तम्बोद्भवश्श्रीमान् अवध्य इति मे मतिः ॥　　५०॥

अयोनिजास्त्रयो ह्येते पिता माता च मातुलः ॥　　५१

---

1. ङ-म-मा—समस्तास्तु ।
2. ख-ग-घ-ङ-म-मा—समस्तां पाण्डवीं सेनां हरिकेतुं धनञ्जयम् ।
3. म-मा—शतशो विजिता दिशः । ग—दश व्यावृण्वता दिशः ।
घ-ङ—शतशो वितता दिशः ।
4. ख-घ-ङ-म-मा—नास्तीदमर्थम् ।

अश्वत्थामा महाराज स च शूरस्थितो मम ॥ ५१॥

सर्व एते महाराज देवकल्पा महारथाः ।
शक्रस्यापि व्यथां कुर्युस् संयुगे भरतर्षभ ॥ ५२॥

[1]नैतेषामर्जुनश्शक्त एकैकं प्रतिवीक्षितुम् ।
सहितास्तु नरव्याघ्रा हनिष्यन्ति धनञ्जयम् ॥ ५३॥

[2]भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम ।
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ॥ ५४॥

कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ।
ते शच्यर्थे महेन्द्रेण याचितस्स परन्तपः ॥ ५५॥

अमोघया महाराज शक्त्या परमभीमया ।
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः ॥ ५६॥

विजयो मे [3]ध्रुवं राजन् फलं पाणाविवाहितम् ।
[4]अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ॥ ५७॥

अह्ना ह्येकेन भीष्मोऽयं प्रयुतं हन्ति भारत ।
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ॥ ५८॥

---

1. ख-घ-ङ-म-मा—नास्त्ययं श्लोकः।
2. म—नास्त्ययं श्लोकः।
3. ग-ङ-म-मा—महाराज।
4. ख—इतः सार्धं श्लोकसप्तकं नास्ति

संशप्तकानां बृन्दानि क्षत्रियाणां परन्तप ।
अर्जुनं वयमस्मान् वा निहन्यात् कपिकेतनः ॥ ५९॥

तांश्चालमिति मन्यन्ते सव्यसाचिवधे धृताः ॥ ६०
पार्थिवास्स भवांस्तेभ्यो ह्यकस्माद्व्यथते कथम् ॥ ६०॥

भीमसेने च निहते कोऽन्यो युध्येत भारत ।
पाञ्चालेषु च भग्नेषु को नु स्थातुमिहार्हति ॥ ६१॥
परेषां तन्ममाचक्ष्व यदि वेत्थ परन्तप ॥ ६२
पञ्च ते भ्रातरस्सर्वे धृष्टद्युम्नोऽथ सात्यकिः ।
परेषां सप्त ये राजन् योधास्सारं बलं मतम् ॥ ६३
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ।
द्रौणिर्वैकर्तनः कर्णः [1]बाह्लिकश्च बृहद्रथः ॥ ६४
प्राग्ज्योतिषाधिपश्शल्य आवन्त्योऽथ जयद्रथः ।
दुश्शासनो दुर्मुखश्च दुस्सहश्च विशाम्पते ॥ ६५
श्रुतायुश्चित्रसेनश्च पुरुमित्रो [2]विविंशतिः ।
शलो भूरिश्रवाश्चैव विकर्णश्च तवात्मजः ॥ ६६
अक्षौहिण्योऽपि मे राजन् दशैका च समाश्रिताः ।
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात् पराजयः ॥ ६७
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।

---

1. ग-ब-म-मा—सोमदत्तोऽथ बाह्लिकः ।
2. ग-ङ-म-मा—विशाम्पते ।

परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ६८

गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणम् आत्मनश्च विशाम्पते ॥ ६९

एतत् सर्वं [1]समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ७०

वैशम्पायनः—
इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
विवित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः ॥ ७१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ५२ ॥ व्यासाभिगमनपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ७१ श्लोकाः]

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

सञ्जयेन पाण्डवभावं बुभुत्सुं दुर्योधनं प्रति तेषां युद्धोत्कण्ठाकथनपूर्वकं तद्रथाश्ववर्णनम् ॥ १ ॥

---

दुर्योधनः—
अक्षौहिणीस्सप्त लब्ध्वा राजभिस्सह सञ्जय ।
किंस्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ १

1. क—ममाज्ञाय । ख-घ-ङ—सर्वमविज्ञाय ।

सञ्जयः—

अतीव मुदितो राजन् युद्धप्रेप्सुर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ २

रथं तु दिव्यं कौन्तेयस् सर्वा विभ्राजयन् दिशः ।
मन्त्रं जिज्ञासमानस्सन् बीभत्सुस्समयोजयत् ॥ ३

तमपश्याम [1]सन्नद्धं मेघं विद्युद्युतं यथा ॥ ३॥
[2]समन्तात् समभिध्यायन् हृष्यमाणोऽभ्यभाषत ।

पूर्वरूपमिदं पश्य वयं जेष्याम सञ्जय ॥ ४॥

बीभत्सुर्मां यथोवाच तथाऽवैम्यहमप्युत ॥ ५

दुर्योधनः—

प्रशंसस्यभिनन्दंस्तान् पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः ॥ ६

सञ्जयः—

भौवनस्सह शक्रेण बहुचित्रं विशाम्पते ।
रूपाणि कल्पयामास त्वष्टा [3]धाता विशाम्पते ॥ ७

ध्वजे हि तस्मिन् रूपाणि चक्रुस्ते देवमायया ।
महाधनानि दिव्यानि महान्ति च लघूनि च ॥ ८

---

1. ख-ग-घ-म-मा—बीभत्सुं मेघं विद्युत्प्रभं यथा ।
2. ख-ग-ङ-म-मा—समन्तान् समभिध्याय।
   घ—समन्तात् समभिज्ञाय ।
3. ग-घ-ङ-म-मा—धाता सहाभिभो ।   ख—यत्र सहाभिभो !

[1]भीमसेनानुरोधाय हनूमान् मारुतात्मजः ।
आत्मप्रतिकृतिं तस्य ध्वज आरोपयिष्यति ॥ ९

सर्वा दिशो योजनमात्रमन्तरं
स तिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जेत् तरुभिस्संवृतोऽपि
तथा हि माया विहिता भौवनेन ॥ १०

यथाऽऽकाशे शक्रधनुः प्रकाशते
[2]न चैकवर्णं न च विद्म किं नु तत् ।
तथा ध्वजो विहितो भौवनेन
बह्वाकारं दृश्यते रूपमस्य ॥ ११

यथाऽग्निधूमो दिवमेति रुद्ध्वा
वर्णान् बिभ्रत् तैजसांश्चित्ररूपान् ।
तथा ध्वजो विहितो भौवनेन
न चेद्भारो भविता नोत बाधा ॥ १२

श्वेतास्तस्मिन् वातवेगास्सदश्वा
[3]दिव्या युक्ताश्चित्ररथेन दत्ताः ।
भुव्यन्तरिक्षे दिवि वा नरेन्द्र
येषां गतिर्हीयते नात्र सर्वा ॥ १३

---

1. ख-घ-ङ-म-मा—नास्त्ययं श्लोकः ।
2. ख-ग-ङ-म-मा-न चैकरूपं न च विद्म किञ्चन ।
घ—न चैव कर्णञ्च च विद्म कञ्चन ।?
3. ख-ग-ङ-मा—रथे । म—ध्वजे ।

शतं यत् तत् पूर्यते नित्यकालं
हतं हतं दत्तवरं पुरस्तात् ।
तथा राज्ञो [1]दन्तवर्णा बृहन्तो
रथे युक्ता भान्ति तद्वीर्यतुल्याः ॥ १४

ऋक्षप्रख्या भीमसेनस्य वाहा
[2]रथे वायोस्तुल्यवेगा बभूवुः ॥ १४॥

कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा
भ्रात्रा दत्ताः प्रीयता फल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा
मुदा युक्तास्सहदेवं वहन्ति ॥ १५॥

माद्रीपुत्रं नकुलं त्वाजमीढं
महेन्द्रदत्ता हरयो वाजिमुख्याः ।
समा वायोर्बलवन्तस्तरस्विनो
वहन्ति वीरं वृत्रवधे यथेन्द्रम् ॥ १६॥

तुल्याश्चैभिर्वयसा विक्रमेण
[3]महाजवाश्चित्ररूपास्सदश्वाः ।

---

1. ख-घ-ङ-म-मा – दत्तवरा ।
2. ख-ग-ङ-म-मा—रणे ।
3. ङ-म-मा—जवेन चैवाप्रतिरूपास्सदश्वाः ।

सौभद्रादीन् द्रौपदेयान् कुमारान्
वहन्त्यश्वा देवदत्ता बृहन्तः ॥ १७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि दशमोऽध्यायः ॥ १० ॥

[ अस्मिन्नध्याये १७॥ श्लोकाः ]

## ॥ षट्पञ्चाशोऽध्यायः ॥

धृतराष्ट्रपृष्टेन सञ्जयेन तं प्रति पाण्डवसहायानां राज्ञां नामनिर्देशपूर्वकं तैः कुरुसेनागतानां स्वस्ववध्यतया विभजनकथनम् ॥ १ ॥ दुर्योधनेन सञ्जयवचनश्रवणेन क्रोशन्तं धृतराष्ट्रमाक्षिप्य स्वपक्षीयाणां प्रतापप्रशंसनम् ॥ २ ॥ पुनस्सञ्जयेन धृष्टद्युम्नवचोवचनपूर्वकं युद्धनिषेधनम्॥३॥

धृतराष्ट्रः—

कांस्तत्र सञ्जयापश्यः प्रीत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥ १

सञ्जयः—

मुख्यमन्धकवृष्णीनाम् अपश्यं कृष्णमागतम् ।
चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥ २

पृथगक्षौहिणीभ्यां तु पाण्डवानभिसंश्रितौ ।
महारथौ समाख्यातावुभौ पुरुषमानिनौ ॥ ३

अक्षौहिण्याऽथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित्प्रमुखैर्वीरैर् धृष्टद्युम्नपुरोगमैः ॥　　४

द्रुपदो वर्धयन् मानं शिखण्डिपरिपालितः ।
उपायात् सर्वसैन्यानां प्रतिच्छाद्य महीं तदा ॥　　५

विराटस्सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
सूर्यदत्तादिभिर्वीरैर् मदिराश्वपुरोगमैः ॥　　६

सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ।
अक्षौहिण्यैव सैन्यानां वृतः पार्थं समाश्रितः ॥　　७

जारासन्धिर्मागधश्च धृष्टकेतुश्च चेदिराट् ।
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥　　८

केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः ।
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ॥　　९

एतानेतावतस्तत्र तानपश्यं समागतान् ।
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य [1]वाहिनीम् ॥　　१०

यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
[2]स तत्र सेनाप्रमुखे धृष्टद्युम्नो महारथः ॥　　११

भीष्मश्शान्तनवो राजन् भागः कॢप्तश्शिखण्डिनः ।

---

1. ङ-म-मा—सैनिकान् ।
2. ग-घ-ङ-म—स तस्य प्रमुखे नेता । मा—सैन्यस्य प्रमुखे नेता ।

तं विराटोऽनुसंयाता सार्धं मत्स्यैः प्रहारिभिः ॥ १२

ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली ।
तौ तु तत्राब्रुवन् केचिद् विषमौ नो मताविति ॥ १३

दुर्योधनस्सहसुतस् सार्धं भ्रातृशतेन च ।
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ १४

अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः ।
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ १५

अशक्याश्चैव ये केचित् पृथिव्यां शूरमानिनः ।
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः ॥ १६

महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
केकयानेव भागेन कृत्वा योत्स्यन्ति [1]संयुगे ॥ १७

तेषामेव कृतो भागो मालवास्साल्व[2]कास्तथा ॥ १७॥

त्रिगर्तानां च वै मुख्यौ यौ तौ संशप्तकाविति ॥ १८

दुर्योधनसुतास्सर्वे तथा दुश्शासनस्य च ।
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः ॥ १९

द्रौपदेया महेष्वासास् सुवर्णविकृतध्वजाः ।
धृष्टद्युम्नमुखा द्रोणम् [3]अभियास्यन्ति भारत ॥ २०

---

1. ख-ग-घ-ङ-म-मा—सङ्गताः ।
2. ग—कोसलाः । घ-ङ-म-मा—केकयाः ।
3. ग-घ-ङ-म-मा—अभ्यायान्ति महारथाः ।

चेकितानस्सोमदत्तं द्वैरथे योद्धुमिच्छति ।
भोजं तु कृतवर्माणं युयुधानो युयुत्सति ॥ २१

सहदेवस्तु माद्रेयश्शूरस्सङ्क्रथनो युधि ।
स्वमंशं कल्पयामास स्यालं ते सुबलात्मजम् ॥ २२

उलूकं चैव कैतव्यं ये च सारस्वता गणाः ।
नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ २३

ये चान्ये पार्थिवा राजन् प्रत्युद्यास्यन्ति सङ्गरे ।
[1]समांशानेव तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ २४

एवमेषामनीकानि प्रविभक्तानि भागशः ।
यत् ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ २५

धृतराष्ट्रः—

न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः ।
येषां युद्धं बलवता भीमेन रणमूर्धनि ॥ २६

राजानः पार्थिवास्सर्वे [2]प्रोक्षिताः कालधर्मणा ।
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ २७

विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः ।
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ २८

सर्वे ह्यतिरथाश्शूराः कीर्तिमन्तः प्रतापिनः ।

---

1. ग—न्यायेन तेन तांश्चापि । ङ-म-मा—समाह्वानेन तांश्चापि ।
2. ख-घ-ङ—प्रेषिताः ।

सूर्यपावकयोस्तुल्यास् तेजसा समितिञ्जयाः ॥ २९

येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः ।
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ॥ ३०

नकुलस्सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
[1]सात्यकिर्द्रुपदश्चैव धृष्टद्युम्नस्य चात्मजाः ॥ ३१

उत्तमौजाश्च पाञ्चालो युधामन्युश्च दुर्जयः ॥ ३१॥

शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ।
काशयश्चेदयश्चैव मत्स्यास्सर्वे च सृञ्जयाः ॥ ३२॥

विराटपुत्रो बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ॥ ३३
तेषामिन्द्रोऽप्यकामानां न हरेत् पृथिवीमिमाम् ।

वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ॥ ३४

तान् सर्वगुणसम्पन्नान् अमनुष्यप्रतापिनः ।
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय ॥ ३५

दुर्योधनः—

[2]उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ ।
अथ कस्मात् पाण्डवानाम् एकतो मन्यसे जयम् ॥ ३६

पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम् ।
जयद्रथं सोमदत्तम् अश्वत्थामानमेव च ॥ ३७

1. अ-क—नास्तीदमधर्मम् । 2. ख-घ-ङ-म-मा—उभावप्येक ।

सुतेजसो महेष्वासान् इन्द्रोऽपि सहितोऽमरैः ।
अशक्तस्समरे जेतुं किं पुनस्तात पाण्डवाः ॥ ३८

सर्वे च पृथिवीपाला मदर्थे तात पाण्डवान् ।
आर्या[1] श्शस्त्रभृतश्शूरास् समर्थाः प्रतिबाधितुम् ॥ ३९

न मामकान् पाण्डवास्ते समर्थाः प्रतिवीक्षितुम् ।
पराक्रान्तो ह्यहं पाण्डून् सपुत्रान् योद्धुमाहवे ॥ ४०

मत्प्रियं पार्थिवास्सर्वे ये चिकीर्षन्ति भारत ।
ते तानावारयिष्यन्ति ऐणेयानिव [2]दन्तिनः ॥ ४१

महता रथवंशेन शरजालैश्च मामकैः ।
अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैस्सह ॥ ४२

धृतराष्ट्रः—

उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय ।
न हि शक्तो युधा जेतुं धर्मराजं युधिष्ठिरम् ॥ ४३

जानाति हि यथा भीष्मः पाण्डवानां यशस्विनाम् ।
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ॥ ४४

यतो नारोचयदयं विग्रहं तैर्महात्मभिः ।
किं तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितम् ॥ ४५

कस्तांस्तरस्विनो भूयस् सन्दीपयति पाण्डवान् ।

---

1. ग-घ-ङ-म-मा—धृतिमतश्शूरान् अग्निकल्पान् प्रबाधितुम् ।
2. अ-क-ख-म-मा—तन्तुना ।

अर्चिष्मतो महेष्वासान् हविषा पावकानिव ॥ ४६

सञ्जयः—

धृष्टद्युम्नस्सदैवैतान् सन्दीपयति भारत ॥ ४६॥

धृष्टद्युम्नः—

युद्ध्यध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ॥ ४७

ये केचित् पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः ।

युद्धे समागमिष्यन्ति तुमुले [1]शस्त्रसङ्कुले ॥ ४८

तान् सर्वानाहवे क्रुद्धान सानुबन्धान् समागतान् ।

अहमेकस्समादास्ये तिमिर्मत्स्यानिवोदकात् ॥ ४९

भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम् ।

एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥ ५०

सञ्जयः—

तथा ब्रुवन्तं धर्मात्मा प्राह राजा युधिष्ठिरः ॥ ५०॥

युधिष्ठिरः—

तव धैर्यं च वीर्यं च पाञ्चालाः पाण्डवैस्सह ।

सर्वे समधिरूढास्स्म सङ्ग्रामान्नस्समुद्धर ॥ ५१॥

जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ।

समर्थमेकं पर्याप्तं कौरवाणां [2]विनिग्रहे ॥ ५२॥

[3]पुरस्तादुपयातानां कौरवाणां युयुत्सताम् ॥ ५३

---

1. घ-ङ—कचसङ्ग्रहे। मा—सकचग्रहे। ग—च कचग्रहे। म—कवचे तुमुले ग्रहे। 2. ख-घ-ङ-म-मा—युयुत्सताम्।
3. ख-घ-ङ-म-मा—नास्तीदमर्धम्।

भवता यद्विधातव्यं तन्नश्श्रेयः परन्तप ।
सङ्ग्रामादपयातानां भग्नानां शरणैषिणाम् ॥ ५४

पौरुषं दर्शयन् शूरो यस्तिष्ठेदग्रतः पुमान् ।
क्रीणीयात् तं सहस्रेण इति नीतिमतां मतम् ॥ ५५

स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ ।
भयार्तानां परित्राता संयुगेषु न संशयः ॥ ५६

सञ्जयः—

एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे ।
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसम् ॥ ५७

सर्वाञ्जनपदान् सूत योधा दुर्योधनस्य ये ।
सबाह्लिकान् कुरून् ब्रूयाः प्रातिपेयाञ्छरद्वतः ॥ ५८

सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ।
दुश्शासनं विकर्णं च तथा दुर्योधनं नृपम् ॥ ५९
[1]भीष्मं च ब्रूहि गत्वा त्वम् आशु गच्छ च मा चिरम् ॥५९॥

युधिष्ठिरो साधुनैवाभ्युपैति
मा वोऽवधीदर्जुनो देवगुप्तः ।
वनं दग्धं देवराजस्य तूर्णं
याचध्वं वै पाण्डवं लोकवीरम् ॥ ६०॥

---

1. ङ—नास्तीदमर्धम्

नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन ।
यथाविधस्सव्यसाची पाण्डव[1]स्सत्यविक्रमः ॥ ६१॥

देवैर्हि सम्भृतो दिव्यो रथो गाण्डीवधन्वनः ।
न स जेयो मनुष्येण मा [2]स्म कृद्धं मनो युधि ॥ ६२॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये ६२॥ श्लोकाः ]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

धृतराष्ट्रेण युद्धस्य भीष्माद्यनभिमतत्वाभिधाने दुर्योधनेन भीष्माद्यनपेक्षणेन कर्णदुश्शासनसहायेन स्वेनैव पाण्डवहननप्रतिज्ञा ॥ १ ॥ पुनर्धृतराष्ट्रेण दुर्योधनगर्हणम् ॥ २ ॥

---

धृतराष्ट्रः—

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ १

दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिन्दम ॥ २

---

1. ख-घ-ङ-म-मा—श्शास्त्रवित्तमः ।
2. ख—मा कुरुध्वं मनो युधि ।
ग—ऽस्य युद्धे मनः कृथाः । घ-ङ—स्म युद्धे मनः कृथाः ।

अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ॥ ३

एतद्धि कुरवस्सर्वे मन्यन्ते धर्मसंहितम् ।
यत् त्वं प्रशान्तिं [1]मन्येथाः पाण्डुपुत्रैर्महात्मभिः ॥ ४

अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
[2]जात एव तवाभावस् त्वं तु मोहान्न बुद्ध्यसे ॥ ५

न ह्यहं योद्धुमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ॥ ६
न सोमदत्तो न कृपो न शल्यो युद्धमिच्छति ॥ ६॥
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥ ७
तत् त्वं प्रशान्तिमिच्छेथाः पाण्डुपुत्रैर्महात्मभिः ॥ ७॥
येषु सम्प्रति तिष्ठेयुः कुरवः पीडिताः परैः ।
ते युद्धं नाभिनन्दन्ति तत् तुभ्यं तात रोचताम् ॥ ८॥
न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुश्शासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ ९॥

दुर्योधनः—

नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये ।

---

1. ख-ग-घ-ङ-म-मा—इच्छेथाः ।
2. ख—जात एव न वा स्वावस्त्वं तु मोहान्न बुद्ध्यसे ।
ग—शम एव ततश्श्रेयस् त्वंतु मोहान्न बुध्यसे ।
घ-ङ-म-मा—जात एव तव स्वावस्त्वं मोहान्नावबुध्यसे ।

न भीष्मे न च काम्भोजे न कृपे न च बाह्लिके ॥ १०॥

[1]सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वये ॥ ११॥

अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥ १२॥

रथो वेदिस्स्रुवः खड्गो गदा स्रुक् [2]कवचं सदः ।
चातुर्होत्रं च धुर्यो मे शरा दर्भा हविर्यशः ॥ १३॥

आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य च समेष्यावो हतामित्रौ श्रिया वृतौ ॥ १४॥

अहं च तात कर्णश्च भ्राता दुश्शासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान् समरे त्रयः ॥ १५॥

अहं हि पाण्डवान् हत्वा प्रशास्ता पृथिवीमिमाम् ।
[3]मां हत्वा पाण्डुपुत्रा वा भोक्तारः पृथिवीमिमाम् ॥ १६॥

त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पाण्डवैस्सार्धं [4]वसेयमहमच्युत ॥ १७॥

---

1. ख—नास्तीदमर्धम्।
2. ख-ग-घ-ङ-म-मा—कवचोऽजिनम्।
3. ख—नास्तीदमर्धम्।
4. ख-ग-घ-म-मा—भुञ्जेयं पृथिवीमिमाम्।
   ख-घ—भुञ्जीय ङ—भुञ्जीयां पृथिवीमिमाम्।

यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरि[1]त्याज्यं भूमेर्नः पाण्डवान् प्रति ॥ १८॥

धृतराष्ट्रः—

सर्वान् वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ १९॥

[2]रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान् वरान् हनिष्यन्ति समेतान् युधि पाण्डवाः ॥ २०॥

[3]प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना । २१॥

सम्पूर्णं पूरयन् भूयो बलं पार्थस्य माधवः ।
शैनेयस्समरे स्थाता बीजवत् प्रवपन् छरान् ॥ २२॥

सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयाः ॥ २३॥

[4]यदा द्रक्ष्यसि भीमेन कुञ्जरान् विनिपातितान् ।
[5]विशीर्णदन्तान् विकुष्टान् भिन्नकुम्भान् सशोणितान् ॥ २४॥

---

1. अ-क-ख-घ—त्याज्या भूमिर्नः ।
2. ख-ग-घ-ङ-म-मा—मृगाणामिव यूथेषु । क—कुरूणामिव ।
3. ग-घ-ङ-म-मा—प्रतीपमेति मे सेना युयुधानेन भारत ।
   ख—नास्त्ययं श्लोकः ।
4. ख—इतः श्लोकद्वयं नास्ति म—इतः श्लोकत्रयं न दृश्यते ।
5. ग-घ-ङ-मा—विशीर्णगात्रान् महतो ।

तानभिप्रेक्ष्य सङ्ग्रामे विशीर्णानिव पर्वतान् ।
भीतो भीमस्य संस्पर्शात् स्मर्तासि वचनस्य मे ॥ २५॥

[1]निर्दग्धं भीमसेनेन सैन्यं हतरथद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनं मम ॥ २६॥

महद्वो भयमागामि न चेच्छामीह पाण्डवैः ।
गदया भीमसेनेन हताऽशममुपैष्यथ ॥ २७॥

महावनमिव च्छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां भीमेन तदा स्मर्तासि मे वचः ॥ २८॥

वैशम्पायनः—

एतावदुक्त्वा राजा तु सर्वांस्तान् पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम्* ॥ २९॥

धृतराष्ट्रः—

[2]*ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ ३०॥

---

1. घ-म—यदा द्रक्ष्यसि भीमेन सैन्यं हतरथद्विपम्। [पाठान्तरम्]
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते।

2. अ-क-ग-ङ-म-मा—एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रस्सुयोधनम्।
पुनरेव महाभागं सञ्जयं पर्यपृच्छत।
[अधिकः पाठः अनन्वितोऽनुपयुक्तश्च।]

* अ-क-म-मा—कोशेषु इत आरभ्य अध्यायान्तपर्यन्तस्थितश्लोकाः
एकषष्टितमाध्यायानन्तरं पृथगध्यायतया सन्ति।
ख-ग-घ-ङ—कोशेषु तु अत्रैव सन्ति।

सञ्जयः—

वासुदेववचश्श्रुत्वा कुन्तीपुत्रो धनञ्जयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥　　३१॥

अर्जुनः—

पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ॥　　३२॥

द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुश्शासनं शलं चैव पुरुमित्रं विविंशतिम् ॥　　३३॥

[1]विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि पौरवम् ॥　　३४॥

सैन्धवं दुस्सहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसन्धं च पौरवम् ॥　　३५॥

ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
समानीता धार्तराष्ट्रेण सूत ॥　　३६॥

यथान्यायं कुशलं वन्दनं च
समागता मद्वचनेन वाच्याः ॥　　३७

1. अ-क—अर्धत्रयं नास्ति

[1]इदं ब्रूयास्सञ्जय राजमध्ये
सुयोधनं पापकृतां प्रधानम् ।
अमर्षणं दुर्मतिं राजपुत्रं
पापात्मानं धार्तराष्ट्रं सुलुब्धम् ॥ ३८

[2]सर्वं ममैतद्वचनं समग्रं
सहामात्यं सञ्जय श्रावयेथाः ॥ ३८॥

सञ्जयः—
एवं परिष्वज्य धनञ्जयो मां
ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
पार्थो धीमाँल्लोहितान्तायताक्षः ॥ ३९॥

अर्जुनः—
यथाश्रुतं ते वदतो महात्मनो
यदुप्रवीरस्य वचस्समाहितम् ।
तथैव वाच्यं भवताऽपि मद्वचस्
समागतेषु क्षितिपेषु सर्वशः ॥ ४०॥

शराग्निधूमे रथनेमिनादिते
धनुस्स्रुवेणास्त्रबलापहारिणा ।
यथा न होमः क्रियते महामृधे
तथा समेत्य प्रयतध्वमादृताः ॥ ४१॥

1. ङ—श्लोकोऽयं नास्ति ।
2. ख—नास्तीदमर्धम् ।
यद्बलन्तु समाश्रित्य राज्यं नो दातुमिच्छति ।
तद्बलं नाशयाम्यद्य तव युद्धे सुदुर्मते ॥ [अधिकः पाठः]

न चेत् प्रयच्छध्वममित्रघातिनो
　युधिष्ठिरस्यांशमभीप्सितं स्वकम् ।
नयामि वस्साश्वपदातिकुञ्जरान्
　दिशं पितॄणामशिवां शितैश्शरैः ॥　४२॥

सञ्जयः—

ततोऽहमामन्त्र्य तदा धनञ्जयं
　चतुर्भुजं चैव नमस्य सत्वरः ।
जवेन सम्प्राप्त इहामरद्युते
　तवान्तिकं प्रापयितुं वचो महत् ॥　४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ५३ ॥ व्यासाभिगमनपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

## ॥ अष्टपञ्चाशोऽध्यायः ॥

धृतराष्ट्रेण दुर्योधनं प्रति स्वपरपक्षयोः बलाबलविमर्शनेन पाण्डवेषु पुत्रप्रेम्णा धर्मादिदेवानां साहाय्यकरणाभिधानपूर्वकं स्वस्य शमाभिरोचनवचनम् ॥ १ ॥ दुर्योधनेन सहेतुकं पाण्डवानां देवैस्साहाय्यकरणपक्षप्रतिक्षेपः ॥२॥ तथा जलस्तम्भनादि स्वसामर्थ्याभिधानपूर्वकं स्वेन पाण्डवपराजयकरणभिधानम् ॥ ३ ॥

वैशम्पायनः—

सञ्जयस्य वचश्श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः ।
ततस्सङ्ख्यातुमारेभे तद्वचो गुणदोषतः ॥　१

[1]प्रसङ्ख्याय च सौक्ष्म्येण गुणदोषान् विचक्षणः ।
यथावन्मतितत्त्वेन जयकामस्सुतान् प्रति ॥ २

बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान् ।
यदा तु मेने भूयिष्ठं तद्वचो गुणदोषतः ॥ ३

[2]पुनरेव कुरूणां च पाण्डवानां च बुद्धिमान् ।
शक्तिं सङ्ख्यातुमारेभे तदा वै मनुजाधिपः ॥ ४

देवमानुषयोश्शक्त्या तेजसा चैव पाण्डवान् ।
कुरून् शक्त्याऽल्पतरया दुर्योधनमथाब्रवीत् ॥ ५

धृतराष्ट्रः—
दुर्योधनेयं चिन्ता मे शश्वन्न ह्युपशाम्यति ॥ ५॥

ईदृशेऽभिनिविष्टस्य पृथिवीक्षयकारके ।
अधर्म्ये वाऽयशस्ये वा कार्ये महति दारुणे ॥ ६॥

पाण्डवैर्विग्रहस्तात सर्वथा मे न रोचते ॥ ७

सत्यं ह्येतदहं मन्ये प्रत्यक्षं [3]नानुमानतः ।
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ॥ ८

प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ।
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ॥ ९

इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत् प्रियम् ॥ ९॥

---

1. अ-मा—श्लोकद्वयं नास्ति 2. ख—नास्त्ययं श्लोकः।
3. ख-ग-घ-ङ-म-मा—तव मानद ।

अग्निस्साचिव्यकर्ता स्यात् खाण्डवे तत् कृतं स्मरन् ।
अर्जुनस्यापि भीमेऽस्मिन् कुरु[1]पाण्डुसमागमे ॥ १०॥

[2]जातिगृद्ध्याऽभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयस्समेष्यन्ति समाहूता दिवौकसः ॥ ११॥

भीष्मद्रोणकृपादीनां भयादशनिसन्निभम् ।
रिरक्षिषन्तस्संरम्भं गमिष्यन्तीति मे मतिः ॥ १२॥

तद्देवसहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ १३॥

दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।
वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ १४॥

[3]वानरश्च ध्वजे दिव्यो [4]निस्सङ्गो धूमवद्गतिः ।
रथस्य चतुरन्तायां यस्य नास्ति समः क्षितौ ॥ १५॥

[5]महामेघनिभश्चापि निर्घोषश्श्रूयते जनैः ।
महाशनिसमश्शब्दश् शात्रवाणां भयङ्करः ॥ १६॥

यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।

---

1. ख-ग-घ-ङ—पाण्डवविग्रहे ।　　म-मा—पाण्डवसङ्गमे ।
2. ख—नास्तीदमर्धम् ।
3. ग-घ-ङ-म-मा—रथश्च यस्य वै दिव्यो महामेघौघनिस्स्वनः ।
　ख—रथस्य यस्य वै दिव्यो निस्सङ्गगतिराहवे ।　　[अधिकः पाठः]
4. ख-ग-घ-ङ-म-मा—निस्सङ्गगतिराहवे ।
5. ख-घ-ङ-म-मा—नास्तीदमर्धम् ।

देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ १७॥

[1]शतानि पञ्च चैवेषून् यो गृह्णन्नेव दृश्यते ।
निमेषान्तरमात्रेण मुञ्चन् दूरं च पातयन् ॥ १८॥

यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ १९॥

युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिन्दमम् ॥ २०॥

क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ॥ २१

सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् ।
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्र[2]रक्षितम् ॥ २२

निघ्नन्तमिव पश्यामि विमर्देऽस्मिन् महामृधे ॥ २२॥

इत्येवं चिन्तयन् कृत्स्नम् अहोरात्राणि भारत ।
अनिद्रो निस्सुखश्चास्मि कुरूणां शमचिन्तया ॥ २३॥

[3]क्षयोदयोऽयं सुमहान् कुरूणां प्रत्युपस्थितः ।
अस्य चेत् कलहस्यान्तश् शमादन्यो न विद्यते ॥ २४॥

शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्छक्तिमत्तरान्* ॥ २५॥

1. ख—नास्त्ययं श्लोकः। 2. अ-क—विक्रमम् ॥
3. ख—नास्तीदमर्धम्। * सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

वैशम्पायनः—

पितुरेतद्वचश्श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ २६॥

दुर्योधनः—

अशक्या देवसचिवाः पार्थास्स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ २७॥

अकामद्वेषसंयोगाल्लोभद्रोहाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ २८॥

इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत् पुरा ॥ २९॥

नैव मानुषवद् देवाः प्रवर्तन्ते कदाचन ।
कामात् क्रोधात् तथा लोभाद् द्वेषाच्च भरतर्षभ ॥ ३०॥

यदा ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात् प्रवर्तेरन् न पार्था दुःखमाप्नुयुः ॥ ३१॥

तस्मान्न भवता चिन्ता कार्यैषा स्यात् कथञ्चन ।
देवाश्चोपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ३२॥

अथ चेत् कामसंयोगाद् द्वेषो लोभश्च लक्ष्यते ।
देवेषु [1]दैवप्रामाण्यान्नैषां तद्विक्रमिष्यति ॥ ३३॥

1. म—देवप्रामाण्यं नैव। घ-ङ—वेदप्रामाण्यं।
ख—देवेष्वपि च यत्कृत्यं नैव तद्विक्रमिष्यति।

मयाऽभिमन्त्रितश्शश्वज् जातवेदाः प्रशाम्यति ।
दिधक्षुस्सकलाँल्लोकान् परिक्षिप्य समन्ततः ॥ ३४॥

यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममा[1]प्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ ३५॥

विदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात् ॥ ३६॥

चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नं भयं घोरं महास्वनम् ॥ ३७॥

अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ ३८॥

स्तम्भितास्त्वप्सु गच्छन्ति मया रथपदातयः ॥ ३९
देवासुराणां भावानाम् अहमेकः प्रवर्तिता ॥ ३९॥

अक्षौहिणीभिर्यान् देशान् यामि कार्येण केनचित् ।
तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ ४०॥

[2]भयानि विषये राजन् व्याघ्रादिभ्यो न सन्ति मे ।
[3]मन्त्रगुप्तानि भूतानि न हिंसन्ति भयङ्कराः ॥ ४१॥

निकामवर्षी पर्जन्यो राजन् विषयवासिनाम् ।

---

1. ख-घ-ङ-म-मा—प्यनुमतं। 2. ख—इतः सार्धं श्लोकाष्टकं नास्ति
3. ग-घ-ङ-म-मा—मत्तस्सुप्तानि।

[1]सस्यानां सर्वजन्तूनाम् ईतयश्च न सन्ति मे ॥ ४२॥

अश्विनावथ वाय्वग्निमरुद्भिस्सह वृत्रहा ।
धर्मश्चैव मया द्विष्टान् नोत्सहन्तेऽभिरक्षितुम् ॥ ४३॥

यदि ह्येते समर्थास्स्युर् मद्द्विषस्त्रातुमञ्जसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥ ४४॥

नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ ४५॥

यदभिध्याम्यहं शश्वच् छुभं वा यदि वाऽशुभम् ।
तद्भवेद्विधिपूर्वं मे मित्रेष्वरिपु चोभयोः ॥ ४६॥

भविष्यतीदमिति वा यद्ब्रवीमि परन्तप ।
नान्यथा भूतपूर्वं च सत्यवागिति मां विदुः ॥ ४७॥

लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ ४८॥

न ह्यहं श्लाघनो राजन् भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद् यदात्मानं प्रशंसति ॥ ४९॥

पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान् केकयैस्सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान् मया ॥ ५०॥

सरितस्सागरं प्राप्य यथा नश्यन्ति सर्वशः ।

---

1. अ-क-म-मा—धर्मिष्ठाश्च प्रजास्सर्वा ।

तथैव ते [1]विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ ५१॥
परा बुद्धिः परं तेजो वीर्यं च परमं मम ।
परा विद्या परो योगो मम तेभ्यो विशाम्पते ॥ ५२॥
पितामहश्च द्रोणश्च कृपश्शल्यश्शलस्तथा ।
अस्त्रेषु यत् प्रजानन्ति सर्वं तन्मयि विद्यते ॥ ५३॥

वैशम्पायनः—

[2]इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
ज्ञातुं युयुत्सोः कार्याणि प्राप्तकालमरिन्दमः ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

॥ ५२ ॥ व्यासाभिगमनपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये ५४॥ श्लोकाः]

---

## ॥ एकोनषष्टितमोऽध्यायः ॥

कर्णेन धृतराष्ट्रमनादृत्य पाण्डवहननप्रतिज्ञानम् ॥ १ ॥ तथा भीष्माधिक्षिप्तेन तेन युद्धे भीष्मशमनावधि शस्त्रन्यासं प्रतिज्ञाय स्वभवनगमनम् ॥ २ ॥ भीष्मेण प्रत्यहं अयुतयोधवधप्रतिज्ञा ॥ ३ ॥

---

वैशम्पायनः—

तथैव पृच्छन्तमतीव पार्थं
वैचित्रवीर्यं तमचिन्तयित्वा ।

---

1. ग-ङ-म-मा—नशिष्यन्ति । घ—नशिष्यन्ते ।
2. ख—नास्त्ययं श्लोकः ।

उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन् संसदि कौरवाणाम् ॥ १

कर्णः—

मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामात् कृतं ब्रह्मपुरं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्तस्
ते नान्तकाले प्रतिभास्यतीति ॥ २

महापराधे ह्यपि यन्न तेन
महर्षिणाऽहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यतितिग्मतेजास्
ससागरामप्यवनिं महर्षिः ॥ ३

प्रसादितं ह्यस्य मनो मयाऽभूच्
छुश्रूषया स्वेन च पौरुषेण ।
तदस्ति चास्त्रं [1]मम सावशेषं
तस्मात् समर्थोऽस्मि ममैष भारः ॥ ४

निमेषमात्रात् तमृषिप्रसादम्
अवाप्य पाञ्चालकरूशमत्स्यान् ।
निहत्य पार्थान् सह पुत्रपौत्रैर्
लोकानहं शस्त्रजितान् प्रपत्स्ये ॥ ५

1. ग-घ-ङ—प्रददावशेषं ।

पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
[1]ऋषिप्रसादेन बलेन गत्वा
पार्थान् हनिष्यामि ममैष भारः ॥ ६

वैशम्पायनः—
एवं ब्रुवन्तं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने
हते हतास्स्युर्धृतराष्ट्रपुत्राः ॥ ७

यत् खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनञ्जयेन ।
श्रुत्वैव तत् कर्म नियन्तुमात्मा
[2]युक्तस्त्वया वै सहबान्धवेन ॥ ८

यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान् महेन्द्रः ।
भस्मीकृतां तां [3]समरे विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ९

यस्ते शरस्सर्पमुखो विभाति
सदाऽग्र्यमाल्यैर्महितः [4]प्रयत्नात् ।

1. अ-क-ख-ग-घ-म-मा—यथा प्रधानेन। 2. ङ-म-मा—शक्य
3. ख-ग-ङ-म-मा—पतितां। 4. ख-ङ-म-मा—कुले ते।

स पाण्डुपुत्राभिहतश्शरौघैस्
सह त्वया यास्यति कर्ण नाशम् ॥ १०

बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च गरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ११

कर्णः—

असंशयं वृष्णिपतिर्यथोक्तस्
तथा च भूयांश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किञ्चित्
पितामहस्तस्य फलं शृणोतु ॥ १२

न्यस्यामि शस्त्राणि न जातु सङ्ख्ये
पितामहो द्रक्ष्यति मां [1]सहायम् ।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३

वैशम्पायनः—

इत्येवमुक्त्वा स महाधनुष्मान्
हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राजन्
मध्ये कुरूणां प्रहसन्नुवाच ॥ १४

1. अ-क-ख-ग-ब—सभायाम् ।

भीष्मः—

सत्यप्रतिज्ञः किल सूतपुत्रस्
तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यतु भीमसेनात् ॥ १५

आवन्त्यकालिङ्गजयद्रथेषु
चेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ १६

यदैव रामे भगवत्यनिन्द्ये
ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ १७

वैशम्पायनः—

तथोक्तवाक्ये नृपतीन्द्र भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धिर्
दुर्योधनश्शान्तनवं बभाषे ॥ १८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

॥ ५३ ॥ व्यासाभिगमनपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये १८ श्लोकाः ]

1.
2.

## ॥ षष्टितमोऽध्यायः ॥

दुर्योधनेन भीष्माभिमतपाण्डवजयपक्षप्रतिक्षेपः ॥ १॥ तथा भीष्मादिनैरपेक्ष्येण कर्णदुश्शासनसङ्गतेन आत्मनैव पाण्डवनिधनप्रतिज्ञा ॥ २ ॥ विदुरेण दमप्रशंसनम् ॥ ३ ॥

---

दुर्योधनः—

सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १

[1]वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमैः ।
समेन वयसा चैव प्रज्ञया च श्रुतेन च ॥ २

अस्त्रेषु रथचर्यासु शीघ्रत्वे कौशले तथा ।
सर्वे स्म समजातीयास् सर्वे स्म समयोनयः ॥ ३

पितामह विजानीषे पार्थेषु विजयं कथम् ॥ ३॥

नाहं भवति न द्रोणे न कृपे न च बाह्लिके ।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥ ४॥

अहं वैकर्तनः कर्णो भ्राता दुश्शासनश्च मे ।
पाण्डवान् समरे पञ्च हनिष्याम[2]श्शितैश्शरैः ॥ ५॥

---

1. ख-घ-ङ-म-मा—इतः सार्धः श्लोको नास्ति
2. ख-ग-घ-ङ-म-मा—स्ससोमकान् ।

ततो राजन् महायज्ञैर् विविधैर्भूरिदक्षिणैः ।
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ॥ ६॥

[1]यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ।
अनरित्रानिव जले बाहुभिर्मामका रणे ॥ ७॥

पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान् ।
तदा दर्पं विमोक्ष्यन्ति पाण्डवास्स च केशवः ॥ ८॥

सुखान्यवाप्य सहिताः कृत्वा कर्म सुदुष्करम् ।
विस्रब्धास्तु भविष्यामः प्राप्ते काले गतज्वराः ॥ ९॥

वैशम्पायनः—

अथाब्रवीन्महाराजो धृतराष्ट्रस्सुदुर्मनाः ।
विदुरं विदुषां श्रेष्ठं सर्वपार्थिवसन्निधौ ॥ १०॥

धृतराष्ट्रः—

मोहितो मृत्युपाशेन कालस्य वशमागतः ।
तात कर्णेन सहितः पुत्रो दुर्योधनो मम ॥ ११॥

विदुरः—

[2]इह निश्श्रेयसं प्राहुर् वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मस्सनातनः ॥ १२॥

तस्य दानं क्षमा सिद्धिर् यथावदुपपद्यते ॥ १३

---

1. ख-घ-ङ-म-मा—इतः श्लोकद्वयं नास्ति।
2 ख-ग-घ-ङ-म-मा—इत आरभ्य षोडश श्लोका न सन्ति।

दमो दानं तपो ज्ञानम् अधीतं चानुवर्तते ॥ १३॥

दमस्तेजो वर्धयति पवित्रं दम उत्तमम् ।
विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥ १४॥

क्रव्याद्भ्य इव भूतानाम् अदान्तेभ्यस्सदा भयम् ।
तेषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयम्भुवा ॥ १५॥

आश्रमेषु चतुर्ष्वाहुर् दममेवोत्तमं व्रतम् ।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ॥ १६॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ॥ १७॥

अकार्पण्यमसंरम्भस् सन्तोषश्श्रद्दधानता ।
[1]एतानि यस्य राजेन्द्र स दान्तः पुरुषस्स्मृतः ॥ १८॥

कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते ॥ १९॥

अजिह्ममशठं शुद्धम् एतद्दान्तस्य लक्षणम् ॥ २०

अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तकः ।
समुद्रकल्पः पुरुषस् स दान्तः परिकीर्तितः ॥ २१

सुवृत्तश्शीलसम्पन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्येह लोके सम्मानं स्वर्गतिं प्रेत्य गच्छति॥ २२

1. ग—कोशएव इदमर्धं वर्तते

अभयं यस्य भूतेभ्यस् सर्वेषामभयं यतः ।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ॥ २३

सर्वभूतहितो मैत्रस् तस्मान्नोद्विजते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ॥ २४

कर्मणाऽऽचरितं पूर्वं सद्भिराचरितं च यत् ।
तदेवास्थाय मोदन्ते दान्ताश्शमपरायणाः ॥ २५

नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ॥ २६

शकुनीनामिवाकाशे पदं नैवोपलभ्यते ।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते ॥ २७

उत्सृज्य वा गृहान् यस्तु मोक्षमेवाभिमन्यते ।
लोकास्तेजोमयास्तस्य कल्प्यन्ते शाश्वता दिवि* ॥ २८

कश्चिच्छाकुनिको राजन् पूर्वमासीदिति श्रुतिः ।
शकुनीनां वधार्थाय पाशान् भूमावयोजयत् ॥ २९

तस्मिंस्तौ शकुनौ बद्धौ युगपत् [1]सहचारिणौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ३०

---

*अ-क—कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. ख-ग-घ-ङ-म-मा—समपौरुषा ।

तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ३१

तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद् ददर्शाथ कृताह्निकः ॥ ३२

तावन्तरिक्षगौ शीघ्रम् अनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ३३

मुनिः—

विचित्रमिदमाश्चर्यं [1]मृगयो प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ३४

शाकुनिकः—

पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै [2]विवदिष्येते तत्र मे वशमेष्यतः ॥ ३५

विदुरः—

तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ ।
विगृह्य पाशं दुर्बुद्धी पृथिव्यां सन्निपेततुः ॥ ३६

तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्य प्रमत्तौ तौ जग्राह मृगयुस्तदा ॥ ३७

एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
ते मृत्युवशमायान्ति शकुनाविव विग्रहात् ॥ ३८

---

1. अ-क-ख-ग-ब-ङ-म—मृगहन् ।
2. म-मा —निपतिष्येते ।

सम्भोजनं सङ्कथनं [1]सम्प्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ३९

ये स्म काले सुमनसस् सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यम् अप्रधृष्या भवन्ति ते ॥ ४०

[2]येऽर्थं सन्नतिमासाद्य दीना इव समासते ।
श्रियं ते सम्प्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ ४१

धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ४२

इदमन्यत् प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥ ४३

वयं किरातैस्सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्या[3]विनयसाधनैः ॥ ४४

कुञ्जभूतं गिरिं सर्वम् अभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ ४५

तत्रापश्याम वै सर्वे मधु स्फीतञ्च माक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसम्मितम् ॥ ४६

---

1. ख-ग-घ-ङ—संप्रीतिश्च परस्परम् ।
2. अ-क-ङ—येऽर्थं सन्तत
   ख—ये तुष्यन्ति रमन्ति स्म ज्ञातयोऽन्योन्यसंश्रयात् ।
3. अ-घ—जम्भकवार्तिकैः । ग-क—जम्भकसाधनैः ।
   म-मा—जम्भकवादिकैः । ख—शीलसमन्वितैः ।

आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत् प्राश्य पुरुषो मर्त्यो[1]ऽप्यमरत्वं निगच्छति ॥ ४७

अचक्षुर्लभते चक्षुर् वृद्धो भवति वै युवा ।
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः ॥ ४८

ततः किरातास्तं दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन् ससर्पे गिरिगह्वरे ॥ ४९

तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति सम्मोहात् प्रपातं नानुपश्यति ॥ ५०

दुर्योधनो योद्धुमनास् समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् ॥ ५१

एकेन रथमास्थाय पृथिवी येन निर्जिता ।
[2]भीष्मद्रोणप्रभृतयस् सन्त्रस्तास्साधुयायिनः ॥ ५२

विराटनगरे भग्नाः किं वा तेऽत्र निदर्शनम् ।
प्रतीक्षमाणो यो वीरः क्षमते [3]निकृतिं तव ॥ ५३

द्रुपदो मत्स्यराजश्च सङ्क्रुद्धश्च धनञ्जयः ।
न शेषयेयुस्समरे वायुयुक्ता इवाग्नयः ॥ ५४

---

1. घ-ङ—ऽप्यमृतत्वं निगच्छति ।
   मा—ऽप्यमर्त्यत्वं निगच्छति । अ-क—नियच्छति ।
2. ख-घ-ङ-म-मा—इतः अर्धद्वयं नास्ति
3. अ-क-ख-ग-घ-म-मा—वीक्षितं ।

अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ ५५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ५३ ॥ व्यासाभिगमनपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[ अस्मिन्नध्याये ५५ श्लोकाः ]

---

## ॥ एकषष्टितमोऽध्यायः ॥

---

धृतराष्ट्रेण दुर्योधनं प्रति अर्जुनस्य श्रीकृष्णपरमप्रेमास्पदतया दुर्जयत्वाभिधानपूर्वकं पाण्डवैस्सह सन्धिविधानम् ॥ १ ॥

---

धृतराष्ट्रः—

दुर्योधन विजानीहि यत् त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गम् अनभिज्ञ इवाध्वगः ॥ १

पञ्चानां पाण्डुपुत्राणां यत् तेजः प्रजिहीर्षसि ।
पञ्चानामिव भूतानां महतां सुमहात्मनाम् ॥ २

युधिष्ठिरं हि [1]कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसम्प्रेत्य न त्वं जेतुमिहार्हसि ॥ ३

भीमसेनं च कौन्तेयं यस्य नास्ति समो बले ।

---

1. ङ-म-मा—कौरव्यं परं धर्ममिवास्थितम् ।

रणान्तकं [1]तर्जयसे महावातमिव द्रुमः ॥ ४

सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव ।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥ ५

धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान् मुञ्चन् देवराडशनीमिव ॥ ६

सात्यकिश्चापि दुर्धर्षस् सम्मतोऽन्धकवृष्णिषु ।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७

यः पुनः प्रतिमानेन त्रीँल्लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युद्ध्येत बुद्धिमान् ॥ ८

एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयम् एकतश्च धनञ्जयः ॥ ९

वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।
अविषह्यं पृथिव्याऽपि तद्बलं यत्र केशवः ॥ १०

तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम् ।
वृद्धं शान्तनवं भीष्मं निरीक्षस्व पितामहम् ॥ ११

मां च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शनम् ।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम् ॥ १२

---

1. ख-ग-घ-ङ-म-मा—तर्कयसे ।

[1]द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुश्शासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ १३

विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ॥ १४

सैन्धवं दुस्सहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसन्धं च पार्थिवम् ॥ १५

एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा ।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ १६

यत्तद्विराटनगरे सह भ्रातृभिरग्रतः ।
उत्सृज्य गास्सुसन्त्रस्तं बलं ते समशीर्यत ॥ १७

यत्रैव तस्मिन् नगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ १८

अर्जुनस्तत् तथाऽकार्षीत् किं पुनस्सर्व एव ते ।
सभ्रातॄनभिजानीहि प्रीत्या च प्रतिपादय ॥ १९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ५२ ॥ व्यासाभिगमनपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

1. अ-क—कोशयोरेव इतः श्लोकत्रयं वर्तते ।

## ॥ द्विषष्टितमोऽध्यायः ॥

दुर्योधनेन धृतराष्ट्रवचनानभिनन्दने राज्ञां निर्गमनम् ॥ १ ॥ धृतराष्ट्रेण स्वपरसेनयोः सारासारकथनचोदितेन सञ्जयेन व्यासगान्धारीसन्निधौ कथनकथनम् ॥ २ ॥ श्रीव्यासेन सञ्जयं प्रति धृतराष्ट्रप्रश्नस्योत्तरदानाभ्यनुज्ञानम् ॥३॥ सञ्जयेन धृतराष्ट्रं प्रति सारभूतात् सर्वस्मादपि श्रीकृष्णस्य सारतरत्वकथनम् ॥ ४ ॥

वैशम्पायनः—

दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनन्दति ।
तूष्णीम्भूतेषु सर्वेषु समुत्तस्थु[1]र्नरर्षभाः ॥ १

उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।
रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ॥ २

आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥ ३

धृतराष्ट्रः—

गावल्गणे ब्रूहि नरसारफल्गु
स्वसेनायां यावदिहास्ति किञ्चित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ४

1. ङ—महीश्वराः । म-मा—नरेश्वराः ।

त्वमेतयोस्सारवित् सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टस्सञ्जय ब्रूहि सर्वं
नियुध्यमानाः कतरेऽस्मिन् न सन्ति ॥ ५

सञ्जयः—
न त्वां ब्रूयां रहिते जातु किञ्चिद्
असूया हि त्वां प्रसहेत राजन् ।
आनयस्व पितरं महाव्रतं
गान्धारीं च महिषीमाजमीढ ॥ ६

तौ तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां सन्निधौ तद्वदेयं
कृत्स्नं मतं [1]केशवपार्थयोर्यत् ॥ ७

वैशम्पायनः—
इत्युक्तेन च गान्धारी व्यासश्चात्राजगाम ह ।
आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ॥ ८

ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ९

व्यासः—
सम्पृच्छते धृतराष्ट्राय सञ्जय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।

1. ख–ग–घ–ङ–म–मा—वासुदेवार्जुनाभ्याम् ।

सर्वं यावद्वेत्थ तस्मिन् यथावद्
याथातथ्यं वासुदेवेऽर्जुने च* ॥ १०

सञ्जयः—

अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र सम्भूतौ [1]सर्वभावाय सम्मितौ ॥ ११

[2]द्यामन्तरं समास्थाय यथायुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ १२

सापह्नवं [3]कौरवेषु पाण्डवानां सुसम्मतम् ॥ १२॥

[4]सारासारबलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ १३

नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान् घोरसङ्काशान् क्रीडन्निव जनार्दनः ॥ १४

पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ १५

भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान् प्रति ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख-ग-घ-ङ—पूर्वभागसमन्वितौ ।　म—सर्वभावसमन्वितौ ।
   मा—पूर्वभावसमन्वितौ ।
2. ख—आत्मान्तरं　ग-घ-ङ-म-मा—जन्मान्तरं
3. ख-ग-घ-ङ-म-मा—पाण्डवेषु विद्धि राजसु सत्तम ।
4. अ-क—श्लोकद्वयं नास्ति ।

सारासारबलं ज्ञातुं तन् [1]समासेन मे शृणु ॥ १६

एकतो वा जगत् कृत्स्नम् एकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नाद् अतिरिक्तो जनार्दनः ॥ १७

[2]भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं किञ्चित् कर्तुं जनार्दने ॥ १८

यतस्सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ १९

पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ २०

स कृत्वा पाण्डवान् सत्रं लोकं सम्मोहयन्निव ।
अधर्मनिरतान् मूढान् दग्धुमिच्छति ते सुतान् ॥ २१

कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥ २२

कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईष्टे हि भगवानेकस् सत्यमेतद्ब्रवीमि ते ॥ २३

ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ २४

---

1. ख-ग-घ-ङ-म-मा—तन्मे निगदतः।
2. अ-क—श्लोकद्वयं नास्ति ।

तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ ५२ ॥ व्यासाभिगमनपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ त्रिषष्टितमोऽध्यायः ॥

भगवद्वेदनसाधनं पृष्टेन सञ्जयेन धृतराष्ट्रं प्रति तत्कथनम् ॥ १ ॥ श्रीव्यासेन धृतराष्ट्रं प्रति सञ्जयाद्भगवद्वेदनाभ्यनुज्ञा ॥२॥ सञ्जयेन धृतराष्ट्रं प्रति वासुदेवादिभगवन्नामनिर्वचनम् ॥३॥ तथा सन्ध्यर्थं श्रीकृष्णागमनकथनम् ॥ ४ ॥

---

धृतराष्ट्रः—

कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १

सञ्जयः—

विद्या राजन् न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥ २

विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
[1]कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ३

---

1. मा—सार्धश्लोको नोपलभ्यते ।

धृतराष्ट्रः—

गावल्गणेऽत्र का विद्या या ते नित्या जनार्दने ।
यया त्वमभिजानासि वियुगं मधुसूदनम् ॥ ४

सञ्जयः—

मायां न सेवे भद्रं ते न वृथा धर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ ५

धृतराष्ट्रः—

दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आप्तो नस्सञ्जयस्तात शरणं गच्छ केशवम् ॥ ६

दुर्योधनः—

भगवान् देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७

धृतराष्ट्रः—

अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्षुर्दुरात्मा मानी च श्रेयसां शासनातिगः ॥ ८

गान्धारी—

[1]ऐश्वर्यकाम दुष्टात्मन् वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ९
वर्धयन् दुर्हृदां प्रीतिं मां च [2]शोकाय रन्धयन् ।

---

1. ख—नास्तीदमर्धम्
2. अ-क—शोकेन वर्धयन् । म-मा—शोकाय रन्ध्रयन् ।

निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥　१०

व्यासः—

[1]प्रियोऽसि राजन् कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वा श्रेयसि योक्ष्यते ॥　११

जानात्येष हृषीकेशं पुराणं यच्च वै नवम् ।
शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् ॥　१२

वैचित्रवीर्य पुरुषाः क्रोधहर्ष[2]समावृताः ।
[3]सिता बहुविधैः पाशैर् ये न तुष्टास्स्वकैर्धनैः ॥　१३

यमस्य वशमायान्ति काम[4]मूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानास्स्वकर्मभिः ॥　१४

एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥　१५

धृतराष्ट्रः—

अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां [5]सिद्धिमुत्तमाम् ॥　१६

सञ्जयः—

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।

---

1. ख-ग-घ-ङ-म-मा—दयितोऽसि ।
2. ख-घ-ङ-म-मा—तमोवृताः ।　3. अ-क-ख-ग-घ—युता ।
4. ग—मन्युवशं गताः ।　ख-घ-ङ-म-मा—मन्युवशानुगाः ।
5. ख-ग-घ-ङ-म-मा—शान्ति ।

आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ १७

इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ १८

इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ॥ १९

एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ २०

अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
[1]आगमाभिगतो योगी वशी तत्त्वे प्रसीदति* ॥ २१

धृतराष्ट्रः—

भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः ।
नामकर्मार्थवित् तात प्राप्नुयां पुरुषोत्तमम् ॥ २२

सञ्जयः—

श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ।
यावत् तत्राभिजानेऽहम् अप्रमेयो हि केशवः ॥ २३

वसनात् सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो [2]वेद्यो [3]बृहत्त्वाद्विष्णुरुच्यते ॥ २४

---

1. अ-क—आगमाभिगमाद् योगाद् वशी तत्त्वे
ख—अगम्यो भोगतो योगी वसीदत्त्वे प्रसीदति ?।
म-मा—आगमाभिगमो योगाद्वशी तत्त्वे ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

2. ङ-म-मा—ज्ञेयो वृषत्वाद्वृष्णिरुच्यते । 3. ख-घ—वृष ।

मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वसत्त्वमयत्वाच्च मधुहा मधुसूदनः ॥ २५

कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च कृष्णो भवति शाश्वतः ॥ २६

पुण्डरीकं परं धाम नित्यमक्षय[1]मक्षरम् ।
तद्भावात् पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ २७

यतस्सत्वं न च्यवते यच्च सत्वान्न हीयते ।
[2]तत्त्वतस्सात्वतस्तस्माद् आर्षभाद्वृषभेक्षणः ॥ २८

न जायते जनित्र्याऽयम् अजस्तस्मादनीकजित् ।
देवानां [3]सुखशंसित्वाद् दमाद्दामोदरो विभुः ॥ २९

[4]हर्षात् सुखात् सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥ ३०

अधो न क्षीयते जातु यस्मात् तस्मादधोक्षजः ।
नराणामयनाच्चापि ततो नारायणस्स्मृतः ॥ ३१
[5]पूरणात् सदनाच्चापि ततो वै पुरुषोत्तमः ॥ ३१॥

---

1. अ-क—मव्ययम् ।
2. अ-क-ग-मा—सात्वत ।
3. ख-ग-च—सुखसङ्गित्वाद् दामाद्दामोदरं विदुः ।
4. च—नास्त्ययं श्लोकः । ख—इतः श्लोकद्वयं नास्ति
5. ख—पुराणां सदना चैव । ङ—पुराणसदनाच्चैव ।

असतश्च सतश्चैव सर्वस्य प्रभवोऽप्ययः ॥ ३२

सर्वस्य च सदा ज्ञानात् सर्वज्ञं तं प्रचक्षते ॥ ३२॥

सत्ये प्रतिष्ठितः कृष्णस् सत्यमत्र प्रतिष्ठितम् ।

सत्तासत्ते च गोविन्दस् तस्मात् सत्योऽपि नामतः ॥ ३३॥

विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ॥ ३४

शाश्वतत्वादनन्तश्च [1]गोविन्दो वेदनाद्गवाम् ।

[2]अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ ३५

एवंविधो धर्मनित्यो भगवान् मधुसूदनः ।

आगन्ता हि महाबाहुर् आनृशंस्यार्थमच्युतः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ५३ ॥ व्यासाभिगमनपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये ३६ श्लोकाः]

## ॥ चतुष्षष्टितमोऽध्यायः ॥

श्रीकृष्णागमनश्रवणहृष्टेन धृतराष्ट्रेण चक्षुष्मत्प्रशंसनपूर्वकं श्रीकृष्णगुणानुवर्णनम् ॥ १ ॥

धृतराष्ट्रः—

चक्षुष्मतां वै स्पृहयामि सञ्जय
द्रक्ष्यन्ति ये वासुदेवं समीपे ।

---

1. ग—गोविन्दश्चेतनाथभृत् ; ख-ब-ङ-म-मा—गोविन्दश्चेतनादभूत्। 2. ख-ङ-म-मा—तदात्त्वं।

विभ्राजमानं वपुषा परेण
प्रकाशयन्तं प्रदिशो दिशश्च ॥ १

सञ्जयः—
[1]वक्ता वाचं राजमध्ये सभायां
वृष्णिश्रेष्ठो मुनिभिर्भ्राजमानः ॥ १॥

धृतराष्ट्रः—
[2]ईरयन्तं भारतीं भारतानाम्
अभ्यर्चनीयां शङ्करीं सृञ्जयानाम् ।
बुभूषद्भिर्ग्रहणीयामनिन्द्यां
परासूनामग्रहणीयरूपाम् ॥ २॥

समुद्यन्तं सात्वतमेकवीरं
प्रणेतारमृषभं यादवानाम् ।
निहन्तारं क्षोभणं शात्रवाणां
मुष्णन्तं वै द्विषतां चैव तेजः ॥ ३॥

द्रष्टारो हि कुरवस्तं समेता
महात्मानं शत्रुहणं वरेण्यम् ।
ब्रुवन्तं वाचमनृशंसरूपां
वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ४॥

ऋषिं सनातनतमं विपश्चितं
वाचस्समुद्रं कलशं यतीनाम् ।

1. ग-घ-ङ—कोशेष्वेवेदमर्धं वर्तते
2. ख—नास्त्ययं श्लोकः ।

अरिष्टनेमिं गरुडं सुपर्णं
हरिं प्रजानां भुवनस्य धाम ॥ ५॥

सहस्रशीर्षं पुरुषं पुराणम्
अनादिमध्यान्तमनन्त[1]कीर्तिम् ।
[2]शुक्रस्य धातारमजं च नित्यं
परं परेषां शरणं प्रपद्ये ॥ ६॥

त्रैलोक्यनिर्माणमजं जनित्रं
देवासुराणामथ नागरक्षसाम् ।
नराधिपानां विदुषां प्रधानम्
इन्द्रानुजं तं शरणं प्रपद्ये ॥ ७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

॥ ५२ ॥ व्यासाभिगमनपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[अस्मिन्नध्याये ७॥ श्लोकाः]

( व्यासाभिगमनपर्व समाप्तम् )

---

1. ख-ग-घ-ङ-म-मा—वीर्यम् ।
2. ग-घ-ङ-म—विश्वस्य धातरमचिन्त्यरूपं ।
मा—विश्वस्य धातारमजं जनित्रं परावरेभ्यश्शरणं प्रपद्ये ।
[पाठान्तरम्]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

॥ भगवद्यानपर्व ॥

युधिष्ठिरेण श्रीकृष्णं प्रति सन्ध्यर्थं हास्तिनपुरगमनप्रार्थनासूचक वचनोपन्यासः ॥ १ ॥ श्रीकृष्णेन तत्र स्वस्य गमनकथनम् ॥ २ ॥

वैशम्पायनः—

सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अर्जुनं भीमसेनं च माद्रीपुत्रौ च [1]भ्रातरौ ॥ १
[2]विराटद्रुपदौ चैव केकयानां महारथम् ।
अब्रवीदुपसङ्गम्य शङ्खचक्रगदाधरम् ॥ २

युधिष्ठिरः—

अभियाचामहे गत्वा [3]प्रयान्तं कुरुसंसदम् ॥ २॥
यथा भीष्मेण द्रोणेन बाह्लीकेन च धीमता ।
अन्यैश्च कुरुभिस्सार्धं न युध्येमहि संयुगे ॥ ३॥
एष नः प्रथमः कल्प एतन्निश्श्रेय उत्तमम् ॥ ४

वैशम्पायनः—

एवमुक्तास्सुमनसस् तेऽभिजग्मुर्जनार्दनम् ।
[4]पाण्डवैस्सह राजानो मरुत्वन्तमिवामराः ॥ ५
तथा च दुस्सहा[5]स्सर्वैस् सदस्यैश्च नरर्षभ ॥ ५॥

1. ङ—भारत । 2. म-मा—विराटं द्रुपदं ।
3. ख—प्रसादं । ङ-म-मा—प्रयातुं ।
4. ख—इतः श्लोकद्वयं नास्ति 5. ङ-म-मा—सर्वै ।

[1]जनार्दनं समासाद्य कुन्तीपुत्रो युधिष्ठिरः ।
[2]अभ्यभाषत दाशार्हम् ऋषभं सर्वसात्वताम् ॥ ६॥

युधिष्ठिरः—

अयं स कालस्सम्प्राप्तो [3]मित्रार्थे हि जनार्दन ।
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥ ७॥

त्वां हि माधवमाश्रित्य निर्भया मोहदर्पितम् ।
धार्तराष्ट्रं [4]सहामात्यं स्वमंशमनुयुङ्क्ष्महे ॥ ८॥

यथा हि सर्वास्वापत्सु पासि वृष्णीनरिन्दम ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान् महतो भयात् ॥ ९॥

श्रीभगवान्—

अयमस्मि महाबाहो ब्रूहि यत् ते विवक्षितम् ।
करिष्यामि हि तत् सर्वं यत् त्वं वक्ष्यसि भारत ॥ १०॥

युधिष्ठिरः—

श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ११॥

मृदुपूर्वं साममिश्रं [5]सान्त्वमुग्रं च माधव ।

---

1. अ-क-ख-म-मा—इदमर्धं नास्ति
2. ग-घ-ङ-म-मा—अब्रवीत् परवीरघ्नं दाशार्हमपराजितम् ।
[पाठान्तरम्]

3. अ-क-ख—मित्राणां मित्रवत्सल । 4. ग-घ-ङ-म-मा—वशे कृत्वा
5. ङ—सममुग्रं म—सममिश्रं । मा—समामिश्रं ।

न तु तन्न्यायमास्थाय गर्हिताश्च ततो वयम् ॥　　१२॥

तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यस्स्यादन्यथा ब्रुवन् ॥　　१३॥

अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥　　१४॥

यत् तद्द्वादशवर्षाणि वने[1]ष्वध्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥　　१५॥

स्थाता नस्समये तस्मिन् धृतराष्ट्र इति प्रभो ॥　　१६
[2]नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥　　१६॥

वृद्धो राजा धृतराष्ट्रस् स्वधर्मं नानुपश्यति ।
[3]पश्यन् वा पुत्रगृध्नुत्वा[4]न्मन्दस्यान्वेति शासनम् ॥　　१७॥

सुयोधनमते तिष्ठन् राजाऽस्मासु जनार्दन ।
मिथ्या चरति लुब्धस्संश् चरन् हि प्रियमात्मनः ॥　　१८॥

इतो दुःखतरं किं नु यदहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥　　१९॥

काशिभिश्चेदिपाञ्चालैर् मत्स्यैश्च मधुसूदन ।
भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥　　२०॥

---

1. म-मा—निर्युषिता ।　　2. ख-ङ—आहास्मान् ।
3. अ-क-ख-ग-घ-मा—वश्यत्वात् ।
4. ख-घ-ङ-म-मा—त्सुतस्यान्वेति ।

[1]कुशस्थलं वृकस्थलं [2]आसन्दीं वारणावतम् ।
अवसानं च गोविन्द [3]किञ्चिदेवात्र पञ्चमम् ॥ २१॥

पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेम सहिता येषु मा च नो भरता नशन् ॥ २२॥

न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरं नु किम् ॥ २३॥

कुले जातस्य वृद्धस्य परवित्तेषु गृध्यतः ।
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हतां ह्रियम् ॥ २४॥

ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतश्श्रियम् ।
श्रीर्हता पुरुषं हन्ति [4]पुरुषस्याधनं वधः ॥ २५॥

अस्वतो विनिवर्तन्ते ज्ञातयस्सुहृदो द्विजाः ।
अपुष्पादफलाद्वृक्षाद् यथा कृष्ण पतत्रिणः ॥ २६॥

एतच्च मरणं तात [5]यदस्मात् पतितादिव ।
ज्ञातयो विनिवर्तन्ते प्रेतसत्वादिवासवः ॥ २७॥

नातः पापीयसीं काञ्चिद् अवस्थां शम्बरोऽब्रवीत् ।

---

1. अ-क—अविस्थलं । 2. अ-क—माकन्दीं ।
3. ख-ग-घ-ङ-मा—कञ्चिदेव तु । म—किञ्चिदेव तु ।
4. ग-म—पुरुषस्य स्वभावतः । ख-घ-ङ—पुरुषश्च हतस्स्वतः ।
मा—पुरुषस्यान्धता वधः ।
5. क—यन्मत्तः पतितादिव । ख-घ-ङ—यदस्मान् पतितानिव ।
अ-ग—उन्मत्तपतितादिव ।

यत्र [1]नैवाद्य न प्रातर् भोजनं प्रतिदृश्यते ॥ २८॥

धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ २९॥

ये धनादपकर्षन्ति नरं स्वबलमास्थिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥ ३०॥

एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके [2]नाशायैके प्रवव्रजुः ॥ ३१॥

[3]उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतवे ॥ ३२॥

आपदेवास्य मरणात् पुरुषस्य गरीयसी ।
यथा विनश्यते चास्य निमित्तं धर्मकामयोः ॥ ३३॥

यदस्य धर्मं मरणं शाश्वतं लोकवर्त्म तत् ।
समन्तात् सर्वभूतानां न तदत्येति कश्चन ॥ ३४॥

न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनस्सुखैधितः ॥ ३५॥

स तदाऽऽत्मापराधेन सम्प्राप्तो व्यसनं महत् ।
सेन्द्रान् गर्हयते देवान् आत्मानं च कथञ्चन ॥ ३६॥

---

1. ख—नैवाद्यतः। मा—नैवोद्यतः प्रातर्। घ-ङ—नैवाश्नतः प्रातर्।
2. ख-ग-घ-ङ—जलायैके।
3. ख-ग-घ-ङ-म-मा—आत्मानमेके त्यक्ष्यन्ति

न चास्य सर्वशास्त्राणि प्रभवन्ति निवर्हणे ।
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ॥ ३७॥

तं तदा मन्युरेवैति स भूयस्सम्प्रमुह्यति।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ३८॥

पापकर्मतया चैव सङ्करं तेन पुष्यति ।
सङ्करो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ३९॥

न चेत् प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञा[1]चक्षुर्न रिष्यति ॥ ४०॥

प्रज्ञालाभे हि पुरुषश् शास्त्राण्येवान्ववेक्षते ।
शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ४१॥

ह्रीमान् हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान् स यावद्भवति तावद्भवति पूरुषः ॥ ४२॥

धर्मनित्यः प्रशान्तात्मा कार्ययोगवहस्सदा ।
नाधर्मे कुरुते बुद्धिं न च पापे प्रवर्तते ॥ ४३॥

अह्रीको वाऽपि मूढो वा नैव स्त्री न पुनः पुमान् ।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥ ४४॥

ह्रीमा[2]नुपैति देवांश्च पितृनात्मानमेव च ।

1. अ-क—चक्षुस्तरिष्यति । 2. अ-क—नवति ।

[1]तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥ ४५॥

तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ।
यथा राज्यात् परिभ्रष्टो वसामि वसतीरिमाः ॥ ४६॥

ते वयं न श्रियं हातुम् अलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ४७॥

तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्तास्समभूताश्च श्रियं तामश्नुवीमहि ॥ ४८॥

तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान् हत्वा तानि राष्ट्रा[2]ण्यवाप्नुमः ॥ ४९॥

ये पुनस्स्युरसम्बद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किम्पुनर्ये स्युरीदृशाः ॥ ५०॥

ज्ञातयश्चैव भूयिष्ठास् सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान् किं नु युद्धेऽस्ति शोभनम् ॥ ५१॥

पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबन्धवः ।
स न[3]स्स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥ ५२॥

---

1. ग-घ-ङ—तेनामृतं जनो याति ।　　ख—तेनामृतजनं याति ।
म-मा—तेनामृतं जनयति ।
2. म—ण्यशामहि ।　　मा—ण्यशीमहि ।
3. क—स्स धर्मो ।　　ख-घ-ङ—स्स्वधर्मो धर्मो वा ।
मा—स नोऽस्स्वधर्मो धर्मो वा ।

शूद्रः करोति शुश्रूषां [1]वैश्यो विपणिजीविकाम् ।
वयं वधेन जीवामः [2]कार्पण्यं ब्राह्मणैर्वृतम् ॥ ५३॥

क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथा गतः ॥ ५४॥

युद्धे कृष्ण कलिर्नित्यं प्राणास्सीदन्ति संयुगे ।
बलं तु नीतिमा[3]स्थाय हरेज्जयपराजयौ ॥ ५५॥

नात्मच्छन्देन भूतानां जीवितं मरणं तथा ।
नाप्यकाले सुखं प्राप्यं दुःखं चाऽपि यदूत्तम ॥ ५६॥

एको ह्यपि बहून् हन्ति घ्नन्त्येकं बहवोऽप्युत ।
शूरं कापुरुषो [4]हन्ति अयशस्वी यशस्विनम् ॥ ५७॥

जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः ।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ५८॥

सर्वथा वृजिनं युद्धं को घ्नन् न प्रतिहन्यते ।
हतस्य च हृषीकेश समौ जयपराजयौ ॥ ५९॥

पराजयश्च मरणान्मन्ये नैव विशिष्यते ॥ ६०

यस्य स्याद्विजयः कृष्ण तस्याप्यपजयो ध्रुवम् ।
अन्ततो दयितं घ्नन्ति केचि[5]दप्यपराजिताः ॥ ६१

---

1. ख-ग-घ-ङ-म—वैश्या वाणिज्यजीविनः।
मा—वैश्यो वाणिज्यजीवनः। 2. अ-क-ग—कपालं ।
3. अ-क—दाय हरेज्ज। ख-ग-घ-ङ-म-मा—स्थाय भवेज्ज।
4. ग-ङ-म-मा—द्वेष्टि। 5. अ-क—दप्यपरे जनाः।

तस्याङ्गबलहीनस्य पुत्रान् भ्रातॄनपश्यतः ।
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ॥ ६२

[1]ये ह्येव धीरा ह्रीमन्त आर्याः करुणवेदिनः ।
त एव युद्धे हन्यन्ते यवीयान् मुच्यते जनः ॥ ६३

हत्वाऽप्यनुशयो नित्यं परानपि जनार्दन ।
अनुबन्धश्च पापोऽत्र शोकश्चाप्यवशिष्यते ॥ ६४

शेषो हि बलमासाद्य न शेषमवशेषयेत् ।
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया ॥ ६५

जयो वैरं प्रसृजति दुःखमास्ते पराजितः ।
सुखं प्रशान्तस्स्वपिति हित्वा जयपराजयौ ॥ ६६

जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ।
अनिर्वृत्तेन मनसा ससर्प इव वेश्मनि ॥ ६७

उत्सादयति यस्सर्वं यशसा स [2]विमुच्यते ।
अकीर्तिं सर्वभूतेषु शाश्वतीं स निगच्छति ॥ ६८

न हि वैराणि शाम्यन्ति दीर्घकाल[3]कृतान्यपि ।
आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले ॥ ६९

न चापि वैरं वैरेण केशव प्रतिशाम्यति ।

---

1. ख-ग-घ-ङ-म-मा—एते प्रवीराः श्रीमन्त ।
2. ङ-म—वियुज्यते ।   3. ग—गतान्यपि ।

हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते ॥ ७०

अतोऽन्यथा नास्ति शान्तिर् नित्यमन्तरमन्ततः ।
अन्तरं लिप्समानानाम् अयं दोषो निरन्तरः ॥ ७१

पौरुषे यो हि बलवान् आधिर्हृदयतापनः ।
तस्य त्यागेन वा शान्तिर् मरणेनापि वा भवेत् ॥ ७२

अथवा मूलघातेन द्विषतां मधुसूदन ।
फलनिर्वृत्तिरिद्धा स्यात् तन्नृशंसतरं भवेत् ॥ ७३

या तु त्यागेन शान्तिस्स्यात् तदृते वध एव सः ।
संशयाच्च समुच्छेदाद् द्विषताम् आत्मनस्तथा ॥ ७४

न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ।
अत्र या प्रणिपातेन शान्तिस्सैव गरीयसी ॥ ७५

सर्वथा यतमानानाम् अयुद्धमभिकाङ्क्षताम् ।
सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः ॥ ७६

प्रतिघातेन सान्त्वस्य दारुणं सम्प्रवर्तते ।
तच्छुनामिव [1]सम्पाते पण्डितैरुपलक्षितम् ॥ ७७

लाङ्गूलचालनं क्ष्वेला प्रतिरावो निवर्तनम् ।
दन्तदर्शनमारावस् ततो युद्धं प्रवर्तते ॥ ७८

तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तदामिषम् ॥ ७८॥

1. ख-ग-घ-ङ—गोवाते। म—गोपदे। मा—गोखादे।

एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥　७९

सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम् ।
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥　८०

पिता राजा च वृद्धश्च सर्वथा मानमर्हति ।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो [1]जनेश्वरः ॥　८१

पुत्रस्नेहश्च बलवान् धृतराष्ट्रस्य माधव ।
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥　८२

तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम् ।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ॥　८३

ईदृशेऽह्यर्थकृच्छ्रेऽस्मिन् कमन्यं मधुसूदन ।
उपसम्प्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥　८४

प्रियश्च प्रियकामश्च गतिज्ञस्सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक् सर्वनिश्चयवित् सुहृत्* ॥　८५

**वैशम्पायनः—**

एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।

**श्रीभगवान्—**

उभयोरेव [2]शान्त्यर्थं यास्यामि कुरुसंसदम् ॥　८६

शर्म तत्र लभेयं चेद् युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश् चरितं स्यान्महाफलम् ॥　८७

---

1. अ-क-म-मा—जनार्दन।
* ग-घ-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥
2. अ-क-ख—वामर्थे।

मोचयेयं मृत्युपाशात् संरब्धान् कुरुसृञ्जयान् ।
पाण्डवान् धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ॥ ८८

वैशम्पायनः—

एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ।
भ्रातॄणां समवेतानां सकाशे पुरुषोत्तमम् ॥ ८९

युधिष्ठिरः—

न ममैतन्मतं कृष्ण यत् त्वं यायाः कुरून् प्रति ।
सुयोधनस्सूक्तमपि न करिष्यति ते वचः ॥ ९०
सुयोधनो हि दुष्टात्मा कर्णश्च सहसौबलः ।
[1]समेतं पार्थिवं क्षत्रं दुर्योधनवशानुगम् ॥ ९१
तेषां मध्येऽवतरणं तव कृष्ण न रोचये ॥ ९१॥
न हि नः प्रीणये[2] द्रव्यं न देवत्वं कुतस्सुखम् ।
न च सर्वामरैश्वर्यं तव द्रोहेण माधव ॥ ९२॥

श्रीभगवान्—

जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।
अवाच्यास्तु भविष्यामस् सर्वलोके महीक्षिताम् ॥ ९३॥
न चापि मम पर्याप्तास् सहितास्सर्वपार्थिवाः ।
क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः ॥ ९४॥
अथ चैते प्रवर्तन्ते मयि किञ्चिदसाम्प्रतम् ।

1. ग-घ-ङ—कोशेष्वेवेदमर्धं वर्तते
2. ग-घ-ङ-म-मा—द्राज्यं ।

निर्दहेयं कुरून् सर्वान् इति मे धीयते मतिः ॥　　९५॥

न जातु गमनं पार्थ भवेत् तत्र निरर्थकम् ।
अर्थप्राप्तिः कदाचित् स्याद् अन्ततो वाऽप्यवाच्यता ॥　९६॥

युधिष्ठिरः—

यत् तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥　　९७॥

विष्वक्सेन कुरून् गत्वा भरतान् शमय प्रभो ।
यथा सर्वे सुमनसस् सह स्याम सुचेतसः ॥　　९८॥

भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः ।
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये ॥　　९९॥

अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यस्सुयोधनः ॥　　१००॥

यद्यद्धर्मेण संयुक्तम् उपपद्योद्धितं वचः ।
तत्तत् केशव भाषेथास् सान्त्वं वा यदि वेतरत् ॥　　१०१॥

**इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्**
**उद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥**

**॥ ५४ ॥ भगवद्यानपर्वणि प्रथमोऽध्यायः ॥ १ ॥**

[अस्मिन्नध्याये १०१॥ श्लोकाः]

---

## ॥ षट्षष्टितमोऽध्यायः ॥

श्रीकृष्णेन युधिष्ठिरं प्रति युद्धपक्षस्थिरीकरणपूर्वकं लोकसंशयनिरासाय शमार्थं प्रयतनकथनम् ॥ १ ॥

श्रीभगवान्—

सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया ।
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ १

[1]तव धर्माश्रिता बुद्धिस् तेषां वैरान्विता मतिः ।
यदयुद्धेन लभ्येत तत् ते बहुमतं भवेत् ॥ २

न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशाम्पते ।
आहुराश्रमिणस्सर्वे यद्भैक्षं क्षत्रियश्चरेत् ॥ ३

जयो वधो वा सङ्ग्रामे धात्राऽऽदिष्टस्सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥ ४

न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।
विक्रमस्व महाबाहो जहि शत्रून्नरिन्दम ॥ ५

अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः ।
कृतमित्राः कृतबला धार्तराष्ट्राः परन्तप ॥ ६

न पर्यायोऽस्ति यत् साम्यं त्वयि कुर्युर्विशाम्पते ।
बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ७

1, ग—इदमर्धं नास्ति

यावच्च मार्दवेनैतान् राजन्नुपचरिष्यसि ।
तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ८

[1]नानुक्रोशान्न कार्पण्यान्न च धर्मार्थ[2]कारणात् ।
अलं कर्तुं धार्तराष्ट्रास् तव काममरिन्दम ॥ ९

एतदेव निमित्तं ते [3]धार्तराष्ट्रो यथा त्वयि ।
नान्वतप्यत कोऽप्येनं तव कृत्वाऽपि दुष्करम् ॥ १०

पितामहस्य द्रोणस्य विदुरस्य च धीमतः ।
[4]ब्राह्मणानां च साधूनां राज्ञश्च नगरस्य च ॥ ११

पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ।
दानशीलं मृदुं दान्तं धर्मशीलमनुव्रतम् ॥ १२

यत् त्वामुपधिना राज्यं द्यूतेनावञ्चयत् तदा ॥ १२॥
न चापत्रपते पापो नृशंसस्स्वेन कर्मणा ॥ १३

तथाशीलसमाचारे राजन् मा प्रणयं कृथाः ।
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत ॥ १४

वाग्भिस्त्वप्रतिरूपाभिर् [5]आतुदंस्त्वां सहानुजम् ।
श्लाघमानः [6]प्रहृष्टस्सन् भ्रातृभिस्सह भाषते ॥ १५

---

1. घ-ङ—नास्त्ययं श्लोकः । 2. ग-म-मा—संश्रयात् ।
3. अ-क-म-मा—पाण्डवास्तु 4. ख-घ-ङ-म-मा—नास्तीदमर्धम्
5. मा—रातुदत् सकनीयकः । 6. ङ-म-मा—प्रहृष्टात्मा ।

एतावत् पाण्डवानां हि नास्ति किञ्चिदिह स्वकम् ।
नामधेयं च गोत्रं च तथाऽप्येषां तु शिष्यते ॥ १६

कालेन महता चैषां भविष्यति पराभवः ।
[1]प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो जनाः ॥ १७

[2]दुश्शासनेन पापेन तदा दुःखे प्रवर्तिते ।
अनाथवत् तदा देवी द्रौपदी सुदुरात्मना ॥ १८

आकृष्टकेशा रुदती सभायां राजसंसदि ।
भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः ॥ १९

भवता वारितास्सर्वे भ्रातरो भीमविक्रमाः ।
धर्मपाशनिबद्धाश्च न किञ्चित् प्रतिपेदिरे ॥ २०

एताश्चान्याश्च परुषा वाच[3]स्संसदि चेरयन् ।
श्लाघते ज्ञातिमध्ये स त्वयि प्रव्राजिते वनम् ॥ २१

ये तत्रासन् समानीतास् ते दृष्ट्वा त्वामनागसम् ।
अश्रु[4]कण्ठा रुदन्तश्च सभायामासते तदा ॥ २२

नचैनमभ्यनन्दंस्ते राजानो ब्राह्मणैस्सह ।
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः ॥ २३

1. म-मा—प्रकृतिस्था भविष्यन्ति ।
2. ख-ब-ङ-म-मा—इतः श्लोकत्रयं नास्ति 3. मा—स्स समुदीरयन् ।
4. ग-म-मा—पूर्णा रुदन्तस्स । ख-ब—पूर्णा रुदन्ति स्म ।
ङ—पूर्ण रुदन्ति स्म ।

कुलीनस्य च या निन्दा वधो वाऽमित्रकर्शन ।
महागुणो वधो राजन् न तु निन्दा कुजीविनः ॥ २४

तदैव निहतो राजन् यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजभिः ॥ २५

ईषत्करो वधस्तस्य यस्य चारित्रमीदृशम् ।
[1]प्रस्कन्देन प्रतिस्तब्धश् छिन्नमूल इव द्रुमः ॥ २६
वध्यस्सर्प इवानार्यस् सर्वलोकस्य दुर्मतिः ॥ १६॥
जह्येनं त्वममित्रघ्न मा राजन् विचिकित्सथाः ॥ २७

सर्वथा तु मतं चैतद् रोचते च ममानघ ।
यन् त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥ २८

अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधा भावो राजन् दुर्योधनं प्रति ॥ २९

मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान् गुणान् ।
तव सङ्कीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ॥ ३०

ब्रुवतस्तव मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवास्सर्वे नानाजनपदेश्वराः ॥ ३१
त्वयि सम्प्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ॥ ३१॥

---

1. ख-ग-घ-ङ-म—प्रस्कम्भनप्रतिस्तब्ध ।
मा—प्रस्तम्भनप्रतिस्तब्ध ।

अस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ ३२

गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्ये समागते ॥ ३३

धर्मं चेद् याचमानस्त्वं धर्मं तत्र न लप्स्यसे ।
कुरून् विगर्हयिष्यन्ति [1]धृतराष्ट्रं च पार्थिवम् ॥ ३४

तस्मिँल्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन् यदन्यत् क्रियतामिति ॥ ३५

यात्वा चाहं कुरून् सर्वान् युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥ ३६

कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशाम्य विनिवर्तिष्ये जयाय तव भारत ॥ ३७

सर्वथा युद्धमेवाहम् आशंसामि परैस्सह ।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ॥ ३८

मृगाश्शकुन्ताश्च वदन्ति घोरं
हस्त्यश्वमुख्येषु [2]निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्निर्
वर्णान् बहून् पुष्यति घोररूपान् ॥ ३९

---

1. ग—धार्तराष्ट्रं च पार्थिवाः।
ख-घ-ङ-मा—धृतराष्ट्रं च पार्थिवाः।
2. ङ-म-मा—निशामये च।

मनुष्यलोकक्षयकृत् सुघोरो
　　नो चेदनुप्राप्त इहान्तकस्स्यात् ।
शस्त्राणि यन्त्रं कवचान् रथांश्च
　　नागान् ध्वजांश्च [1]प्रतिपादयस्व ॥　　४०

योधाश्च सर्वे कृतनिश्चयास्ते
　　भवन्तु हस्त्यश्वरथेषु यत्ताः ।
साङ्ग्रामिकं ते यदुपार्जनीयं
　　सर्वं समग्रं कुरु तन्नरेन्द्र ॥　　४१

दुर्योधनो न ह्यलमद्य दातुं
　　जीवंस्तवैतन्नृपते कथञ्चित् ।
यत् ते पुरस्तादभवत् समृद्धं
　　द्यूते हृतं पाण्डवमुख्य राज्यम् ॥　　४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

॥ ५४ ॥ भगवद्यानपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ४२ श्लोकाः]

---

1. अ-क-ग-ङ—प्रतिपादयित्वा ।　　म—प्रतिपादयेय ।

## ॥ सप्तषष्टितमोऽध्यायः ॥

भीमसेनेन श्रीकृष्णं प्रति दुर्योधनस्य दुराराध्यत्वकथनपूर्वकं यथाकथञ्चित् शमस्यावश्यकर्तव्यत्वकथनम् ॥ १ ॥

भीमः—

यथा यथैव शान्तिस्स्यात् कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ १

अमर्षी नित्यसंरब्धश् श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यस् साम्नैवैनं समाचरेः ॥ २

प्रकृत्या पाप[1]सत्वश्च तुल्यचेताश्च दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ३

अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ४

म्रियेतापि न भज्येत नैव जह्यात् स्वकं मतम् ।
तादृशेन शमः कृष्ण मन्ये परमदुष्करः ॥ ५

सुहृदामप्यवाचीनस् त्यक्तधर्मा प्रियानृतः ।
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ॥ ६

स मन्युवशमापन्नस् स्वभावं दुष्टमास्थितः ।

1. ग—सन्धिश्च । घ-ङ-मा—सन्धश्च । ख-म—बन्धश्च ।

स्वभावात् पापमभ्येति तृणैश्छन्न इवोरगः ॥ ७

दुर्योधनो [1]हृषीकेश सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ८

पुरा प्रसन्नाः कुरवस् सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानास्सबान्धवाः ॥ ९

दुर्योधनस्य क्रोधस्तु भारतान् मधुसूदन ।
धक्ष्यते शिशिरापाये वनानीव हुताशनः ॥ १०

अष्टादशेमे राजानः प्रख्याता मधुसूदन ।
ये समुच्चिच्छिदुर्ज्ञातीन् सुहृदश्च सबान्धवान् ॥ ११

असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते कलिरजायत ॥ १२

हैहयानामुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ १३

अजबिन्दुस्सुवीराणां सुराष्ट्राणां कुशर्द्धिकः ।
[3]अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ १४

हयग्रीवो विदेहानां वरयुश्च महौजसाम् ।
बाहुस्सुन्दरवेगानां दीप्ताक्षाणां पुरूरवाः ॥ १५

---

1. अ-क—हि यत्सेनः । 2. ख-घ-ङ-म-मा—बलि ।
3. ख-ग-घ-ङ-मा—अजकश्च । म—अरजश्च ।

सहजश्चेदिमत्स्यानां [1]प्रवीराणां वृषध्वजः ।
धारणश्चेन्द्रवत्सानां करन्धानां विगाहनः ॥ १६
शमश्च नन्दिवेगानाम् इत्येते कुलपांसनाः ॥ १६॥
युगान्ते कृष्ण सम्भूताः कुलेषु पुरुषाधमाः ॥ १७
अप्ययं नः कुरूणां स्याद् युगान्ते कालसम्भृतः ।
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ॥ १८
तस्मान्मृदु शनै [2]र्ब्रूया धर्मार्थसहितं हितम् ।
कामानुबन्धबहुलं नोग्रमुग्र[3]पराक्रम ॥ १९
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः ।
नीचैर्भूत्वाऽनुयास्यामो मा स्म नो भरता नशन् ॥ २०
अप्युदासीनवृत्तिस्स्याद् यथा नः कुरुभिस्सह ।
वासुदेव तथा कार्यं न कुरूननयस्स्पृशेत् ॥ २१
वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः ।
भ्रातॄणामस्तु सौभ्रात्रं धार्तराष्ट्रः प्रशाम्यताम् ॥ २२
अहमेतद्ब्रवीम्येवं राजा चैवं प्रशाम्यति ।
अर्जुनो नैव युद्धार्थी भूयसी हि दयाऽर्जुने ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ५४ ॥ भगवद्यानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

1. ग—वृखादानां वृषोच्चह ? । ख-घ-ङ-म—प्रखादानां वृषोद्वहः । मा—प्रवादानां वृषोद्वहः ।
2. ख-ग-घ-ङ-म-मा—रेनं ब्रूया धर्मार्थसंहितम् ।
3. म-मा—पराक्रमम् ।

## ॥ अष्टषष्टितमोऽध्यायः ॥

श्रीकृष्णेन भीमं प्रति तत्प्रतिज्ञानुस्मारणपूर्वकं युद्धप्रोत्साहनम् ॥१॥

वैशम्पायनः—

[1]एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव ।
अभूतपूर्वं भीमस्य मार्दवोपहितं वचः ॥ १
गिरेरिव लघुत्वं तच् छीतत्वमिव पावके ।
मत्वा रामानुजश्शौरिश् शार्ङ्गधन्वा वृकोदरम् ॥ २
सन्तेजयंस्तदा वाग्भिर् मातरिश्वेव पावकम् ।
उवाच भीममासीनं कृपयाऽभिपरिप्लुतम् ॥ ३

श्रीभगवान्—

[2]त्वमन्यदा भीमसेन युद्धमेव प्रशंससि ।
वधाभिनन्दिनः पापान् धार्तराष्ट्रान् निमर्दिषुः ॥ ४
न च स्वपिषि जागर्षि क्रुद्धश्शेषे परन्तप ।
घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ॥ ५
[3]विनिश्श्वसन्नग्निवर्णस् सन्तप्तस्स्वेन तेजसा ।
अप्रशान्तमना भीम सधूम इव पावकः ॥ ६

---

1. ग-घ-म—स तच्छ्रुत्वा ।
2. म—यस्त्वमेव सदा भीम । मा—यस्त्वां सदा युद्धमेव भीमसेन ।
   ग—ननु स त्वं सदा भीम । ख-घ-ङ—स त्वं सदा भीमसेन ।
3. अ-क—निश्वसन्नग्निवत् तेन सन्तप्तस्स्वेन मन्युना ।
   ख-ग-घ-मा—विनिश्श्वसन्नग्निवर्णस्सङ्क्रुद्धस्स्वेन तेजसा ।

एकान्ते निष्टनञ् शेषे भारार्त इव दुर्बलः ॥ ६॥
अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ॥ ७

[1]आरुज्य वृक्षान निर्मूलान् [2]गजः परिभवन्निव ।
निघ्नन् [3]पद्भिः क्षितिं भीम निष्टनन् प्रतिधावसि ॥ ८

नास्मिञ् [4]जनेऽभिरमसे रहः क्षिपसि पाण्डव ।
नाश्नन् निशि दिवा चापि कदाचिदभिनन्दसि ॥ ९

अस्वस्थोऽस्मयमानश्च रहस्यास्से रुदन्निव ।
[5]जान्वोर्मूर्धानमाधाय चिरमास्से प्रमीलितः ॥ १०

भ्रुकुटिं च पुनः कुर्वन्नोष्ठौ च विलिहन्निव ।
अभीक्ष्णं [6]दृश्यसे भीम सर्वं तन्मन्युकारितम् ॥ ११

यथा पुरस्तात् सविता दृश्यते शुक्रमुच्चरन् ।
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिमान् ॥ १२

तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः ।
हन्ताऽहं गदयाऽभ्येत्य दुर्योधनममर्षणम् ॥ १३

---

1. अ-क-ख-ग-घ—आरुह्य वृक्षान् निर्मूलान् ।
2. ख-ग-ङ-मा—भञ्जैः ।
3 ख-ग-ङ-म-मा—पद्भ्यां ।
4. अ—ञने भीमरसे रहः ।
ङ—जने रहः क्षिपसि पाण्डव । मा—जने रहः क्षीयसि पाण्डव ।
5. ख-ग-घ-ङ—अंसे मू । म—अधो मू । मा—अङ्कौ मू ।
6. अ-क-ग-घ—द्रक्ष्यसे ।

इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदाम् ॥ १३॥
तस्य ते प्रशमे बुद्धिर् धीयतेऽत्र परन्तप ॥ १४

अहो [1]युद्धाभिकाङ्क्षाणां युद्धकाल उपस्थिते ।
[2]चेतांसि विप्रतीपानि यत् त्वां भीरभिविन्दति ॥ १५

अहो पार्थ निमित्तानि विपरीतानि पश्यसि ।
स्वप्नान्ते जागरान्ते च तस्मात् प्रशममिच्छसि ॥ १६

[3]अहो नाशंससे किञ्चित् पुंस्त्वं क्लीब इवात्मनि ।
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ॥ १७

[4]तद्वेपते ते हृदयं मनस्ते प्रविषीदति ।
ऊरुस्तम्भगृहीतोऽसि तस्मात् प्रशममिच्छसि ॥ १८

अनित्यं किल मर्त्यस्य पार्थ चित्तं चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ १९

तवैषा विकृता बुद्धिर् गवां वागिव मानुषी ।
मनांसि पाण्डुपुत्राणां [5]मज्जयत्यप्लवेऽम्भसि ॥ २०

इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम् ।
यदीदृशं प्रभाषेथा भीमसेनासमं तव ॥ २१

---

1. ग-ब-ङ-म-मा—युद्धप्रतीपानि ।
2. ग-ब-ङ-म-मा—पश्यसे वा समृद्धानि न त्वं भीम विनिन्दति ।
म—न त्वा भीर्भीम विन्दति । [ पाठान्तरम् ]
3. मा—श्लोकद्वयं नास्ति 4. म—उद्वेपते ।
5. अ-क-ख-ब-ङ—मज्जयत्यप्लवानिव । म-मा—मज्जयस्यप्लवानिव ।

स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत ।
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव ॥ २२

न चैतदनुरूपं ते तेषु शान्तिररिन्दम ।
यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

॥ ५४ ॥ भगवद्यानपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ एकोनसप्ततितमोऽध्यायः ॥

---

भीमेन कृष्णं प्रति स्वसामर्थ्यकथनपूर्वकं स्वस्य शमकामनायाः कृपामूलकत्वकथनम् ॥१॥ श्रीकृष्णेन भीमं प्रति स्वस्य तन्महिमाभिज्ञत्वमभिधाय तत्प्रशंसनपूर्वकं स्वोक्तेस्तेजस्सन्दीपनार्थत्वकथनम् ॥ २ ॥

---

वैशम्पायनः—

तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः ।
सदश्ववत् [1]समाधावन् बभाषे तदनन्तरम् ॥ १

भीमः—

अन्यथा मां चिकीर्षन्तम् अन्यथा मन्यसेऽच्युत ।
प्रणीतभावमत्यर्थं युधि सत्यपराक्रमम् ॥ २

वेत्सि दाशार्ह स त्वं मे दीर्घकालं सहोषितः ।

---

1. म-मा—समाधाय ।

उत वा मां न जानासि प्लवन् ह्रद इवाप्लवः ॥ ३

तस्मादनभिरूपाभिर् वाग्भिर्मां त्वं समार्च्छसि ॥ ३॥

कथं हि भीमसेनं मां जानन् कश्चन माधव ।
ब्रूयादप्रियरूपाणि यथा मां वक्तुमर्हसि॥ ४॥

तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन ॥ ५

आत्मनः पौरुषं चैव बलं च न समं परैः ॥ ५॥

सर्वथाऽनार्यकर्मैतत् प्रशंसा स्वयमात्मनः ।
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ॥ ६॥

पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः ।
अचले चाप्रतिष्ठे चाप्यनन्ते सर्वमातरौ ॥ ७॥

यदीमे सहसा क्रुद्धे समेयातां शिले इव ।
अहमेते निगृह्णीयां बाहुभ्यां सचराचरे ॥ ८॥

पश्यैतदन्तरं बाह्वोर् महापरिघयोरिव ।
य एतौ प्राप्य मुच्येत न तं पश्यामि पूरुषम् ॥ ९॥

हिमवांश्च समुद्रश्च वज्री वा बलभित् स्वयम् ।
मयाऽभिपन्नं त्रायेरन् बलमास्थाय न त्रयः ॥ १०॥

[1]युद्धार्हान् क्षत्रियान् सर्वान् पाण्डवेष्वाततायिनः ।
अधः पादतलेनैतान् अधिष्ठास्यामि भूतले ॥ ११॥

---

1. म—युध्येऽहं । मा—युद्धेऽहं ।

न हि त्वं नाभिजानासि मम विक्रममच्युत ।
यथा मया विनिर्जित्य राजानो वशगाः कृताः ॥ १२॥

अथ चेन्मां न जानासि यथा सूर्यमिवोदितम् ।
विगाढे युधि सम्बाधे वेत्स्यसे मां जनार्दन ॥ १३॥

किं माऽत्यधाक्षीः परुषैः व्रणं सूच्येव चानघ ।
यथामति ब्रवीम्येतद् विद्धि मामधिकं ततः । १४॥

द्रष्टासि युधि सम्बाधे प्रवृत्ते वैशसेऽहनि ।
मया प्रणुन्नान् मातङ्गान् रथिनस्सादिनस्तथा । १५॥

तथाऽन्तकमिव क्रुद्धं निघ्नन्तं क्षत्रियर्षभान् ।
द्रष्टा मां त्वं च लोकश्च निकर्षन्तं परान् वरान् ॥ १६॥

न मे सीदन्ति गात्राणि न ममोद्विपते मनः ।
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम । १७॥

किं तु सौहृदमेवैतत् कृपया मधुसूदन ।
सर्वांस्तितिक्षे सङ्क्लेशान् मा स्म नो भरता नशन्* ॥ १८॥

श्रीभगवान्—

भावं [1]जिज्ञासमानोऽहं प्रणयादिदमब्रवम् ।
[2]न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ १९॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

1. ख-ग-ङ—जिज्ञासया पार्थ । म-मा—भावजिज्ञासया पार्थ ।

2. ख-ग-ङ—नाधिक्षेपान्न । म-म—नावक्षेपान्न ।
मा—नावक्षेपान्न कार्पण्यान्न ।

वेदाहं तव माहात्म्यम् उत ते वेदयद्बलम् ।
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ २०॥

[1]यदा चात्मनि कल्याणं सम्भावयसि पाण्डव ।
सहस्रगुणमप्येतत् त्वयि सम्भावयाम्यहम् ॥ २१॥

यादृशे च कुले जन्म सर्वराजाभिपूजिते ।
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ॥ २२॥

[2]जिज्ञासन्तो हि धर्मस्य सन्दिग्धस्य वृकोदर ।
पर्यायं न व्यवस्यन्ति देवमानुषयोर्जनाः ॥ २३॥

य एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।
विनाशेऽपि स एवास्य सन्दिग्धं कर्म पौरुषम् ॥ २४॥

अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ २५॥

सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ २६॥

[3-4]तथा दैवकृतं कर्म पौरुषेण विहन्यते ।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ २७॥

---

1. ङ-म—श्लोकोऽयं नास्ति ।
2. ग-घ-ङ—किं नु पर्याय । ख-म-मा—किं तु पर्याय ।
3. ख-व—तथा देवकृतं ।
   अ-क-ग—दैवमप्यकृतं कर्म पौरुषेण विहन्यते ।
4. म—इदमर्धं नास्ति

यदन्यद्दिष्टभावस्य पुरुषस्य स्वयं कृतम् ।
तस्मादनुपरोधश्च [1]विद्यते तत्र लक्षणम् ॥ २८॥

लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।
एवं बुद्धिः प्रवर्तेत फलं स्यादुभयान्वयात् ॥ २९॥

य एवं कृतबुद्धिस्सन् कर्मस्वेव प्रवर्तते ।
नासिद्धौ व्यथते किञ्चित् न सिद्धौ हर्षमश्नुते ॥ ३०॥

यत्रेयमर्थमात्रा ते भीमसेन विवक्षिता ।
नैकान्तासिद्धि[2]र्वक्तव्या शत्रुभिस्सह संयुगे ॥ ३१॥

नातिप्रणीतबुद्धिस्स्यात् तथाभावविपर्यये ।
विषादमृच्छेद् ग्लानिं वाऽप्येतमर्थं ब्रवीमि ते ॥ ३२॥

[3]श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव ।
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् ॥ ३३॥

शमं चेत् ते करिष्यन्ति ततोऽनन्तं यशो मम ।
भवतां च कृतः कामस् तेषां च श्रेय उत्तमम् ॥ ३४॥

ते चेदभिनि[4]वेक्ष्यन्ते [5]नाभ्युपेष्यन्ति मद्वचः ।
कुरवो युद्धमेवात्र घोरं कर्म भविष्यति ॥ ३५॥

---

1. ख—भिद्यते 2. ङ-म-मा—र्मन्तव्या ।
3. ख—इतः श्लोकद्वयं नास्ति
4. म—वेक्ष्यन्ति । मा—योक्ष्यन्ति ।
5. ग—नाप्युपेक्ष्यन्ति । ख-व-म-मा—नाप्युपेक्षन्ति ।

अस्मिन् युद्धे भीमसेन त्वयि भारस्समाहितः ।
धूरर्जुनेन धार्या स्याद् वोढव्य इतरो जनः ॥ ३६॥

अहं हि यन्ता बीभत्सोर् भविता संयुगे सति ।
धनञ्जयस्यैष कामो न हि युद्धं न कामये ॥ ३७॥

तस्मा[1]दाशङ्कमानोऽहं वृकोदर मतिं तव ।
[2]तुदन्नक्लीवया वाचा तेजस्ते समदीपयम् ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

॥ ५४ ॥ भगवद्यानपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये ३८॥ श्लोकाः ]

---

## ॥ सप्ततितमोऽध्यायः ॥

अर्जुनेन सन्धिविग्रहपक्षौ प्रस्तुत्य श्रीकृष्णं प्रति यथारुचि अन्यतर-पक्षनिर्धारणकरणप्रार्थना ॥ १ ॥

---

अर्जुनः—

उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परन्तप ॥ १

नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।

---

1. ब-ङ-म-मा—दाशंसमानो ।
2. अ-क-ग—गदतः क्लीबया ।

लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा [1]समुपस्थितम् ॥ २

अफलं मन्यसे चापि पुरुषस्य पराक्रमम् ।
न चान्तरेण कर्माणि पौरुषेण फलोदयः ॥ ३

[2]यदिदं भाषितं वाक्यं तथैव न तथैव च ।
न चैतदेवं द्रष्टव्यम् असाध्यमिति किञ्चन ॥ ४

किं चैतन्मन्यसे कृच्छ्रम् अस्माकमुपपादितम् ।
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ॥ ५

सम्पाद्यमानं सम्यक् स्यात् तत् कर्म सफलं प्रभो ।
स तथा कृष्ण वर्तस्व यथा शर्म भवेत् परैः ॥ ६

पाण्डवानां कुरूणां च [3]भवान् परमकस्सुहृत् ।
सुराणामसुराणां च यथा वीर प्रजापतिः ॥ ७

कुरूणां पाण्डवानां च प्रविधत्स्व निरामयम् ।
अस्मद्धितमनुष्ठातुं न मन्ये तव दुष्करम् ॥ ८

एवं चेत् कार्यतामेति कार्यं तव जनार्दन ।
[4]गमनादेकमेव त्वं करिष्यसि जनार्दन ॥ ९

चिकीर्षितमथान्यत् ते तस्मिन् वीर दुरात्मनि ।

---

1. अ-क-ख—समुपस्थितात् ।
2. अ—श्लोकद्वयं नास्ति 3. अ-क-ख-ग-घ—भवांश्च प्रथम ।
4. ख-ग-म-मा—गमनं चैवमेव त्वं करिष्यसि न संशयः ।
घ-ङ—गमनादेव शर्म त्वं करिष्यसि न संशयः ।

भविष्यति च तत् सर्वं यथा तव चिकीर्षितम् ॥ १०

शर्म तैस्सह वा नोऽस्तु तव वा यच्चिकीर्षितम् ।
विचार्यमाणो यः कामस् तव कृष्ण स नो गुरुः ॥ ११

न स नार्हति दुष्टात्मा वधं ससुतबान्धवः ।
येन धर्मसुते दृष्ट्वा न सा श्रीरुपमर्षिता ॥ १२

न्यायेनापश्यतोपायं धर्मिष्ठं मधुसूदन ।
उपायेन नृशंसेन हृता दुर्द्यूतदेविना ॥ १३

कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः ।
समाहूतो निवर्तेत प्राणत्यागेऽपि पण्डितः ॥ १४

अधर्मेण जितान् दृष्ट्वा वने प्रव्रजितांस्तथा ।
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ॥ १५

न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि ।
क्रियतां तत्तु मुख्यं स्यान्मृदुना चेतरेण वा ॥ १६

अथवा मन्यसे ज्यायान् वधस्तेषामनन्तरम् ।
तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ १७

जानासि हि यथा तेन द्रौपदी पापबुद्धिना ।
परिक्लिष्टा सभामध्ये तच्च तस्योपमर्षितम् ॥ १८

स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव ।
न मे सञ्जायते बुद्धिर् बीजमुप्तमिवोषरे ॥ १९

तस्माद्यन्मन्यसे युक्तं पाण्डवानां हितं च यत् ।
तदाशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ५४ ॥ भगवद्यानपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ एकसप्ततितमोऽध्यायः ॥

श्रीकृष्णेन अर्जुनं प्रति दण्डार्हे सुयोधने शमकरणस्य दुश्शकत्वाभिधानपूर्वकं युधिष्ठिरगौरवेण स्वस्य तदर्थं प्रयतनकथनम् ॥ १ ॥

---

श्रीभगवान्—

एवमेतन्महाबाहो यथा वदसि पाण्डव ।
[1]सर्वं त्विदं समायत्तं बीभत्सो कर्मणोर्द्वयोः ॥ १

क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितम् ।
ऋते वर्षान्न कौन्तेय जातु निर्वर्तयेत् फलम् ॥ २

तत्र वै पौरुषं ब्रूयुर् आसेकं [2]यत्न कारितम् ।
तत्र चापि ध्रुवं पश्येच् छोषणं दैवकारितम् ॥ ३

---

1. अ-क-ग—पाण्डवानां कुरूणां च प्रतिपत्स्ये निरामयम् । [अधिकः पाठः]

2. ख-ग-ङ-म-मा—यत्न ।

तदिदं निश्चितं बुद्ध्वा पूर्वैरपि महात्मभिः ।
दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ ४

अहं हि तत् करिष्यामि परं पुरुषकारतः ।
दैवं तु न मया शक्यं कर्म कर्तुं कथञ्चन ॥ ५

स हि धर्मं च सत्यं च त्यक्त्वा चरति दुर्मतिः ।
न हि सन्तप्यते तेन [1]तथारूपेण कर्मणा ॥ ६

तां चापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः ।
शकुनिस्सूतपुत्रश्च भ्राता दुश्शासनस्तथा ॥ ७

[2]स हि त्यागेन राज्यस्य [3]न शमं समुपैष्यति ।
अन्तरेण वधं पार्थ सानुबन्धस्सुयोधनः ॥ ८

न चापि प्रणिपातेन त्यक्तुमिच्छति धर्महा ।
याच्यमानश्च राज्यं स न प्रदास्यति दुर्मतिः ॥ ९

न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम् ।
उक्तं प्रयोजनं यत्तु धर्मराजेन भारत ॥ १०

तथा पापस्तु तत् सर्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो भविष्यति ॥ ११

मम चापि स वध्यो हि जगतश्चापि भारत ।

1. अ-क-ग-घ-ङ—यथा ।
2. ख-घ-ङ—न ।
3 ख-घ-ङ—प्रशमं । म-मा—न समं शममेष्यति ।

येन कौमारके यूयं सर्वे विप्रकृतास्तदा ॥ १२

[1]विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापश्श्रियं दृष्ट्वा युधिष्ठिरे ॥ १३

असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः ।
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् ॥ १४

जानासि हि महाबाहो त्वमप्यस्य परं मतम् ।
प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि ॥ १५

[2]स जानन्नपि चात्मानं मम चैव परं मतम् ।
अजानन्निव [3]मां कस्माद् अर्जुनाद्याभिशङ्कसे ॥ १६

यच्चापि परमं दिव्यं तदप्यवगतं मया ।
विधानविहितं पार्थ कथं शर्म भवेत् परैः ॥ १७

यत्तु वाचा मया शक्यं कर्मणा वाऽपि पाण्डव ।
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः ॥ १८

कथं गोग्रहणे ब्रूयादिच्छञ्शर्म तथा चिरम् ।
याच्यमानेऽपि भीष्मेण संवत्सरगतेऽहनि ॥ १९

---

1. ग—विप्रयुक्तं च ते । घ-ङ—विप्रलब्धं च वो ।
2. अ-क-ख-ग-घ—स जानंस्तस्य चात्मानं ।
3. मा—चाकस्मादर्जुनाभ्यति । ग—चाकस्मादर्जुनं ह्यति ।
ख-घ-ङ-म—चात्मानमर्जुन ह्यति ।

तथैव ते पराभूता यथा सङ्कल्पितास्त्वया ।
लवशः कणशश्चैव न सन्तुष्टस्सुयोधनः ॥ २०

सर्वथा तु मया कार्यं धर्मराजस्य शासनम् ।
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ५४ ॥ भगवद्यानपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ द्वासप्ततितमोऽध्यायः ॥

नकुलेन श्रीकृष्णं प्रति स्वस्य शमे अभिसन्धिप्रदर्शनपूर्वकं सन्धिकरणस्य तेन सुशकत्वाभिधानम् ॥१॥ सहदेवेन श्रीकृष्णं प्रति कुरूणां शमाभिसन्धावपि युद्धपक्षस्यैव स्थापनकथनम् ॥ २ ॥ सात्यकिना सहदेवपक्षानुमोदने योधानां हर्षात् सिंहनादः ॥ ३ ॥

---

नकुलः—

उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
धर्मज्ञेन वदान्येन धर्मयुक्तं च तत्वतः ॥ १

मतमाज्ञाय राज्ञश्च भीमसेनेन माधव ।
शंस मे बाहुवीर्यं च ख्यापितं माधवात्मनः ॥ २

तथैव फल्गुनेनापि यदुक्तं तत् त्वया श्रुतम् ।

आत्मनश्च मतं वीर कथितं भवताऽसकृत् ॥ ३

सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान् ।
यत् प्राप्तकालं मन्येथास् [1]तत् कुर्याः पुरुषोत्तम ॥ ४

तस्मिंस्तस्मिन् निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण स्वयं कार्यमरिन्दम ॥ ५

अन्यथा [2]चिन्तितो ह्यर्थःपुनर्भवति सोऽन्यथा ।
अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ६

अन्यथाबुद्धयो ह्यासन्नस्मासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ७

अस्माकमपि वार्ष्णेय वने विचरतां तदा ।
न तथा प्रणयो राज्ये यथा सम्प्रति वर्तते ॥ ८

निवृत्तवनवासान् नश् श्रुत्वा वीर समागताः ।
अक्षौहिण्यो हि सप्तेमास् त्वत्प्रसादाज्जनार्दन ॥ ९

इमान् हि पुरुषव्याघ्रान् अचिन्त्यबलपौरुषान् ।
आत्तशस्त्रान् रणे दृष्ट्वा न व्यथेदिह कः पुमान् ॥ १०

स भवान् कुरुमध्ये तं सान्त्वपूर्वं [3]भयोत्तरम् ।

---

1. म—तत् कार्यं ।　　मा—मन्येत तत् कार्यं ।
2. ङ-म-मा—चरितोऽप्यर्थः ।
3. म—भवद्धितम् ।　ग—दयान्वितम् ।　ख-व-ङ—भयान्वितम्
मा—भवान्वितम् ।

ब्रूयाद्वाक्यं यथाऽसक्तो न व्यथेत सुयोधनः ॥　　११

युधिष्ठिरं भीमसेनं बीभत्सुं चापराजितम् ।
सहदेवं च मां चैव त्वां च रामं च केशव ॥　　१२

सात्यकिं च महावीर्यं विराटं च सहात्मजम् ।
द्रुपदं च सहामात्यं धृष्टद्युम्नं च पार्षतम् ॥　　१३

काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम् ।
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि ॥　　१४

स भवान् गमनादेव साधयिष्यत्यसंशयम् ।
इष्टमर्थं महाबाहो धर्मराजस्य केवलम् ॥　　१५

विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः ।
श्रेयस्समर्था विज्ञातुम् उच्यमानास्त्वयाऽनघ ॥　　१६

ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् ।
तं च पापसमाचारं सहामात्यं सुयोधनम् ॥　　१७

श्रोता चार्थस्य विदुरस् त्वं च वक्ता जनार्दन ।
कमिवार्थं [1]निवर्तन्तं स्थापयेथा न वर्त्मनि* ॥　　१८

सहदेवः—

यदेतत् कथितं राज्ञा धर्म एष सनातनः ।

---

1. घ-ङ-मा—विवर्त्मस्थं ।　　ख—विमार्गस्थं ।　　म—न वर्त्मस्थं ।
* अ-क-ग-घ-ङ-म-मा—अत्रैवाध्यायसमाप्तिर्दृश्यते ।

[1]यथा च युद्धमेव स्यात् तथा कार्यमरिन्दम ॥ १९

यदि प्रशममिच्छेयुः कुरवः पाण्डवैस्सह ।
तथाऽपि युद्धं दाशार्ह योजयेथास्सहैव तैः ॥ २०

कथं तु दृष्ट्वा पाञ्चालीं [2]तथा क्लिष्टां सभागताम् ।
अवधेन प्रशाम्येत मम मन्युस्सुयोधने ॥ २१

यदि भीमार्जुनौ कृष्ण धर्मराज[3]श्च धार्मिकः ।
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ॥ २२

ब्रूहि मद्वचनं कृष्ण सुयोधनमधार्मिकम् ।
कृच्छ्रे वने वा वस्तव्यं पुरे वा नागसाह्वये ॥ २३

सात्यकिः—

सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस् तस्य कोपस्य मे भवेत् ॥ २४

न जानासि यथा दृष्ट्वा चीराजिनधरान् वने ।
तवापि मन्युरुद्भूतो दुःखितान् प्रेक्ष्य पाण्डवान् ॥ २५

तस्मान्माद्रीसुतश्शूरो यदाह पुरुषर्षभ ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ २६

1. ग-घ-ङ—तथा न साध्य एव स्याद् यथाक्रममरिन्दम ।
म-मा—तथा तु साध्य एव स्याद् यथाकाममरिन्दम । [पाठान्तरम्]
2. अ-क-ग—तथा कृष्णां
3. म-मा—मपण्डितम् । ङ—श्च धार्मिकम् ।

वैशम्पायनः—

एवं वदति वाक्यं तु युयुधाने महामतौ ।
सुभीमस्सिंहनादोऽभूद् योधानां तत्र सर्वशः ॥ २७

सर्वे हि सर्वशो वीरास् तद्वचः प्रत्यपूजयन् ।
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

॥ ५४ ॥ भगवद्यानपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ त्रिसप्ततितमोऽध्यायः ॥

---

श्रीकृष्णेन द्यूतसभायां स्वानुभूतदुस्सहदुःखमभिनिवेद्य रुदन्तीं द्रौपदीं प्रति सुयोधनादिनिधनप्रतिज्ञानपूर्वकं समाश्वासनम् ॥ १ ॥

---

वैशम्पायनः—

राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनम् अब्रवीच्छोककर्शिता ॥ १

सुता द्रुपदराजस्य स्वञ्चितायतमूर्धजा ।
सम्पूज्य सहदेवं च सात्यकिं च महारथम् ॥ २

भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यम् उवाचेदं मनस्विनी ॥ ३

द्रौपदी—

विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवास्सुखात् ॥ ४

धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ५

युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव ।
यथोक्तस्सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ॥ ६

पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
कुशस्थलं वृकस्थलं वासन्तीं वारणावतम् ॥ ७

अवसा[1]नं महाबाहो किञ्चिदेकं च पञ्चमम् ।
इति दुर्योधनो वाच्यस् सुहृदश्चास्य केशव ॥ ८

न चापि ह्यकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः ।
[2]युधिष्ठिरस्य दाशार्ह श्रीमतस्सन्धिमिच्छतः ॥ ९

अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
सन्धिमिच्छेन्न कर्तव्यं तत्र गत्वा कथञ्चन ॥ १०

शक्ष्यन्ति हि महाबाहो [3]पाण्डवास्सृञ्जयैस्सह ।
[4]धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ११

---

1. मा—ने च गोविन्द किञ्चिदेव तु । ग-ङ-म—तु गोविन्द कञ्चि ।
2. मा—अर्धद्वयं नास्ति
3. ग-घ-ङ-म-मा—विनाशे पाण्डवास्सह ।
4. ख—इतः सार्धं श्लोकत्रयं नास्ति

न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन ।
तस्मात् तेषु न कर्तव्या कृपा ते मधुसूदन ॥ १२

साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
क्षेप्तव्यास्ते तु दण्डेन जीवितं परिरक्षता ॥ १३

तस्मात् तेषु महान् दण्डः क्षेप्तव्यः क्षिप्रमच्युत ।
त्वया चैव महाबाहो पाण्डवैस्सह सृञ्जयैः ॥ १४

एतत् समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत् कृष्ण क्षत्रस्य च सुखावहम् ॥ १५

क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ १६

अन्यत्र ब्राह्मणात् तात सर्वपापेष्ववस्थितात् ।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ १७

यथाऽवध्ये भवेद्दोषो वध्यमाने जनार्दन ।
[1]स वध्यस्यावधे दोष इति धर्मविदो विदुः ॥ १८

यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ।
पाण्डवैस्सह दाशार्ह सृञ्जयैश्च महारथैः ॥ १९

पुनरुक्तं च वक्ष्यामि विस्रम्भेण जनार्दन ।
का नु सीमन्तिनी मादृक् पृथिव्यामस्ति केशव ॥ २०

1. अ-क—श्लोकद्वयं नास्ति

सुता द्रुपदराजस्य वेदिमध्यात् समुत्थिता ।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ २१

आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः ।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ २२

सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः ।
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ २३

साऽहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता ।
[1]पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ २४

जीवत्सु [2]पाण्डुपुत्रेषु पञ्चालेष्वथ वृष्णिषु ।
दासीभूताऽस्मि पापानां सभामध्ये व्यवस्थिता ॥ २५

निरमर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु ।
पाहि मामिति गोविन्द मनसा [3]चिन्तितोऽसि मे ॥ २६

यत्र मां भगवान् राजा श्वशुरो वाक्यमब्रवीत् ।
वरं वृणीष्व पाञ्चालि वरार्हाऽसि मता मम ॥ २७

अदासाः पाण्डवास्सन्तु सरथास्सायुधा इति ।
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ २८

एवं विधानां दुःखानाम् अभिज्ञोऽसि जनार्दन ।

---

1. अ-क-ख-ग—इदमर्धं नास्ति
2. ब-ङ-म-मा—कौरवेयेषु । 3. ङ-म-मा—काङ्क्षितोऽसि ।

[1]त्रायस्व पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवाम् ॥ २९

नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साऽहं दासीकृताऽभवम् ॥ ३०

[2]धिक् पार्थस्य धनुष्मत्तां भीमसेनस्य धिग्बलम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ३१

यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि ।
धार्तराष्ट्रेषु वै कोपस् सर्वः कृष्ण विधीयताम् ॥ ३२

**वैशम्पायनः—**

इत्युक्त्वा मृदुसंहारम् [3]अञ्चिताग्रं सुदर्शनम् ।
सुनीलमसितापाङ्गी [4]सर्वगन्धाधिवासितम् ॥ ३३

सर्वलक्षणसम्पन्नं महाभुजगवर्चसम् ।
केशपक्षं वरारोहा गृह्य सव्येन पाणिना ॥ ३४

पद्माक्षी पुण्डरीकाक्षम् उपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ३५

**द्रौपदी—**

अयं ते पुण्डरीकाक्ष दुश्शासनकरोद्धृतः ।

---

1. ङ-म-मा—त्राहि मां।
2. म-मा—धिग्बलं भीमसेनस्य धिक् पार्थस्य धनुष्मताम्। [पाठान्तरम्]
3. अ-क-ख-म-मा—वृजिनाग्रं
4. ख-ब-ङ-म-मा—पुण्य।

स्मर्तव्य[1]स्सर्वकालेषु परेषां सन्धिमिच्छताम् ॥ ३६

[2]यदि भीमार्जुनौ कृष्ण कृपणौ सन्धिकामुकौ ।
पिता मे योत्स्यते वृद्धस् सह पुत्रैर्महारथैः ॥ ३७

पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन ।
अभिमन्युं पुरस्कृत्य योत्स्यन्ते कुरुभिस्सह ॥ ३८

दुश्शासनभुजं श्यामं सञ्छिन्नं पांसुकुण्ठितम् ।
यद्यहं तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ ३९

त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
निधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ ४०

विदीर्यते मे हृदयं भीमवाक्छल्यपीडितम् ।
योऽयमद्य महाबाहुर् धर्मं समनुपश्यति ॥ ४१

वैशम्पायनः—

इत्युक्त्वा बाष्पसन्नेन कण्ठेनायतलोचना ।
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ॥ ४२

स्तनौ पीणायतश्रोणी सहिताविभिवर्षती ।
द्रवीभूतमिवात्युष्णं मुञ्चन्ती वारि नेत्रजम् ॥ ४३

तामुवाच महाबाहुः केशवः परिसान्त्वयन् ॥ ४३॥

1. अ-क—:पुण्डरीकाक्ष ङ-म—स्सर्वलोकेषु ।
2. ख—इतः सार्धः श्लोको नास्ति ।

श्रीभगवान्—

अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ४४

एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः ।
हतमित्रा हतबला येषां क्रुद्धाऽसि भामिनी ॥ ४५

अहं च तत् करिष्यामि भीमार्जुनयमैस्सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितान् ॥ ४६

धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वसृगालादनीकृताः ॥ ४७

चलेद्धि हिमवान् शैलो मेदिनी शकलीभवेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ४८

[1]शुष्येत् तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ ४८॥

सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्रान् श्रिया युक्तान् अचिराद्द्रक्ष्यसे पतीन् ॥ ४९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

॥ ५४ ॥ भगवद्यानपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये ४९॥ श्लोकाः]

---

1. अ-क-ख-म-मा—इदमर्धं नास्ति
ग—द्यौः पतेद् पृथिवी शीर्येद्धिमवाञ्शिथिलीभवेत्। [पाठान्तरम्]

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

युधिष्ठिरादिभिरनुगम्यमानस्य श्रीकृष्णस्य रथमधिरुह्य सात्यकिना सह हास्तिनपुरं प्रति प्रस्थानम् ॥ १ ॥ युधिष्ठिरेण श्रीकृष्णे पृथां प्रति कुशलप्रश्नपूर्वकस्वाभिवादननिवेदनसमाश्वासनप्रार्थना ॥ २ ॥ श्रीकृष्णस्य मध्येमार्गं जामदग्न्यादिमहर्षिसमागमः ॥ ३ ॥ महर्षिभिः श्रीकृष्णे धृतराष्ट्रादिभिस्सह तत्संवादशुश्रूषया तत्र स्वागमननिवेदनम् ॥ ४ ॥

युधिष्ठिरः—

कुरूणामिह सर्वेषां भवान् सुहृदनुत्तमः ।
सम्बन्धी दयितो नित्यम् उभयोः पक्षयोस्तथा ॥ १

पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम् ।
समर्थः प्रशमं चैषां कर्तुमर्हसि केशव ॥ २

त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम् ।
शान्त्यर्थं भ्रातरं ब्रूया यद्वाच्यमिह शत्रुहन् ॥ ३

त्वया धर्मार्थयुक्तं चेद् उक्तं शिवमनामयम् ।
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४

श्रीभगवान्—

धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम् ।
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ५

वैशम्पायनः—

ततो व्यपेते तमसि सूर्ये विमल उद्गते ।

मैत्रे मुहूर्ते सम्प्राप्ते ऋद्धार्चिषि दिवाकरे ॥ ६

कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यमुखे काले कल्यस्सत्ववतां वरः ॥ ७

मङ्गल्याः पुण्यनिर्घोषा वाचश्शृण्वंश्च सूनृताः ।
ब्राह्मणानां प्रतीतानाम् ऋषीणामिव वासवः ॥ ८

कृत्वा पौर्वाह्णिकं कृत्यं स्नातश्शुचिरलङ्कृतः ।
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ॥ ९

वृषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
अग्निं प्रदक्षिणं कृत्वा पश्यन् कल्याणमग्रतः ॥ १०

तत् प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः ।
शिनेर्नप्तारमासीनम् अभ्यभाषत सात्यकिम् ॥ ११

श्रीभगवान्—

रथ आरोप्यतां शङ्खश् चक्रं च गदया सह ।
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ १२

दुर्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः ।
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ॥ १३

वैशम्पायनः—

ततस्तन्मतमाज्ञाय केशवस्य पुरस्सराः ।
प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ १४

तं दीप्तमिव कालाग्निम् आकाशगमिवाध्वगम् ।
सूर्यचन्द्रप्रकाशाभ्यां चक्राभ्यां समलङ्कृतम् ॥ १५

अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैश्च मृगपक्षिभिः ।
पुष्पैश्च विविधैश्चित्रैर् मणिरत्नैश्च सर्वशः ॥ १६

तरुणादित्यसङ्काशं बृहन्तं चारुदर्शनम् ।
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ १७

सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम् ।
यशोघ्नं प्रत्यमित्राणां बन्धूनां नन्दिवर्धनम् ॥ १८

वाजिभिस्सैन्यसुग्रीवमेघपुष्पवलाहकैः ।
सूतस्सम्पादयाञ्चक्रे सम्पन्नैस्सर्वसम्पदा ॥ १९

महिमानं च कृष्णस्य भूय एवाभिवर्धयन् ।
सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ २०

तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम् ।
आरुरोह रथं शौरिर् विमानमिव पुण्यकृत् ॥ २१

ततस्सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ २२

व्यपेताभ्रघनः कालः क्षणेन समजायत ।
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ २३

प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः ।

प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ २४

मङ्गल्यार्थप्रदैश्शब्दैर् अन्ववर्तन्त सर्वशः ।
सारसाश्शतपत्राश्च हंसाश्च मधुसूदनम् ॥ २५

मन्त्राहुतिमहाहोमैर् हूयमानश्च पावकः ।
प्रदक्षिणशिखो भूत्वा विधूमस्समपद्यत ॥ २६

वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः ।
[1]शुकनारदवाल्मीका मरुत्तः कुशिको भृगुः ॥ २७

देवब्रह्मर्षयश्चैव कृष्णं यदुसुखावहम् ।
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् ॥ २८

एवमेतैर्महाभागैर् महर्षिगणसाधुभिः ।
पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ २९

देवताभ्यो नमस्कृत्य ब्राह्मणान् स्वस्ति वाच्य च ।
प्रययौ पुण्डरीकाक्षस् सात्यकेन सहाच्युतः ॥ ३०

तं प्रयान्तमनुप्रायात् कुन्तीपुत्रो युधिष्ठिरः ।
[2]भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ३१

चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः ।
द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ३२

---

1. ग-म-मा—शुक्रमारुत । ख-घ-ङ—शुकमारुत ।
2. ख—इतः श्लोकत्रयं नास्ति

धृष्टद्युम्नस्सपुत्रश्च विराटः केकयैस्सह ।
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ३३

ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः ।
राज्ञां सकाशे द्युतिमान् उवाचेदं वचस्तदा ॥ ३४

यो वै न कामान्न भयान्न लोभान्नार्थकारणात् ।
अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ॥ ३५

धर्मज्ञो धृतिमान् प्राज्ञस् सर्वभूतेषु केशवः ।
ईश्वरस्सर्वभूतानां देवदेवः प्रतापवान् ॥ ३६

तं सर्वगुणसम्पन्नं श्रीवत्सकृतलक्षणम् ।
सम्परिष्वज्य [1]कौन्तेयस् सन्देष्टुमुपचक्रमे ॥ ३७

युधिष्ठिरः

या सा बाल्यात्प्रभृत्यस्मान् पर्यवर्धयताबला ।
उपवासतपश्शीला गुरूणां पूजने रता ॥ ३८

देवतातिथिपूजासु भृत्यानां पोषणे रता ।
वत्सला प्रियपुत्रा च माताऽस्माकं जनार्दन ॥ ३९

सुयोधनभयाद्या नस् त्रापिताऽमित्रकर्शन ।
महतो मृत्युसम्बाधाद् दुस्तरान्नौरिवार्णवात् ॥ ४०

अस्मत्कृते च सततं यया दुःखानि माधव ।

1. म-मा—गोविन्दं ।

अनुभूतान्यदुःखार्हां तां स्म पृच्छेरनामयम् ॥ ४१

भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् ।
अभिवाद्य स्वजेथास्त्वं पाण्डवान परिकीर्तयन् ॥ ४२

[1]ऊधात्प्रभृति दुःखानि स्वसुतानामरिन्दम ।
निवासानऽतदर्हांश्च पश्यन्ती दुःखमश्नुते ॥ ४३

अपि जातु स कालस्स्यात् [2]कृष्णाहं भृशदुःखिताम् ।
[3]यदेनां मातरं क्लिष्टां सुखे दध्यामरिन्दम ॥ ४४

व्रजतो ह्यन्वधावत् सा कृपणा पुत्रगर्धिनी ।
रुदतीमपहायैनाम् अगच्छामैव यद्वनम् ॥ ४५

सा नूनं म्रियते दुःखैस् सा चेज्जीवति केशव ।
[4]पृथा पुत्राधिभिर्गाढम् आर्ता चानर्तसत्कृता ॥ ४६

अभिवाद्याऽथ सा कुन्ती त्वया मद्वचनाद्विभो ।
[5]सङ्क्षाम्याथ नमस्कार्या सर्वेषां वचनादपि ॥ ४७

धृतराष्ट्रं च कौरव्यं राजानं च वयोधिकम् ।
भीष्मं द्रोणं कृपं चैव महाराजं च वाह्लिकम् ॥ ४८

---

1. ख-ग-घ-ङ—दाहात्प्रभृति ।
2. अ-क-ख—कृष्ण दुःखविपर्ययः ।
3. ख—इतः सार्धश्लोको नास्ति
4. अ-क-ख—इदमर्धं नास्ति
   म—तथा पुत्राधिभिर्बाढमार्तां मचर्यसत्कृताम् ? ।
   मा—तथा पुत्राधिभिर्गाढमार्तामानर्च सत्कृताम् । [पाठान्तरम्]
5. मा—कोश एकस्मिन्नेवेदमर्धं वर्तते

द्रौणिं च सोमदत्तं च सर्वांश्च [1]भरतान् प्रति ।
[2]यथावयो यथास्थानं पूजयस्व जनार्दन ॥ ४९

विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम् ।
अगाधबुद्धिं धर्मज्ञं स्वजेथा मधुसूदन ॥ ५०

वैशम्पायनः—

इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः ।
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ५१

व्रजन्नेव तु बीभत्सुस् सखायं पुरुषर्षभम् ॥
अब्रवीत् परवीरघ्नं दाशार्हमपराजितम् ॥ ५२

अर्जुनः—

यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये ।
अर्धराज्यस्य गोविन्द विदितं सर्वराजसु ॥ ५३

तच्चेदद्युरसङ्गेन सत्कृत्यानवमत्य च ।
प्रियं मे स्यान्महाबाहो मुच्येरन् महतो भयात् ॥ ५४

अतश्चेदन्यथा कर्ता धार्तराष्ट्रोऽनुपायवित् ।
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ॥ ५५

वैशम्पायनः—

एवमुक्ते पाण्डवेन समहृष्यद्वृकोदरः ।

---

1. ग—भरतर्षभान् । ख—सर्वान् भरतसत्तमान् । ङ—भरतान् पृथक् । 2. ख-मा—नास्तीदमर्धम् ।

मुहुर्मुहुः क्रोधवशात् प्रावेपत च पाण्डवः ॥ ५६

वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान् ।
धनञ्जयवचश्श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ५७

तस्य तं निनदं श्रुत्वा सम्प्रावेपन्त धन्विनः।
वाहनानि च सर्वाणि शकृन्मूत्रे प्रसुस्रुवुः ॥ ५८

इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम् ।
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ॥ ५९

तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः ।
तूर्णमभ्यगमद्धृष्टस् सैन्यसुग्रीववाहनः ॥ ६०

ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ६१

अथापश्यन्महाबाहुर् ऋषीनध्वनि केशवः ।
ब्राह्मया श्रिया दीप्यमानान् स्थितानुभयतः पथि ॥ ६२

सोऽवतीर्य रथात् तूर्णम् अभिवाद्य जनार्दनः ।
यथावत् तानृषीन् सर्वान् अभ्यभाषत पूजयन् ॥ ६३

श्रीभगवान्—
कच्चिल्लोकेषु कुशलं कच्चिद्धर्मस्स्वनुष्ठितः ।
ब्राह्मणानां त्रयो वर्णाः कच्चित् तिष्ठन्ति शासने ॥ ६४

पितृदेवातिथिभ्यश्च कच्चित् पूजा स्वनुष्ठिता ॥ ६४॥

वैशम्पायनः—

[1]तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः ॥ ६५

श्रीभगवान्—

भगवन्तः क संसिद्धाः कोऽवधिर्भवतामिह ।
किं वा कार्यं भगवताम् अहं किं करवाणि वः ॥ ६६
केनार्थेनोपसम्प्राप्ता भगवन्तो महीतलम् ॥ ६६॥

वैशम्पायनः—

एवमुक्ताः केशवेन मुनयस्संशितव्रताः ।
नारदप्रमुखास्सर्वे प्रत्यनन्दन्त केशवम् ॥ ६७॥
अधश्शिरास्सर्पमाली महर्षिस्स हि देवलः ।
अर्वावसुस्सुजानुश्च मैत्रेयश्शुनको बली ॥ ६८॥
बको दाल्भ्यस्स्थूलशिराः कृष्णद्वैपायनस्तथा ।
आयोधधौम्यो धौम्यश्च आणिमाण्डव्यकौशिकौ ॥ ६९॥
दामोष्णीषस्त्रिषवणः पर्णादो घटजानुकः ।
मौञ्जायनो वायुभक्षः पाराशर्योऽथ शारिकः ॥ ७०॥
शीलवानशनिर्धाता शून्यपालोऽकृतव्रणः ।
श्वेतकेतुः कहोलश्च रामश्चैव महातपाः ॥ ७१॥
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् ।
परिष्वज्य च गोविन्दं पुराणचरिते सखा ॥ ७२॥

श्रीजामदग्न्यः—

देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः ।

1. ङ-म-मा—तेषां

राजर्षयश्च मानार्हं मानयन्ति तपस्विनः ॥ ७३॥

दैवासुरस्य द्रष्टारः पुराणाश्च महाद्युते ।
समेतं पार्थिवं क्षत्रं [1]दिदृक्षन्तश्च सर्वशः ॥ ७४॥

[2]सभासदश्च राजानस् त्वां च सत्यं जनार्दन ॥ ७५

[3]एतन्महत् प्रेक्षणीयं द्रष्टुं गच्छाम केशव ।
धर्मार्थसहिता वाचश् श्रोतुमिच्छाम माधव ॥ ७६

[4]त्वयोच्यमानाः कुरुषु राजमध्ये परन्तप ॥ ७६॥

सभायां मधुरा वाचश् शुश्रूषन्तस्त्वयेरिताः ।
कुरूणां प्रतिपत्तिं च श्रोतुमिच्छाम माधव ॥ ७७॥

भीष्मद्रोणादयश्चैव विदुरश्च महामतिः ।
त्वं च यादवशार्दूल सभायां वै समेष्यथ ॥ ७८॥

तव वाक्यानि सर्वाणि तथा तेषां च माधव ।
श्रोतुमिच्छाम गोविन्द सत्यानि च शुभानि च ॥ ७९॥

आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् ॥ ८०

याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम् ।
आसीनमासने दिव्ये ज्वलन्तं तेजसाऽच्युत ॥ ८१

---

1. ख-ग-घ-ङ-म—द्रष्टुमिच्छन्ति केशव। मा—द्रष्टुमर्हन्ति केशव।
2. घ-ङ—नास्तीदमर्धम्। 3. घ-ङ—नास्तीदमर्धम्
4. ख—इतः सार्धश्लोको नास्ति।

वैशम्पायनः—

[1]प्रयान्तं देवकीपुत्रं परवीररुजो दश । ८२
महारथा महाबाहुम् अन्वयुश्शस्त्रपाणयः ॥

पदातीनां सहस्रं च सादिनां च परन्तप ।
भोज्यं च विपुलं राजन् प्रेष्याश्च शतशोऽपरे ॥ ८३

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये ८२ श्लोकाः ]

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

श्रीकृष्णप्रयाणे कुरुपराजयसूचकदुर्निमित्तसमुत्पत्तिः ॥ १ ॥ श्रीकृष्णस्य शुभशकुनसमुदयः ॥ २ ॥ मार्गे तत्र तत्र विप्रगणाद्यभ्यर्चितस्य कृष्णस्य सायाह्ने वृकस्थलाभिगमनम् ॥ ३ ॥ तत्रत्यद्विजव्रजपूजितस्य कृष्णस्य तद्गृहगमनागमनपूर्वकं तान् भोजयित्वा तद्रजन्यां वृकस्थले सुखसंवासः ॥ ४ ॥ दूतैः श्रीकृष्णागमनं ज्ञातवतो धृतराष्ट्रस्याज्ञया दुर्योधनेन पथि तदाराधनाय तत्र तत्र सभानिर्मापणम् ॥ ५ ॥ श्रीकृष्णेन तदनवलोकेनैव गमनम् ॥ ६ ॥

जनमेजयः—

कथं प्रयातो दाशार्हो महात्मा मधुसूदनः । १
कानि वा व्रजतस्तस्य निमित्तानि महौजसः ॥

वैशम्पायनः—

तस्य प्रयाणे यान्यासन् निमित्तानि महात्मनः ।

1. अ-क-ख—कोशेषु श्लोकद्वयमिदमुपरितनाध्याये आदौ दृश्यते ।

तानि मे शृणु दिव्यानि दैवान्यौत्पातिकानि च ॥ २

अनभ्रेऽशनिनिर्घोषस् सविद्युत् समजायत ।
अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ॥ ३

प्रत्यगूहुर्महानद्यः प्राङ्मुखास्सिन्धुसत्तमाः ।
विपरीता दिशस्सर्वा न प्राज्ञायत किञ्चन ॥ ४

प्राज्वलन् नाग्नयो राजन् पृथिवी समकम्पत ।
उदपानाश्च कुम्भाश्च प्रासिञ्चन् शतशो जलम् ॥ ५

तमस्संवृतमप्यासीत् सर्वं जगदिदं तदा ।
न दिशो विदिशो राजन् प्रज्ञायन्ते स्म रेणुना ॥ ६

प्रादुरासीन्महान् छब्दः खे शरीरमदृश्यत ।
सर्वेषु राजन् देशेषु तदद्भुतमिवाभवत् ॥ ७

प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः ।
आरुजंस्तृणशो वृक्षान् परुषो भीमनिस्स्वनः ॥ ८

यत्र यत्र च वार्ष्णेयो वर्तते पथि भारत ।
तत्र तत्र सुखो वायुस् सर्वं चासीत् प्रदक्षिणम् ॥ ९

ववर्ष पुष्पवर्षं च कमलानि च भूरिशः ।
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः ॥ १०

सङ्गच्छन् ब्राह्मणै राजंस् तत्र तत्र महाभुजः ।

[1]अर्च्यते मधुपर्कैश्च वसुभिश्च वसुप्रदः ॥ ११

तं किरन्ति महात्मानं वन्यैः पुष्पैस्सुगन्धिभिः ।
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् ॥ १२

स शालिभवनं रम्यं सर्वसस्यसमाचितम् ।
सुखं परमधर्मिष्ठम् अत्यगान्मधुसूदनः ॥ १३

पश्यन् बहुपशून् ग्रामान् रम्यान् हृदयतोषणान् ।
पुराणि व्यतिचक्राम [2]राष्ट्राणि नगराणि ॥ १४

[3]नित्यं हृष्टास्सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्रेभ्यो ह्यनयानामकोविदाः ॥ १५

उपप्लाव्यादथागम्य जनाः पुरनिवासिनः ।
पथ्यातिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ १६

ते तु सर्वे सुनामानम् अग्निमिद्धमिव प्रभुम् ।
अर्चयामासुरर्चार्हं देशातिथिमुपस्थितम् ॥ १७

कुशस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये विमले लोहितायति ॥ १८

---

1. अ-क—तत्र तत्र सुखो वायुः सर्वं चासीत् प्रदक्षिणम् ।
ववर्ष पुष्पवर्षं च कमलानि च भूरिशः । [अधिकः पाठः]

2. ग-घ—सुखान् हृदयहर्षणान् ।
ख-ङ—सुखान् हृदयनन्दनान् । म—सुखान् ।

3. अ-क—अर्धद्वयं नास्ति

अवतीर्य रथात् तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य सन्ध्यामुपविवेश ह ॥　१९

दारुकोऽपि हयान् मुक्त्वा परिचर्य च शास्त्रतः ।
मुमोच सर्ववर्माणि मुक्त्वा चैतानवासृजत् ॥　२०

अभ्यतीत्य तु तत् सर्वं उवाच मधुसूदनः ॥　२०॥

श्रीभगवान्—

युधिष्ठिरस्य कार्यार्थम् इह वत्स्यामहे वयम् ॥　२१

वैशम्पायनः—

तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः ।
क्षणेन चान्नपानानि रसवन्ति समार्जयन् ॥　२२

तस्मिन् ग्रामे प्रधानास्तु य आसन् ब्राह्मणा नृप ।
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः ॥　२३

तेऽभिगम्य महात्मानं हृषीकेशमरिन्दमम् ।
पूजां चक्रुर्यथान्यायम् आशीर्मङ्गलसंयुतम् ॥　२४

ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि गुणवन्ति महान्ति च ॥　२५

तान् प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः ।
अभ्येत्य चैषां वेश्मानि पुनरायात् सहैव तैः ॥　२६

सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्त्वा च सह तैस्सर्वैर् अवसत् तां क्षपां सुखम् * ॥　२७

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तदा दूतैस्समाज्ञाय आयान्तं मधुसूदनम् ।
धृतराष्ट्रोऽब्रवीद् भीष्मम् अर्चयित्वा महाभुजम् ॥ २८

द्रोणं च सञ्जयं चैव विदुरं च महामतिम् ।
दुर्योधनं सहामात्यं हृष्टरोमाऽब्रवीदिदम् ॥ २९

धृतराष्ट्रः—

अद्भुतं महदाश्चर्यं श्रूयते कुरुनन्दन ।
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ॥ ३०

सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः ।
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ॥ ३१

उपायास्यति दाशार्हः पाण्डवार्थे पराक्रमी ।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ३२

तस्मिन् हि यात्रा लोकस्य भूतानामीश्वरो हि सः ।
तस्मिन् धृतिश्च वीर्यं च पूजा चौजश्च माधवे ॥ ३३

स मान्यतां नरश्रेष्ठस् स हि धर्मस्सनातनः ।
पूजितो हि सुखाय स्याद् [1]असुखस्स्यादपूजितः ॥ ३४

स चेत् तुष्यति दाशार्ह उपचारैररिन्दमः ।
कृष्णात् सर्वानभिप्रायान् वयं लप्स्यामहे नृषु ॥ ३५

तस्य पूजार्थमद्यैव संविधत्स्व परन्तप ।

1. घ-ङ—असुखायाप्यपूजितः ।

सभाः पथि विधीयन्तां सर्वकामसमन्विताः ॥ ३६

यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै ।
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ॥ ३७

**वैशम्पायनः—**

ततो भीष्मादयस्सर्वे धृतराष्ट्रं जनाधिपम् ।
ऊचुः परममित्येव पूजयन्तोऽस्य तद्वचः ॥ ३८

तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा ।
सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ॥ ३९

ततो देशेषु देशेषु रमणीयेषु भागशः ।
सर्वरत्नसमाकीर्णास् सभाश्चक्रुरनेकशः ॥ ४०

आसनानि विचित्राणि युतानि विविधैर्गुणैः ।
स्त्रियो गन्धानलङ्कारान् वासांसि विविधानि च ॥ ४१

गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ।
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः ॥ ४२

विशेषतश्च वासार्थं सभां ग्रामे कुशस्थले ।
विदधे कौरवो राजा बहुरत्नां मनोरमाम् ॥ ४३

एतद्विधाय वै सर्वं देवार्हमतिमानुषम् ।
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा ॥ ४४

तास्सभाः केशवस्सर्वा रत्नानि विविधानि च ।
असमीक्ष्यैव दाशार्ह उपायात् कुरुसद्म तत् ॥ ४५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

॥ ५४ ॥ भगवद्यानपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये ४५ श्लोकाः ]

---

## ॥ षट्सप्ततितमोऽध्यायः ॥

---

श्रीकृष्णागमनश्रवणहृष्टेन धृतराष्ट्रेण विदुरस्य सविधे समेष्यते तस्मै रथगजादिवितरणप्रतिज्ञा ॥ १ ॥ विदुरेण धृतराष्ट्रं प्रति कृष्णाय दानप्रतिज्ञायाः मृषात्वकथनम् ॥ २ ॥ तथा सामाद्युपायैः कृष्णस्य दुर्वशत्वकथनपूर्वकं तदुक्तिसत्कारविधानम् ॥ ३ ॥

---

धृतराष्ट्रः—

उपप्लाव्यादिह क्षत्तर् उपायातो जनार्दनः ।
कुशस्थले निवसति स च प्रातरिहैष्यति ॥ १

आहुकानामधिपतिः पुरोगस्सर्वसात्वताम् ।
महामना महावीर्यो महामात्रो जनार्दनः ॥ २

स्फीतस्य वृष्णिवंशस्य भर्ता गोप्ता च माधवः ।
त्रयाणामपि लोकानां भगवान् प्रपितामहः ॥ ३

वृष्ण्यन्धकास्सुमनसो यस्य प्रज्ञामुपासते ।

आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ४

तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय [1]महात्मने ।
प्रत्यक्षं तव धर्मज्ञ तन्मे कथयतश्शृणु ॥ ५

एकवर्णैः [2]सुकृष्णाङ्गैर् बाह्लिजातैर्हयोत्तमैः ।
चतुर्युक्तान् रथांस्तस्मै रौक्मान् दास्यामि षोडश ॥ ६

नित्यप्रभिन्नान् मातङ्गान् ईषादन्तान् प्रहारिणः ।
अष्टानुचरमेकैकम् अष्टौ दास्यामि केशवे ॥ ७

दासीनामप्रजातानां शुभानां रुक्मवर्चसाम् ।
शतमस्मै प्रदास्यामि दासानामपि तावताम् ॥ ८

[3]आविकं च सुखस्पर्शं पार्वतीयैरुपाहृतम् ।
तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ॥ ९

अजिनानां सहस्राणि चीनदेशोद्भवानि च ।
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ॥ १०

[4]दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ।
तमप्यस्मै प्रदास्यामि तमप्यर्हति केशवः ॥ ११

एकेनाभिपतत्यह्ना योजनानि चतुर्दश ।

---

1. ख-घ-ङ-म-मा—गताध्वने ।
2. ग-घ-ङ-मा—सुपुष्टाङ्गैर्बाह्लिजैश्च :
म-ख—सुकृष्णाङ्गैर्बाह्लिजातै ।
3. ख—इतः श्लोकत्रयं नास्ति 4. मा—श्लोकोऽयं नास्ति ।

यानमश्वतरीयुक्तं तदप्यस्मै ददाम्यहम् ॥ १२

यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च वै ।
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ १३

मम पुत्राश्च पौत्राश्च सर्वे दुर्योधनादृते ।
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैस्स्वलङ्कृताः ॥ १४

स्वलङ्कृताश्च कल्याण्यः पादैरेव सहस्रशः ।
वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥ १५

नगरादपि याः काश्चिद् गमिष्यन्ति जनार्दनम् ।
द्रष्टुं कन्याश्च कल्याण्यस्_ताश्च यास्यन्त्यनावृताः ॥ १६

सस्त्रीपुरुषबालं च नगरं मधुसूदनम् ।
उदीक्षतां महात्मानं भानुमन्तमिव प्रजाः ॥ १७

महाध्वजपताकाश्च क्रियन्तां सर्वतो दिशः ।
जलावसिक्तो विरजाः पन्थाः कार्यस्तु सर्वतः ॥ १८

दुश्शासनस्य च गृहं दुर्योधनगृहाद्वरम् ।
तदद्य क्रियतां क्षिप्रं सुसम्मृष्टमलङ्कृतम् ॥ १९

एतद्धि रुचिराकारैः प्रासादैरुपशोभितम् ।
शिवं च रमणीयं च सर्वर्तु सुमनोरमम् ॥ २०

सर्वमस्मिन् गृहे रत्नं मम दुर्योधनस्य च ।

यद्यदर्हति वार्ष्णेयस् तत्तद्देयमसंशयम्* ॥ २१

विदुरः—

राजन् बहुमतश्चासि त्रैलोक्यस्यापि [1]सत्तमः ।
[2]सम्भावितश्च लोकस्य सम्मतश्चासि भारत ॥ २२

यत् त्वमेवं गते ब्रूयाः पश्चिमे वयसि स्थितः ।
[3]शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरस्स्थविरो ह्यसि ॥ २३

[4]लेखाऽश्मनीव भास्सूर्ये महोर्मिरिव सागरे ।
धर्मस्त्वयि महाराज इति व्यवसिताः प्रजाः ॥ २४

सदैव भावितो लोको गुणौघैस्तव पार्थिव ।
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ॥ २५

आर्जवं प्रतिपद्यस्व मा बाल्याद्बहुधा नशीः ॥ २५॥

राजन् पुत्रांश्च पौत्रांश्च सुहृदश्चैव सुप्रियान् ।
यत् त्वं दित्ससि कृष्णाय राजन्नतिथये बहु ॥ २६॥

एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ २७

न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात् ।
एतद्दित्ससि कृष्णाय सत्येनात्मानमालभे ॥ २८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. ङ—संमतः ।
2. ङ—राजंस्त्वं सुमनाश्चासि सुवाक्यश्चासि सत्तम ।　[पाठान्तरम्]
3. ख-ग-घ-ङ-मा—शास्त्रान्वयाद्वा तर्काद्वा ।
4. अ-क—इदमर्धं नास्ति

मायैषा सत्यमेवैतच् छद्मैतद्भूरिदक्षिणा ।
जानामि ते मतं राजन् गूढं बाह्येन कर्मणा ॥ २९

पञ्च पञ्चैव लिप्सन्ति ग्रामकान् पाण्डवा नृप ।
न च दित्ससि तेभ्यस्तांस् तच्छमं किं करिष्यसि ॥ ३०

अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।
अनेन चाप्युपायेन पाण्डवेभ्यः प्रदीयताम् ॥ ३१

न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।
अन्यो धनञ्जयात् कर्तुम् एतत् तत्त्वं ब्रवीमि ते ॥ ३२

वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम् ।
[1]अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनञ्जयम् ॥ ३३

अन्यत् पूर्णादपां कुम्भाद् अन्यत् पादावनेजनात् ।
अन्यत् कुशलसम्प्रश्नान्न चेच्छति जनार्दनः ॥ ३४

यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः ।
तदस्मै क्रियतां राजन् मानार्होऽसौ जनार्दनः ॥ ३५

आशंसमानः कल्याणं कुरूनभ्येति केशवः ।
येनैव राजन्नर्थेन तमेवास्मा उपाकुरु ॥ ३६

शममिच्छति दाशार्हस् तव दुर्योधनस्य च ।
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु ॥ ३७

---

1. ब-ङ—अनन्यमस्य ।

पिताऽसि राजन् पुत्रास्ते वृद्धस्त्वं शिशवः परे ।
वर्तस्व पितृवत् तेषु वर्तन्ते ते हि पुत्रवत् ॥ ३८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ५४ ॥ भगवद्यानपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ३८ श्लोकः ॥

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

दुर्योधनेन श्रीकृष्णस्य विदुरोदीरितभेदागोचरताङ्गीकरणम् ॥ १ ॥ तथा हेतूपन्यासपूर्वकं कृष्णस्योपायनदाननिषेधनम् ॥ २ ॥ भीष्मेण कृष्णस्य दुरवज्ञेयत्वकथनपूर्वकं तदुक्तस्य कर्तव्यत्वकथनम् ॥ ३ ॥ दुर्योधनेन स्वस्य कृष्णबन्धनाध्यवसायकथने धृतराष्ट्रेण तद्गर्हणम् ॥ ४ ॥ भीष्मेण दुर्योधनोपालम्भपूर्वकं सभातो निर्गमनम् ॥ ५ ॥ प्रातः कृताह्निकस्य श्रीकृष्णस्य कुशस्थलात् कुरुपुरमुपेत्य धृतराष्ट्रभवनप्रवेशः ॥ ६ ॥ तथा धृतराष्ट्रपूजां स्वीकृत्य विदुरसदनगमनम् ॥ ७ ॥

---

दुर्योधनः—

यदाह विदुरः कृष्णे सर्वं तत् सत्यमच्युते ।
अनुरक्तो ह्यसंहार्यः पार्थान् प्रति जनार्दनः ॥ १

यत्तत् सत्कारसंयुक्तं देयं वसु जनार्दने ।
अनेकरूपं राजेन्द्र तन्न देयं कदाचन ॥ २

देशः कालस्तथा युक्तो न हि नार्हति केशवः ।

मंस्यत्यधोक्षजो राजन भयादर्चेति मामिति ॥ ३

अवमानश्च यत्र स्यात् क्षत्रियस्य विशाम्पते ।
न तत् कुर्याद्बुधः कार्यम् इति मे निश्चिता मतिः ॥ ४

स हि पूज्यतमो देवः कृष्णः कमललोचनः ।
त्रयाणामपि लोकानां विदितं मम सर्वथा ॥ ५

न तु तस्मै प्रदेयं स्यात् तथा कार्यगतिः प्रभो ।
विग्रहस्समुपारब्धो न हि [1]शाम्यत्यविग्रहात् ॥ ६

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः ।
वैचित्रवीर्यं राजानम् इदं वचनमब्रवीत् ॥ ७

भीष्मः—

सत्कृतोऽसत्कृतो वाऽपि न क्रुध्येत जनार्दनः ।
[2]नावमंस्यत्यवज्ञातॄन् अवज्ञातोऽपि केशवः ॥ ८
[3]नालमेनमवज्ञातुं नावज्ञेयो हि केशवः ॥ ८॥

यत्तु कार्यं महाबाहो मनसा कार्यतां गतम् ।
सर्वोपायैर्न तच्छक्यं केनचित् कर्तुमन्यथा ॥ ९॥

स यद्ब्रूयान्महाबाहुस् तत् कार्यमविशङ्कया ।
वासुदेवेन तीर्थेन [4]क्षिप्रं संशाम्य पाण्डवैः ॥ १०॥

---

1. शाम्यति विग्रहः ।
2. अ-क—नास्तीदमर्धम् ।
3. अ-क—कोशयोरेवेदमर्धं वर्तते । 4. म-मा—वैरं ।

धर्म्यमर्थ्यं च धर्मात्मा ध्रुवं वक्ता जनार्दनः ।
तस्मिन् वाच्याः प्रिया वाचो भवता बान्धवैस्सह ॥ ११॥

दुर्योधनः—

न पर्याप्तोऽस्मि यद्राजन् श्रियं निष्केवलामहम् ।
तैस्सहेमामुपाश्नीयां यावज्जीवं पितामह ॥ १२॥

इदं तु सुमहत् कार्यं शृणु मे यत् समर्थितम् ।
परायणं पाण्डवानां निर्यंस्यामि जनार्दनम् ॥ १३॥

तस्मिन् बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ १४॥

अत्रोपायान् यथा सम्यङ् न बुद्ध्येत जनार्दनः ।
[1]यश्चोपायो भवेत् कश्चित् तद्भवान् प्रब्रवीतु मे ॥ १५॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा घोरं कृष्णेऽभिसंहितम् ।
धृतराष्ट्रस्सहामात्यो व्यथितो विमना भवत् ॥ १६॥

ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ॥ १७

धृतराष्ट्रः—

मैवं वोचः प्रजापाल नैष धर्मस्सनातनः ।
दूतश्च हि हृषीकेशस् सम्बन्धी च प्रियश्च नः ॥ १८

अपापः कौरवेयेषु स कथं बन्धमर्हति ॥ १८॥

---

1. अ-क-ख-घ—न चापायो ।

भीष्मः—

[1]परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः ।
घृणोत्यनर्थं [2]नैवार्थं याच्यमानस्सुहृज्जनैः ॥ १९॥

इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम् ।
वाक्यानि सुहृदां हित्वा त्वमप्यद्यानुवर्तसे ॥ २०॥

कृष्णमक्लिष्टकर्माणम् आसाद्यायं सुदुर्मतिः ।
तव पुत्रस्सहामात्यः क्षणेन न भविष्यति ॥ २१॥

पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्ताश् श्रोतुं वाचः कथञ्चन ॥ २२॥

वैशम्पायनः—

इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात् प्रातिष्ठद् भीष्मस्सत्यपराक्रमः* ॥ २३॥

प्रातरुत्थाय कृष्णस्तु कृतवान् सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ २४॥

तं प्रयान्तं महाबाहुम् अनुज्ञाप्य ततो नृप ।
पर्यवर्तन्त ते सर्वे कुशस्थलनिवासिनः ॥ २५॥

---

1. ग-घ-ङ-म-मा—परीतो धृतराष्ट्रायं तव पुत्रस्सुयोधनः।
[ पाठान्तरम् ]

2. म—न त्वर्थं । ग—न त्वर्थं वार्यमाणस्सुहृद्गणैः।
घ—नत्यर्थं राजमानः सुहृद्गणैः । ?
ङ—वृणोत्यनर्थानत्यर्थं राजमानः सुहृद्गणैः ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

[1]प्रददौ पुण्डरीकाक्षो रत्नानि च धनानि ।
प्रययौ पुण्डरीकाक्षः कुरूणां सदनं प्रति ॥		२६॥

पन्थानमाचेमुरिव ग्रसमाना इवाम्वरम् ।
दारुकेण प्रचुदिता हयास्तस्य महात्मनः ॥		२७॥

अन्नानि शय्या वासांसि तथा रत्नानि सर्वशः ।
दुर्योधनेन कृष्णार्थं पथि सन्निहितं बहु ॥		२८॥

नाभ्यनन्दन्महाबाहुर् उपायात् कुरुसंसदम् ॥		२९

धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुस्स्वलङ्कृताः ।
दुर्योधनादृते सर्वे भीष्मद्रोणकृपादयः ॥		३०

पौराश्च बहुला राजन् हृषीकेशदिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथाऽपरे ॥		३१

स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥		३२

कृष्णसम्माननार्थं च नगरं समलङ्कृतम् ।
बभूव राजमार्गश्च बहुरत्नसमाचितः ॥		३३

न च कश्चिद्गृहे राजंस् तदाऽऽसीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर् वासुदेवदिदृक्षया ॥		३४

राजमार्गे नरास्तस्मिन् सम्भवन्त्यवनिं गताः ।

---

1. म-मा—श्लोकोऽयं नास्ति।

[1]तथा समभवद्राजन् हृषीकेशप्रवेशने ॥ ३५

आवृतानि वरस्त्रीभिर् गृहाणि सुमहान्त्यपि।
[2]प्रचलन्तीव भारेण तत्र तत्र महीतले ॥ ३६

तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
सुमन्दगतयोऽभूवन् राजमार्गे नरैर्वृते ॥ ३७

स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ३८

तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानम् अभ्यगच्छदरिन्दमः ॥ ३९

अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः ।
सहैव द्रोणभीष्माभ्याम् उदतिष्ठन्महायशाः ॥ ४०

कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन् सर्वे पूजयन्तो जनार्दनम् ॥ ४१

ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
सभीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ ४२
[3]ते स्वधर्मानकुर्वन्त सम्पूज्य मधुसूदनम् ॥ ४२॥

---

1. म—तथा स सुमहद्राजन्। मा—तथैव संभ्रमो राजन्।
2. म-मा—प्रचलन्निव भारेण तत्र तत्र महीतले।
अ-क—प्रचलन्ति स्म भारेण दृश्यन्तीव महीतले।
3. अ-क—इदमर्धं नास्ति

तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयस्समीयाय राजभिस्सह माधवः ॥ ४३॥

अथ द्रोणं सबाह्लीकं सपुत्रं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ ४४॥

तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ।
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ ४५॥

अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपाजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ ४६॥

कृतातिथ्यस्तु गोविन्दस् सर्वान् परिहसन् कुरून् ।
आस्ते सम्बन्धकं कुर्वन् कुरुभिः परिवारितः ॥ ४७॥

सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निरक्रामदरिन्दमः ॥ ४८॥

तैस्समेत्य यथान्यायं कुरुभिः कुरुसंसदि ।
विदुरावसथं रम्यम् उपातिष्ठत माधवः ॥ ४९॥

विदुरस्सर्वकल्याणैर् अभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ ५०॥

कृतातिथ्यं तु गोविन्दं विदुरस्सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणां पप्रच्छ मधुसूदनम् ॥ ५१॥
प्रीयमाणस्य सुहृदो विदुरो बुद्धिमत्तरः ॥ ५२

धर्मनित्यस्य तु सतो गतरोषस्य धीमतः ।
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ॥ ५३
क्षत्तुराचष्ट दाशार्हो यथा प्रत्यक्षदर्शिवान् ॥ ५३॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ ५४ ॥ भगवद्यानपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

## ॥ अष्टसप्ततितमोऽध्यायः ॥

श्रीकृष्णस्य कुन्तीसमीपगमनम् ॥३॥ कृष्णेन प्रत्येकं नामनिर्देशपूर्वकं युधिष्ठिरादिकुशलमापृच्छ्य स्वानुभूतदुःखानुस्मरणेन शोचन्त्याः कुन्त्याः समाश्वासनम् ॥ ४ ॥ तथा कुन्तीमामन्त्र्य दुर्योधनगृहगमनम् ॥ ५ ॥

वैशम्पायनः—

अथोपगम्य विदुरम् अपराह्णे जनार्दनः ।
पितृष्वसारं [1]स पृथाम् अभ्यगच्छदरिन्दमः ॥ १

सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत् स्मरन्ती तनयान् पृथा ॥ २

तेषां सत्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत् पृथा ॥ ३

1. ग-घ-ङ-म-मा—गोविन्दः सोऽभ्यगच्छ ।

साऽब्रवीत् कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ४

कुन्ती—

एते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदस् सम्मतास्समचेतसः ॥ ५
निकृत्या भ्रंशिता राज्याज् जनार्हा निर्जनं गताः ॥ ५॥
विजितक्रोधहर्षाश्च ब्रह्मण्यास्सत्यवादिनः ।
त्यक्त्वा प्रियसुखे पार्था रुदतीमपहाय माम् ॥ ६॥
अहार्षुश्च वनं यान्तस् समूलं हृदयं मम ॥ ७
अतदर्हा महात्मानः कथं केशव पाण्डवाः ।
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ ८
बाला विहीनाः पित्रा ते मया सततलालिताः ।
अपश्यन्तश्च पितरौ कथमूषुर्महावने ॥ ९
शङ्खदुन्दुभिनिर्घोषैर् मृदङ्गैर्वैणवैरपि ।
पाण्डवास्समबोध्यन्त बाल्यात्प्रभृति केशव ॥ १०
ये स्म वारणशब्देन हयानां हेषितेन च ।
रथनेमिनिनादैश्च व्यबोध्यन्त सदा गृहे ॥ ११
[1]शङ्खभेरीनिनादेन वेणुवीणानुनादिना ॥ ११॥

1. अ-क—अर्धद्वयं नास्ति

पुण्याहघोषमिश्रैश्च पूज्यमानो द्विजातिभिः ।
वस्त्रै रत्नैरलङ्कारैः पूजयन्तो द्विजन्मनः ॥ १२॥

गीर्भिर्मङ्गलयुक्ताभिर् ब्राह्मणानां महात्मनाम् ।
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ॥ १३॥

प्रासादाग्रेष्ववबोध्यन्त राङ्कवाजिनशायिनः ॥ १४

[1]क्रूरं च निनदं श्रुत्वा श्वापदानां महावने ।
न स्मोपयान्ति निद्रां ते नतदर्हो जनार्दन ॥ १५

[2]भेरीमृदङ्गपणवैश् शङ्खवैणवनिस्वनैः ।
स्त्रीणां गीतिनिनादैश्च मधुरैर्मधुसूदन ॥ १६

वन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् ।
महावनेष्ववबोध्यन्त श्वापदानां रुतैस्तु ते ॥ १७

ह्रीमान् सत्यधृतिर्दान्तो भूतानामनुकम्पिता ।
कामद्वेषौ वशे कृत्वा सतां वर्त्मानु[3]वर्तते ॥ १८

अम्बरीषस्य मान्धातुर् ययातेर्नहुषस्य च ।
भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥ १९

राजर्षीणां पुराणानां धुरं धुर्य इवोद्वहन् ।
शीलवृत्तोपसम्पन्नो धर्मज्ञस्सत्यसङ्गरः ॥ २०
राजा सर्वगुणोपेतस् त्रैलोक्यस्यापि यो भवेत् ।

---

1. म-मा—ते नूनं । 2. अ-क—अर्धद्वयं नास्ति 3. ङ—वर्तकः ।

अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ॥ २१
श्रेष्ठः कुरुषु सर्वेषु धर्मज्ञश्श्रुतवित्तमः ।
सुदर्शनो दीर्घबाहुः कथं कृष्ण युधिष्ठिरः ॥ २२
यस्स नागायुतप्राणो वातरंहा वृकोदरः ।
सामर्षः पाण्डवो नित्यं प्रियो भ्रातुः प्रियङ्करः ॥ २३
कीचकस्य तु सज्ञातेर् यो हन्ता मधुसूदन ।
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च ॥ २४
पराक्रमे शक्रसमो वायुवेगसमो जवे ।
महेश्वरसमः क्रोधे भीमः प्रहरतां वरः ॥ २५
क्रोधं बलममर्षं च यो निधाय परन्तपः ।
जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने ॥ २६
तेजोराशिं महात्मानं बलौघममितौजसम् ।
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन ॥ २७
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः ॥ २७॥
आस्ते परिघबाहुस्स मध्यमः पाण्डवोऽच्युत ॥ २८
अर्जुनेनार्जुनो योऽसौ कृष्ण बाहुसहस्रिणा ।
द्विबाहुस्स्पर्धते नित्यम् अतीतेनापि केशव ॥ २९
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाण्डवः ॥ ३०

तेजसाऽऽदित्यसदृशो महर्षिप्रतिमो दमे ।
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ॥ ३१

आधिराज्यं महद्दीप्तं पार्थिवं मधुसूदन ।
[1]आहृतं येन विक्रम्य कुरूणां सर्वराजसु ॥ ३२

यस्य बाहुबलं घोरं कौरवाः पर्युपासते ।
स सर्वरथिनां श्रेष्ठः पाण्डवस्सत्यविक्रमः ॥ ३३

[2]यं गत्वाऽभिमुखस्सङ्ख्ये न जीवन् कश्चिदाव्रजेत् ।
यो जेता सर्वभूतानाम् अजेयो जिष्णुरच्युत ॥ ३४

[3]योऽपाश्रयः पाण्डवानां देवानामिव वासवः ।
स ते भ्राता सखा चैव कथमद्य धनञ्जयः ॥ ३५

दयावान् सर्वभूतेषु ह्रीनिषेवो महास्त्रवित् ।
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ॥ ३६

[4]सहदेवो महेष्वासश् शूरस्समितिशोभनः ।
भ्रातॄणां कृष्ण शुश्रूषुर् धर्मार्थकुशलो युवा ॥ ३७

सदैव सहदेवस्य भ्रातरो मधुसूदन ।
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ॥ ३८

ज्येष्ठापचायिनं वीरं सहदेवं युधां पतिम् ।

1. अ-क—इदमर्धं नास्ति
2. ख-घ-ङ-म-मा—श्लोकोऽयं नास्ति
3. म-मा—श्लोकोऽयं नास्ति
4. ङ—इतः श्लोकत्रयं नास्ति

शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ३९

सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
भ्रातॄणां कृष्ण सर्वेषां प्रियः प्राणो बहिश्चरः ॥ ४०

चित्रयोधी च नकुलो महेष्वासो महाबलः ।
कच्चित् स कुशली कृष्ण वत्सो मम सुखैधितः ॥ ४१

सुखोचितमदुःखार्हं सुकुमारं महारथम् ।
अपि जातु महाबाहो पश्येयं नकुलं पुनः ॥ ४२

पक्ष्मसम्पातजे काले नकुलेन विनाकृता ।
न लभामि सुखं वीर साऽद्य जीवामि पश्य माम् ॥ ४३

सर्वैः पुत्रैः प्रियतरा द्रौपदी मे जनार्दन ।
कुलीना शीलसम्पन्ना सर्वैस्समुदिता गुणैः ॥ ४४

पुत्री द्रुपदराजस्य विख्याता सत्यवादिनी ।
[1-2]पतिलोकान् पुत्रलोकान् वृण्वाना सत्यवादिनी ॥ ४५

[3]प्रियान् पुत्रान् परित्यज्य पाण्डवानन्ववर्तत ॥ ४५॥

महाभिजनसम्पन्ना सर्वकामैस्सुखैधिता ।
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ॥ ४६॥

पतिभिः पञ्चभिश्शूरैर् अग्निकल्पैः प्रहारिभिः ।

---

1. ग-घ-ङ—कोशेष्वेवेदमर्धं दृश्यते । 2. मा—श्लोकोऽयं न दृश्यते ।
3. अ-क—इदमर्धं नास्ति

उपपन्ना महेष्वासैर् द्रौपदी दुःखभागिनी ॥ ४७॥
[1]चतुर्दशमिमं वर्षं या न पश्याम्यरिन्दम ।
पुत्रादिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥ ४८॥
न नूनं कर्मभिश्शुक्लैर् अश्नुवन्ति स्त्रियस्सुखम् ।
द्रौपदी चेत् तथावृत्ता नाश्नुते सुखमव्ययम् ॥ ४९॥
न मे प्रिया द्रौपदेया न बीभत्सुयुधिष्ठिरौ ।
न भीमसेनो न यमौ यदपश्यं सभागताम् ॥ ५०॥
[2]न मे दुःखतरं किञ्चिद् भूतपूर्वं ततोऽधिकम् ॥ ५१
स्त्रीधर्मिणीं द्रौपदीं चेच् छ्वशुराणां समीपगाम् ।
[3]आनायितामनार्येण क्रोधलोभानुवर्तिना ॥ ५२
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ॥ ५२॥
तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः ।
कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा ॥ ५३॥
तस्यां संसदि सर्वेषां क्षत्तारं पूजयाम्यहम् ।
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ॥ ५४॥
तस्य कृष्ण महाबुद्धेर् गम्भीरस्य महात्मनः ।
क्षत्तुश्शीलमलङ्कारो लोकान् विष्टभ्य तिष्ठति ॥ ५५॥

वैशम्पायनः—

सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम् ।

---

1. ख-ग-घ-ङ-म-मा—त्रयोदशमिमं
2. घ—श्लोकोऽयं नास्ति
3. अ-क-ब—इदमर्धं नास्ति

नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् ॥　　५६॥

कुन्ती—

पूर्वैराचरितं यत्तत् कुराजभिररिन्दम ।
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम् ॥　　५७॥
तन्मां दहति या कृष्णा सभायां कुरुसन्निधौ ।
धार्तराष्ट्रैः परिक्लिष्टा यथा न कुलजा तथा ॥　　५८॥
निर्वासनं च नगरात् प्रव्रज्या च परन्तप ।
नानाविधानां दुःखानाम् आवासोऽस्मि जनार्दन ॥　　५९॥
अज्ञातचर्या बालानाम् अवरोधश्च माधव ।
न मे क्लेशतमं तत् स्यात् पुत्रैस्सह परन्तप ॥　　६०॥
दुर्योधनेन निकृता वर्षमद्य [1]चतुर्दशम् ॥　　६१
दुःखादपि सुदुःखं स्याद् यदि पुण्यफलक्षयः ॥　　६१॥
न मे विशेषो जात्वासीद् धार्तराष्ट्रेषु पाण्डवैः ॥　　६२
तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम् ।
अस्माद्विमुक्तं सङ्ग्रामात् पश्येयं पाण्डवैस्सह ॥　　६३
नैव शक्याः पराजेतुं सत्वं तेषां तथाविधम् ॥　　६३॥
पितरं चैव गर्हामि नात्मानं न सुयोधनम् ।
येनाहं कुन्तिभोजाय धनं धूर्तैरिवार्पिता ॥　　६४॥
बालां मामार्यकस्तुष्यन् क्रीडन्तीं कन्दुहस्तिकाम् ।

1. ख-व-ङ-म-मा—त्रयोदशम् ॥

अदात्तु कुन्तिभोजाय सखा सख्ये महात्मने ॥ ६५॥

साऽहं पित्रा च निकृता श्वशुरैश्च परन्तप ।
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ॥ ६६॥

यन्मां वागब्रवी[1]न्नक्तं सूतके सव्यसाचिनः ।
पुत्रस्ते पृथिवीं जेता [2]यशश्चास्य दिवं स्पृशेत् ॥ ६७॥

हत्वा कुरून् महाजन्ये राज्यं प्राप्य धनञ्जयः ।
भ्रातृभिस्सह कौन्तेयस् त्रीन् मेधानाहरिष्यति ॥ ६८॥

[3]नाहं तामभ्यसूयामि नमो धर्माय वेधसे ।
कृष्णायं महते नित्यं धर्मो धारयति प्रजाः ॥ ६९॥

धर्मश्चेदस्ति वार्ष्णेय यथा [4]वागभ्यभाषत ।
त्वं चापि तत् तथा कृष्ण सर्वं सम्पादयिष्यसि ॥ ७०॥

न मां माधव वैधव्यं नार्थनाशो न वैरिता ।
तथा शोकाय दहति यथा पुत्रैर्विनाभवः ॥ ७१॥

याऽहं गाण्डीवधन्वानं सर्वशस्त्रभृतां वरम् ।

---

1. ग-ख-ङ-म-मा—त्पूर्वं ।
2. मा—दिवं स्पृष्ट्वाऽस्य वै यशः ।
3. मा—सार्धश्लोको नास्ति
4. ख-ग-ङ-म—सत्यं भविष्यति ।

धनञ्जयं न पश्यामि का शान्तिर्हृदयस्य मे ॥ ७२॥
इमं [1]चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् ।
धनञ्जयं च गोविन्द यमौ तं च वृकोदरम् ॥ ७३॥
[2]जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः ।
अर्थतस्ते मम मृतास् तेषां चाहं जनार्दन ॥ ७४॥
ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम् ॥ ७५
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ।
पराश्रया वासुदेव या जीवामि धिगस्तु माम् ॥ ७६
[3]वृत्तेः कार्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी ॥ ७६॥
अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरम् ॥ ७७
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ७७॥
अस्मिंश्चेदागते काले कालो वोऽतिक्रमिष्यति ।
लोकसम्भावितास्सन्तः आनृशंस्यं करिष्यथ ॥ ७८॥
नृशंसेन च वो युक्तांस् त्यजेयं शाश्वतीस्समाः ।
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवितम् ॥ ७९॥
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा ॥ ८०
विक्रमेणार्जिताँल्लोकान् वृणीतं जीवितादपि ॥ ८०॥
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।

1. ख-ग-च-ङ-म-मा—त्रयोदशं
2. अ-क—इदमर्धं नास्ति । 3. अ-क—इदमर्धं नास्ति

मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ८१॥
गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर ॥ ८२॥

विदितौ हि तवात्यन्तं क्रुद्धाविव यथाऽन्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि पराभवम् ॥ ८३॥

तयोश्चैतदवज्ञातं यत् सा कृष्णा सभां गता ॥ ८४

दुश्शासनश्च कर्णश्च परुषाण्यभ्यभाषताम् ।
दुर्योधनो भीमसेनम् अभ्यगर्जत् सभां गतम् ॥ ८५
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत् फलम् ॥ ८५॥

न हि वैरं समासाद्य प्रशाम्यति वृकोदरः ॥ ८६

सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति ।
यावदन्तं न नयति शात्रवान् छत्रुकर्शनः ॥ ८७

न दुःखं राज्यहरणं न च द्यूते पराजयः ।
प्रव्राजनं च पुत्राणां न मे तद्दुःखकारणम् ॥ ८८

यत्तु सा बृहती श्यामा एकवस्त्रा सभागता ।
अशृणोत् परुषा वाचः किं नु दुःखतरं ततः ॥ ८९

स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाभ्यगच्छत् तदा नाथं कृष्णा नाथवती सती ॥ ९०
यस्या मम सपुत्रायास् त्वं नाथो मधुसूदन ।

[1]रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ॥ ९१

साऽहमेवंविधं दुःखं सहेयं पुरुषोत्तम ।
भीमे जीवति दुर्धर्षे विजये चापलायिनि[2]* ॥ ९२

**वैशम्पायनः—**

तत आश्वासयामास पुत्राधिभिरभिप्लुताम् ।
पितृष्वसारं शोचन्तीं पृथां पार्थसखो हरिः ॥ ९३

**श्रीभगवान्—**

का नु सीमन्तिनी त्वादृग् लोकेष्वस्ति पितृष्वसः ।
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ९४

महाकुलीना भवती ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ९५

वीरसूर्वीरपत्नी त्वं सर्वैस्समुदिता गुणैः ।
सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ९६

[3]निद्रातन्द्रे क्रोधहर्षौ क्षुत्पिपासे हिमातपौ ।
एतानि पार्था निर्जित्य नित्यं वीरास्सुखे रताः ॥ ९७

त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः ।
न ते स्वल्पेन तुष्येयुर् महोत्साहा महाबलाः ॥ ९८

---

1. म—अर्धत्रयं नास्ति
2. ग—वैशम्पायनः—
   नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् । [अधिकः पाठः]

* ग—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते ।

3. ङ—निद्रां तन्द्रीं । म-मा—निद्रा तन्द्री ।

[1]अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः ।
उत्तमांश्च परिक्लेशान् भोगांश्चातीव मानुषान् ॥ ९९

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर् दुःखमन्तरमन्तयोः ॥ १००

अभिवादयन्ति भवतीं पाण्डवास्सह कृष्णया ।
आत्मानं ते कुशलिनं निवेद्याहुरनामयम् ॥ १०१

अरोगान् सर्वसिद्धार्थान् क्षिप्रं द्रक्ष्यसि पाण्डवान् ।
ईश्वरान् सर्वलोकस्य हतामित्राञ् श्रिया वृतान् ॥ १०२

**वैशम्पायनः—**

एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम् ।
पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ॥ १०३

**कुन्ती—**

यद्यन् तेषां महाबाहो पथ्यं स्यान्मधुसूदन ।
यथा यथा त्वं मन्येथाः कुर्याः कृष्ण तथा तथा ॥ १०४

अविलोपेन धर्मस्य अनिकृत्या परन्तप ॥ १०४॥

प्रभावज्ञाऽस्मि ते कृष्ण सत्यस्याभिजनस्य च ।
व्यवसायस्य मित्रेषु बुद्धिविक्रमयोस्तथा ॥ १०५॥

त्वमेव नः कुले धर्मस् त्वं सत्यं त्वं तपो महत् ।
त्वं धाता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम् ॥ १०६॥

---

1. अ-क—इदमर्धं नास्ति

यथैवात्थ तथैवैतत् त्वयि सत्यं भविष्यति ॥　१०७

कुरूणां पाण्डवानां च लोकानां चापराजित ।
सर्वस्यैतस्य वार्ष्णेय गतिस्त्वमसि माधव ॥　१०८

प्रभावो बुद्धिवीर्यं च तादृशं तव केशव ॥　१०८॥

वैशम्पायनः—

[1]तामामन्त्र्य च गोविन्दः कृत्वा चापि प्रदक्षिणम् ।
[2]प्रातिष्ठत महाबाहुर् दुर्योधनगृहान् प्रति ॥　१०९॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ ५४ ॥ भगवद्यानपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये १०९॥ श्लोकाः ]

---

## ॥ एकोनाशीतितमोऽध्यायः ॥

दुर्योधनेन स्वगृहमागतस्य श्रीकृष्णस्य पूजापूर्वकं भोजनायामन्त्रणम् ॥ १ ॥ दुर्योधनेन श्रीकृष्णं प्रति स्वीयान्नपानाद्यनादरणकारणप्रश्ने कृष्णेन तत्कथनपूर्वकं विदुरगृहगमनम् ॥ २ ॥ विदुरेण सादरमन्नपानादिना श्रीकृष्णाराधनम् ॥ ३ ॥

---

वैशम्पायनः—

[3]पृथामामन्त्र्य गोविन्दः कृत्वा चापि प्रदक्षिणम् ।
दुर्योधनगृहं शौरिर् अभ्यगच्छदरिन्दमः ॥　१

---

1. ख—नास्त्ययं श्लोकः नावाध्यायसमाप्तिश्च ।
2. ङ-म-मा—दुर्योधनगृहं शौरिः प्रातिष्ठत महाद्युतिः । [पाठान्तरम्]
3. म—श्लोकद्वयं नास्ति

लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमम् ।
[1]विचित्रैरासनैर्युक्तं प्रविवेश जनार्दनः ॥ २

[2]तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वास्थैरवारितः ।
ततोऽभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ॥ ३

श्रिया ज्वलन्तं प्रासादम् आरुरोह महायशाः ॥ ३॥
तत्र राजसहस्रैश्च कुरुभिश्चापि संवृतम् ।
धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ॥ ४॥
दुःशासनं च कर्णं च शकुनिं चापि सौबलम् ।
दुर्योधनसमीपे तान् आसनस्थान् ददर्श सः ॥ ५॥
अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महामनाः ।
उदतिष्ठत् सहामात्यः पूजयन् मधुसूदनम् ॥ ६॥
समेत्य धार्तराष्ट्रेण सामात्येन परन्तपः ।
राजभिस्तत्र वार्ष्णेयस् समागच्छद्यथावयः ॥ ७॥
तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम् ।
विविधास्तरणास्तीर्णम् आविवेश गदाग्रजः ॥ ८॥
तस्मै गां मधुपर्कं च [3]उदकं च जनार्दने ।
निवेदयामास तदा गृहान् राज्यं च कौरवः ॥ ९॥

1. ख-घ-ङ-मा—नास्तीदमर्धम् ।
2. ङ-म-मा—कक्ष्यास्तिस्रो व्यतिक्रामद् अथ द्वास्स्थैर्निवेदितः ।
[ पाठान्तरम् ]
3. ग—उपावृत्य । ख-घ-म-मा—उपहृत्य ।

आसनं सर्वतोभद्रं सर्वरत्नविभूषितम् ।
कृष्णार्थमेव संसिद्धं धार्तराष्ट्रस्य शासनात् ॥ १०॥
तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम् ।
उपासाञ्चक्रिरे सर्वे कुरवो राजभिस्सह ॥ ११॥
ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ।
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ॥ १२॥
ततो दुर्योधनः कृष्णम् अब्रवीत् कुरुसंसदि ।
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः ॥ १३॥

दुर्योधनः—

कस्मादन्नानि पानानि वासांसि शयनानि च ।
त्वदर्थमुपनीतानि नाभुङ्क्थास्त्वं जनार्दन ॥ १४॥
[1]भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन ।
किमर्थं पुण्डरीकाक्ष *भुक्तं वृषलभोजनम् ॥ १५॥
उभयोश्च ददत् साह्यम् उभयोश्च हिते रतः ।
सम्बन्धी दयितश्चासि धृतराष्ट्रस्य माधव ॥ १६॥
त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः ।
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर ॥ १७॥

वैशम्पायनः—

स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ।

---

1. ङ—कोश एकस्मिन्नेवायं श्लोको वर्तते
* भुक्तमित्यत्र—आशंसायां भूते वा क्तप्रत्यय इति ज्ञेयम्

ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् ॥ १८॥

[1]अनर्मकृतमग्रस्तम् अनिरस्तंमसङ्कुलम् ।

राजीवनेत्रो राजानं हेतुमद्वाक्यमब्रवीत् ॥ १९॥

श्रीभगवान्—

कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव हि ।

कृतार्थं मां सहामात्यं समर्चिष्यसि भारत ॥ २०॥

वैशम्पायनः—

एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम् ॥ २१

दुर्योधनः—

न युक्तं भवताऽस्मासु प्रतिवक्तुमसाम्प्रतम् ॥ २१॥

कृतार्थं वाऽकृतार्थं वा त्वां वयं मधुसूदन ।

यतामहे पूजयितुं दाशार्ह न च शक्नुमः ॥ २२॥

न च तत् कारणं विद्मो यस्मान्नो मधुसूदन ।

पूजां कृतां प्रीयमाणैर् न मुञ्जीथाः परन्तप ॥ २३॥

वैरं नो नास्ति भवता गोविन्द न च विग्रहः ।

स भवान् प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति ॥ २४॥

वैशम्पायनः—

एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।

अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥ २५॥

---

1. ग—अर्थवत् कृतमवस्तम् ।
 घ–ङ—अनम्बूकृतमवस्तम् अनिरन्तरमसङ्कुलम् ।

श्रीभगवान्—

नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथञ्चन ॥ २६॥

सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च सम्प्रीयसे राजन् न चैवापद्गता वयम् ॥ २७॥

अकस्माद्द्विषसे राजन् जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन् सर्वैस्समुदितान् गुणैः ॥ २८॥

अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान् किं वक्तुमर्हति ॥ २९॥

यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ ३०॥

कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सति ।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ ३१॥

यः कल्याण[1]गुणं राजन् मोहान्नेत दिदृक्षते ।
सोऽजितात्माऽजितक्रोधो न चिरं तिष्ठते श्रिया ॥ ३२॥

अथ यो गुणसम्पन्नान् हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्च चिरं यशसि तिष्ठति ॥ ३३॥

द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् ।

---

1. ग—मजानन् वै दोषानेव। घ-ङ-म-मा—गुणान् जानन् रोषानेव। ख—गुणान् जानन् दोषादेव।

पाण्डवान् द्विषसे राजन् मम प्राणा हि पाण्डवाः ॥ ३४॥
सर्वमेतन्न भोक्तव्यम् अन्नं दुष्टाभिसंहितम् ।
क्षत्तुरेकस्य भोक्तव्यम् इति मे धीयते मतिः ॥ ३५॥

वैशम्पायनः—

एवमुक्त्वा महाबाहुर् दुर्योधनममर्षणम् ।
निश्चक्राम ततश्शुभ्राद् धार्तराष्ट्रनिवेशनात् ॥ ३६॥
निर्याय च महाबाहुर् वासुदेवो महामनाः ।
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ३७॥
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः ।
कुरवश्च महाबाहुं विदुरस्य गृहातिथिम् ॥ ३८॥
तेऽभिगम्याब्रुवंस्तत्र कुरवो मधुसूदनम् ॥ ३९

कुरवः—

निवेदयामो वार्ष्णेय सरत्नांस्ते गृहान् वयम् ॥ ३९॥

वैशम्पायनः—

तानुवाच महातेजाः कौरवान् मधुसूदनः ॥ ४०

श्रीभगवान्—

सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥ ४०॥

वैशम्पायनः—

[1]यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम् ।
अभ्यर्चयामास तदा सर्वकामै [2]रुपस्थितः ॥ ४१॥

---

1. ख—इतः श्लोकत्रयं नास्ति
2. अ-क—:प्रयत्नवान् । ग—रुपस्थितैः । म-मा—रुपस्थितम् ।

ततः क्षत्ताऽन्नपानानि शुचीनि गुणवन्ति च ।
[1]उपाहरदनेकानि केशवाय महात्मने ॥ ४२॥

तैस्तर्पयित्वा प्रथमं ब्राह्मणान् मधुसूदनः ।
वेदविद्भ्यो ददौ कृष्णः परमद्रविणान्यपि ॥ ४३॥

भुक्तवत्सु द्विजाग्र्येषु निषण्णेषु वरासने ।
शुचिस्सुप्रयतो भूत्वा विदुरोऽन्नमुपाहरत् ॥ ४४॥

श्रद्धया परया युक्त इदं वचनमब्रवीत् ॥ ४५

विदुरः—

सम्भ्रमैस्तुष्य गोविन्द एतन्नः परमं धनम् ।
अन्यथा हि विशेषेण कस्त्वामर्चितुमर्हति ॥ ४६

वैशम्पायनः—

ततोऽनुयायिभिस्सार्धं निषण्णः परमासने ।
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ४७

तं भुक्तवन्तं विविधास् सुशब्दास्सूतमागधाः ।
अभितुष्टुवुरासीनं दाशार्हमपराजितम् ॥ ४८

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ ५४ ॥ भगवद्यानपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ४८ श्लोकाः]

---

1. मा– सार्धश्लोकचतुष्टयं नास्ति

## ॥ अशीतितमोऽध्यायः ॥

रात्रौ विदुरेण श्रीकृष्णं प्रति भीष्मादिसमाश्रयणेन गर्वितस्य दुर्योधनस्य दौश्शील्याभिलपनपूर्वकं तस्मिन् सामवचनस्य नैष्फल्यकथनम् ॥ १ ॥ तथा दुष्टभूयिष्ठसभाप्रवेशस्य स्वानभिमतत्वकथनम् ॥ २ ॥ श्रीकृष्णेन विदुरवचनानुमोदनपूर्वकं स्वागमनस्य लोकपरिवादपरिहारार्थत्वकथनम् ॥ ३ ॥

---

वैशम्पायनः—

तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत् ॥ ॥

विदुरः—

नेदं सम्यग् व्यवसितं केशवागमनं तव ॥ १

अर्थधर्मातिगो मूढस् संरम्भी च जनार्दन ।

मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ २

धर्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहं गतः ।

अनेयश्श्रेयसां पापो धार्तराष्ट्रो जनार्दन ॥ ३

कामात्मा प्राज्ञमानी च मित्रध्रुक् सर्वशङ्किता ।

अकर्ता चाकृतज्ञश्च त्यक्तधर्मा प्रियानृतः ॥ ४

[1]गूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वरः ।

कामानुसारी कृत्येषु सर्वेषु कृतनिश्चयः ॥ ५

एतैश्चान्यैश्च बहुभिर् दोषैरेव समन्वितः ।

त्वयोच्यमानं श्रेयोऽपि संरम्भान्न करिष्यति ॥ ६

---

1. ख-घ-ङ-म-मा—नास्त्ययं श्लोकः ।

भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ॥ ७

निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन ।
भीष्मद्रोणमुखान् पार्था न शक्ताः प्रतिवीक्षितुम् ॥ ८

सेनासमुदयं दृष्ट्वा पार्थिवं मधुसूदन ।
कृतार्थं मन्यते बाल आत्मानमविचक्षणः ॥ ९

एकः कर्णः पराञ्जेतुं समर्थ इति निश्चयः ।
धार्तराष्ट्रस्य दुर्बुद्धेस् स शमं नोपलप्स्यते ॥ १०

[1]निश्चितं धार्तराष्ट्राणां सर्वेषामेव केशव ।
शमे प्रयतमानस्य तव [2]शासनलङ्घनम् ॥ ११

न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम् ।
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ॥ १२

यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत् प्राज्ञो बधिरेष्विव गायनः ॥ १३

अविजानत्सु मूढेषु निर्मर्यादेषु माधव ।
तत्त्वं वाक्यं ब्रुवन् निन्द्यश् चण्डालेषु द्विजो यथा ॥ १४

सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः ।

---

1. अ-क-ङ-मा—संविद्य ।
2. अ-क—सौभ्रात्रकाङ्क्षिणः । ख-म-मा—शासनकाङ्क्षिणाम् ।

तस्मिन् निरर्थकं वाक्यम् उक्तं सम्पत्स्यते तव ॥ १५

तेषां समुपविष्टानां सर्वेषां पापचेतसाम् ।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ १६

दुर्बुद्धीनामशिष्टानां बहूनां पापचेतसाम् ।
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते ॥ १७

अनुपासितवृद्धत्वात् श्रियो मोहेन दर्पितः ।
वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ १८

[1]वचो बलवदप्यस्य यदि वक्ष्यसि माधव ।
त्वय्यस्य महती शङ्का न करिष्यति ते वचः ॥ १९

नेदमद्य युधा शक्यम् इन्द्रेणापि सहामरैः ।
इति व्यवसितास्सर्वे धार्तराष्ट्रा जनार्दन ॥ २०

तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु ।
समर्थमपि ते वाक्यम् असमर्थं भविष्यति ॥ २१

मध्ये तिष्ठन् हस्तियूथस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतमन्युः
कृत्स्ना मयेयं पृथिवी जितेति ॥ २२

आशंसते वै धृतराष्ट्रस्य पुत्रो
महद्राज्यमसपत्नं पृथिव्याम् ।

---

1. अ-क-ग—इदमर्धं नास्ति

तस्मिन् शमः केवलो नोपलभ्यो
[1]यश्चासन्तं मन्यते प्राप्तमर्थम् ॥ २३

पर्यस्तेयं पृथिवी कालपक्का
दुर्योधनार्थे पाण्डवान् योद्धुकामाः ।
समागतास्सर्वयोधाः पृथिव्यां
राजानश्च क्षितिपास्तैस्समेताः ॥ २४

सर्वे चैते कृतवैराः पुरस्तात्
त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात् संश्रिता धार्तराष्ट्रान्
सुसंहतास्सह कर्णेन वीराः ॥ २५

त्यक्तात्मानस्सह दुर्योधनेन
हृष्टा योद्धुं पाण्डवान् सर्वयोधाः ।
मृत्युर्जयो वेति कृतैकभावाः
कामात्मानो मन्युवशाविनीताः ॥ २६

तेषां मध्ये प्रविशेथा यदि त्वं
न तन्मतं मम दाशार्हवीर ॥ २६॥

तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् ।
कथं मध्यं प्रपद्येथाश् शत्रूणां शत्रुकर्शन ॥ २७॥

---

1. म-मा—बद्धं सन्तमागतं मन्यतेऽर्थम् ।
अ-क—बद्धं सन्तं मन्यते लब्धमर्थम् ।

सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ २८॥

या मे प्रीतिः पाण्डवेषु भूयस्सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ २९॥

[1]या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यम् अन्तरात्माऽसि देहिनाम्* ॥ ३०॥

वैशम्पायनः—

विदुरस्य वचश्श्रुत्वा प्रश्रितं पुरुषोत्तमः ।
इदं होवाच वचनं भगवान् मधुसूदनः ॥ ३१॥

श्रीभगवान्—

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
यथा वाच्यस्त्वद्विधेन सुहृदा मद्विधस्सुहृत् ॥ ३२॥

धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽस्मि त्वयैतत् पितृमातृवत् ॥ ३३॥

सर्वं प्राप्तं च युक्तं च एवमेव यथाऽऽत्थ माम् ।
शृणुष्वागमने हेतुं विदुरावहितो मम ॥ ३४॥

दौरात्म्यं धार्तराष्ट्राणां क्षत्रियाणां च वैरिताम् ।
सर्वमेतदहं जानन् क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ३५॥

---

1. ख-ब-ङ-म-मा—नास्त्ययं श्लोकः ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात् प्राप्नुयाद्धर्ममुत्तमम् ॥ ३६॥

धर्मकार्ये यतात्मा यो न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत् पुण्यम् अत्र मे नास्ति संशयः ॥ ३७॥

मनसा चिन्तयन् पापं कर्मणा नाभिरोचयन् ।
न प्राप्नोति फलं तस्येत्येवं धर्मविदो विदुः ॥ ३८॥

सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च सङ्ग्रामे विनशिष्यताम् ॥ ३९॥

सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ४०॥

व्यसने क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ ४१॥

[1]आकेशग्रहणान्मित्रम् अकार्यात् सन्निवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ४२॥

तत् समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रस्सहामात्यो ग्रहीतुं विदुरार्हति ॥ ४३॥

हितं हि धार्तराष्ट्राणां पाण्डवानामथो हितम् ।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ ४४॥

---

1. मा—श्लोकपञ्चकं नास्ति

हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिर् आनृण्यं च भविष्यति ॥ ४५॥

ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं विदुर्बुधाः ॥ ४६॥

न मां ब्रूयुरधर्मिष्ठा मूढा ह्यसुहृदस्तथा ।
शक्तो नावारयत् कृष्णस् संरब्धान् कुरुपाण्डवान् ॥ ४७॥

उभयोस्साधयन्नर्थम् अहमागत इत्युत ।
तत्र यत्नमहं कृत्वा धर्मस्यानृण्यतामियाम् ॥ ४८॥

मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४९॥

अहापयन् पाण्डवानां हितार्थं
शमं कुरूणां सह सर्वराजभिः ।
पुण्यं च मे स्याच्चरितं महार्थम्
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ५०॥

अपि वाचं भाषमाणस्य काम्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अपेक्षेरन् धार्तराष्ट्रा[1]स्समग्रां
मां च प्राप्तं कुरवः पूजयेयुः ॥ ५१॥

1. अ-क—श्शमार्थं। म—स्समर्था। ख-घ-ङ-मा—स्समर्थां।

न चापि मम पर्याप्तास् सहितास्सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥　　५२॥

वैशम्पायनः—

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥　　५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

॥ ५४ ॥ भगवद्यानपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः]

---

## ॥ एकाशीतितमोऽध्यायः ॥

---

प्रभाते सन्ध्यामुपतिष्ठमानं श्रीकृष्णमभ्येत्य शकुनिदुर्योधनाभ्यां सभागमनाय प्रार्थनम् ॥ १ ॥ श्रीकृष्णस्य विदुरेण सह सभाप्रवेशः ॥ २ ॥ अन्तरिक्षगतेषु नारदादिषु श्रीकृष्णाज्ञया भीष्मेण आसनादिना सत्कृतेषु कृष्णादीनां यथोचितमासनेषूपवेशनम् ॥ ३ ॥

---

वैशम्पायनः—

तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्वरी ॥　　१

धर्म्या रम्याश्चार्थवतीर् विचित्रार्थपदाक्षराः ।
शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥　　२

कथाभिरनुकूलाभी रक्तस्यामिततेजसः ।
अकामस्यैव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ३

ततस्तु स्वरसम्पन्ना बहवस्सूतमागधाः ।
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ४

ब्रह्मादिवसुदेवान्तं वंशं समनुकीर्तयन् ।
तुष्टुवुः पुण्डरीकाक्षं बहवस्सूतमागधाः ॥ ५

तत उत्थाय दाशार्ह ऋषभस्सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातः कार्यं जनार्दनः ॥ ६

कृतोदकः कृतजपो हुताग्निस्समलङ्कृतः ।
तत आदित्यमुद्यन्तम् उपातिष्ठत माधवः ॥ ७

अथ दुर्योधनः कर्णश् शकुनिश्चापि सौबलः ।
सन्ध्यां तिष्ठन्तम[1]भ्यायन् दाशार्हमपराजितम् ॥ ८

आचख्युस्ते तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूंश्च भीष्मप्रमुखान् राज्ञस्सर्वांश्च पार्थिवान् ॥ ९

[2]त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तानभ्यनन्दद्गोविन्दस् साम्ना परमवल्गुना ॥ १०

[3]तेऽप्यमुं देवकीपुत्रं दिवि शक्रमिवामराः ॥ १०॥

1 ङ-म-मा—भ्यायाद् । 2. ख-घ-ङ-मा—नास्तीदमर्धम् ।
3. ख-घ-ङ-म—कोशेष्वेवेदमर्धं वर्तते ।

ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गवाश्वांश्च परन्तपः ॥ ११॥

विसृष्टवन्तं रत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसङ्क्रम्य ववन्दे सारथिस्तदा ॥ १२॥

[1]ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रम् उपातिष्ठत दारुकः ॥ १३॥

तस्मै रथवरो युक्तश् शुशुभे लोकविश्रुतः ।
वाजिभिस्सैन्यसुग्रीवमेघपुष्पवलाहकैः ॥ १४॥

सैन्यस्तु शुकपत्राभस् सुग्रीवः किंशुकप्रभः ।
मेघपुष्पो मेघवर्णः पाण्डरस्तु वलाहकः ॥ १५॥

दक्षिणं चावहत् सैन्यस् सुग्रीवस्सव्यतोऽवहत् ।
पृष्ठवाहौ तयोरास्तां मेघपुष्पवलाहकौ ॥ १६॥

विश्वकर्मकृतापीडा रत्नजालविभूषिता ।
आश्रिता वै रथे तास्मिन् ध्वजयष्टिरशोभत ॥ १७॥

वैनतेयस्स्थितस्तस्यां प्रभाकरमिव स्पृशन् ।
तस्य सत्ववतः केतौ भुजगारिरशोभत ॥ १८॥

तस्य कीर्तिमतस्तेन भास्वरेण विराजता ।
शुशुभे स्यन्दनश्रेष्ठः पतगेन्द्रेण केतुना ॥ १९॥

---

1. ख-ब-म—नास्त्ययं श्लोकः

रुक्मजालैः पताकाभिस् सौवर्णेन च केतुना ।
बभूव स रथश्रेष्ठः कालसूर्य इवोदितः ॥ २०॥

पक्षिध्वजवितानैश्च रुक्मजालकृतान्तरैः ।
दण्डमार्गविभागैश्च सुकृतैर्विश्वकर्मणा ॥ २१॥

प्रवालमणिहेमैश्च मुक्तावैडूर्यभूषणैः ।
किङ्किणीशतसङ्घैश्च वालजालकृतान्तरैः ॥ २२॥

कार्तस्वरमयीभिश्च पद्मिनीभिरलङ्कृतः ।
शुशुभे स्यन्दनश्रेष्ठस् तापनीयैश्च पादपैः ॥ २३॥

व्याघ्रसिंहवराहैश्च गोवृषैर्मृगपक्षिभिः ।
ताराभिर्भास्करैश्चापि वारणैश्च हिरण्मयैः ॥ २४॥

वज्राङ्कुशविमानैश्च कूबरावर्तसन्धिषु ।
समुच्छ्रितमहानाभिस् स्तनयित्नुमहास्वनः ॥ २५॥

तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघनसङ्काशं सर्वरत्नविभूषितम् ॥ २६॥

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमाबध्य श्रिया परमया ज्वलन् ॥ २७॥

कुरुभिस्संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिस् सर्वयादवनन्दनः ॥ २८॥

अन्वारुरोह दाशार्हं विदुरस्सर्वधर्मवित् ।

सर्वप्राणभृतां श्रेष्ठं सर्वबुद्धिमतां वरम् ॥ २९॥

ततो दुर्योधनः कर्णश् शकुनिश्चापि सौबलः ।
द्वितीयेन रथेनैनम् अन्वयुस्ते परन्तपम् ॥ ३०॥

सात्यकिः कृतवर्मा च वृष्णीनां च महारथाः ।
पृष्ठतोऽनुययुः कृष्णं गजैरश्वै रथैरपि ॥ ३१॥

तेषां हेमपरिष्कारैर् युक्ताः परमवाजिभिः ।
यास्यतां घोषिणश्चित्राश् चारु बभ्राजिरे रथाः ॥ ३२॥

सम्मृष्टसंसिक्तरजः प्रतिपेदे महापथम् ।
राजर्षिचरितं काले [1]कृष्णो धीमान् श्रिया ज्वलन् ॥ ३३॥

ततः प्रयाते दाशार्हे प्रवाद्यन्ते स्म पुष्कराः ।
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ ३४॥

प्रवीरास्सर्वलोकस्य युवानस्सिंहविक्रमाः ।
परिवार्य रथं शौरेर् अगच्छन्त परन्तपाः ॥ ३५॥

ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ।
असिप्रासायुधधराः कृष्णस्यासन् पुरस्सराः ॥ ३६॥

गजाः पञ्चशतास्तत्र रथाश्चासन् सहस्रशः ।
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ ३७॥

पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ।

1. मा—श्रिया परमया ज्वलन्

आबालवृद्धं सस्त्रीकं रथ्यागतमरिन्दमम् ॥ ३८॥

वेदिकामाश्रिताभिश्च समाक्रान्तान्यनेकशः ।
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ ३९॥

सम्पूज्यमानः कुरुभिस् संशृण्वन् विविधाः कथाः ।
यथार्हं प्रतिसत्कुर्वन् प्रेक्षमाणश्शनैर्ययौ ॥ ४०॥

ततस्सभां समासाद्य केशवस्यानुयायिनः ।
सशङ्खैर्वेणु[1]निर्घोषैर् दिशस्सर्वा व्यनादयन् ॥ ४१॥

ततस्सा समितिस्सर्वा राज्ञाममिततेजसाम् ।
सम्प्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ ४२॥

ततोऽभ्याशं गते कृष्णे समहृष्यन् नराधिपाः ।
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ४३॥

आसाद्य तु सभाद्वारम् ऋषभस्सर्वसात्वताम् ।
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ४४॥

नगमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ४५॥

पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
ज्योतींष्यादित्यवद्राजन् कुरून् प्राच्छादयच्छ्रिया ॥ ४६॥

अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ।

1. ख-घ-ङ-म-मा—संमिश्रैर्दिशस्सर्वा व्यनादयन् ।

वृष्णयः कृतवर्मा चाप्यासन् कृष्णस्य पृष्ठतः ॥ ४७॥

धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयश्च ते ।
आसनेभ्योऽचलन् सर्वे पूजयन्तो जनार्दनम् ॥ ४८॥

अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्महामनाः ।
सहैव द्रोणभीष्माभ्याम् उदतिष्ठन्महायशाः ॥ ४९॥

उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुस्समन्ततः ॥ ५०॥

आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ५१॥

स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
[1]अभ्यभाषत धर्मात्मा राज्ञश्चान्यान् यथावयः ॥ ५२॥

तत्र केशवमानर्चुस् सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवास्सर्वे कुरवश्च जनार्दनम् ॥ ५३॥

तत्र तिष्ठन् स दाशार्हो राजमध्ये परन्तपः ।
अपश्यदन्तरिक्षस्थान् ऋषीन् परपुरञ्जयः ॥ ५४॥

ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् ।
अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः ॥ ५५॥

---

1. अ-क-ग- भीष्मद्रोणावपि तथा तथाऽन्यान् वृद्धसम्मतान् ।
[अधिकः पाठः]

श्रीभगवान्—

पार्थिवीं समितिं द्रष्टुम् ऋषयोऽभ्यागता नृप ।
निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा ॥ ५६॥

नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ।
[1]पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ॥ ५७॥

वैशम्पायनः—

ऋषीन् शान्तनवो दृष्ट्वा सभाद्वारमुपस्थितान् ।
त्वरमाणस्ततो भृत्यान् आसनानीत्यचोदयत् ॥ ५८॥

आसनान्यथ मृष्टानि महान्ति विपुलानि च ।
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ॥ ५९॥

तेषु तत्रोपविष्टेषु गृहीतार्घ्येषु भारत ।
निषसादासने कृष्णो राजानश्च यथासनम् ॥ ६०॥

दुश्शासनस्सात्यकये ददावासनमुत्तमम् ।
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ॥ ६१॥

अविदूरे तु कृष्णस्य कर्णदुर्योधनावुभौ ।
एकासने महात्मानौ निषीदतुररिन्दमौ ॥ ६२॥

गान्धारराजश्शकुनिर् गान्धारैरभिरक्षितः ।
निषसादासने राजा सहपुत्रैर्विशाम्पते ॥ ६३॥

---

1. ख—इतः श्लोकचतुष्टयं नास्ति ।

विदुरो मणिपीठे तु [1]शुक्लस्पर्ध्याजिनोत्तरे ।
संस्पृशन्नासनं शौरेर् महामतिरुपाविशत् ॥ ६४॥
चिरस्य दृष्ट्वा दाशार्हं राजानस्सर्वपार्थिवाः ।
अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम् ॥ ६५॥
अतसीपुष्पसङ्काशः पीतवासा जनार्दनः ।
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ६६॥
ततस्तूष्णीं सर्वमासीद् गोविन्दगतमानसम् ।
न तत्र कश्चित् किञ्चिद्वा व्याजहार पुमान् क्वचित् ॥ ६७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ ५४ ॥ भगवद्यानपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[ अस्मिन्नध्याये ६७॥ श्लोकाः ]

---

## ॥ द्व्यशीतितमोऽध्यायः ॥

श्रीकृष्णेन धृतराष्ट्रं प्रति सन्ध्यर्थं स्वस्यागमनकथनम् ॥ १ ॥ सन्धिविग्रहपक्षयोः गुणदोषवर्णनपूर्वकं पाण्डवविज्ञापननिवेदनम् ॥ २ ॥ तथा हितमुपदिश्य अन्ते यथारुचि करणाभिधानम् ॥ ३ ॥

---

वैशम्पायनः—
तेष्वासीनेषु सर्वेषु तूष्णीम्भूतेषु राजसु ।
वाक्यमभ्याददे कृष्णस् सुदंष्ट्रो दुन्दुभिस्वनः ॥ १

1. ख-घ-ङ—शुक्लार्चिरजिनोत्तरे ।

जीमूत इव घर्मान्ते सर्वां संश्रावयन् सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ २

श्रीभगवान्—

कुरूणां पाण्डवानां च शमस्स्यादिति भारत ।
अप्रणाशेन वीराणाम् एतद्वेदितुमागतः ॥ ३

राजन् नान्यत् प्रवक्तव्यं तव नैश्श्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिन्दम ॥ ४

इदं ह्यद्य कुलं श्रेष्ठं पृथिव्यां सर्वराजसु ।
श्रुतवृत्तोपसम्पन्नं सर्वैस्समुदितं गुणैः ॥ ५

कृपाऽनुकम्पा कारुण्यम् आनृशंस्यं च भारत ।
तथाऽऽर्जवं क्षमा सत्यं कुरुष्वेव विशेषतः ॥ ६

तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतम् ॥ ७

त्वं हि वारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ८

पुत्रास्तव तु कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ९

अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ ॥ १०

[1]सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ११

शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत ।
सुदुष्करोऽप्यत्र शमो मतो मे भरतर्षभ ॥ १२

त्वदधीनश्शमो राजन् मयि चैव विशाम्पते ।
पुत्रान् स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ १३

अनुज्ञातं हि भवता सर्वैः पुत्रैस्सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ १४

हितं हि धार्तराष्ट्राणां पाण्डवानां तथा हितम् ।
शमे प्रयतमानस्य तव शासनकाङ्क्षिणः ॥ १५

[2]तेषां निष्कल्मषं राजन् संविधत्स्व विशाम्पते ।
सहभूतास्तु भरतास् तवैव स्युर्जनाधिप ॥ १६

धर्मार्थयोस्तिष्ठ राजन् पाण्डवैरभिरक्षितः ।
न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ १७

न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैस्सहितः प्रसहेत कुतो नृपाः ॥ १८

यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ १९

1. म—श्लोकद्वयं न दृश्यते ।	2. अ-क-ख-इदमर्धं नास्ति ।

सैन्धवश्च कलिङ्गश्च काम्भोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनस् सव्यसाची यमौ तथा ॥ २०

सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
[1]तत्र युध्येत को राजन् जीवितप्रेप्सुराहवे ॥ २१

गौरवं सर्वराज्ञां हि शत्रुभिश्चाप्रधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ २२

तस्य ते पृथिवीपालास् त्वत्समाः पृथिवीपते ।
[2]श्रेयांसश्चैव राजानस् सन्धास्यन्ते परन्तप ॥ २३

स त्वं पुत्रैश्च पौत्रैश्च पितृभिर्भ्रातृभिस्तथा ।
सुहृद्भिस्सर्वतो गुप्तस् सुखं शक्ष्यसि जीवितुम् ॥ २४

एतानेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ २५

एतैर्हि सहितस्सर्वैः पाण्डवैस्स्वैश्च भारत ।
अन्यान् [3]विजेष्यसे शत्रून् एष स्वार्थस्तवाखिलः ॥ २६

तैरेवोपार्जितां भूमिं भोक्ष्यसे च परन्तप ।
यदि [4]सन्धित्ससे राजन् पाण्डवैश्च परन्तप ॥ २७

---

1. अ-क—को नु तान् विपरीतात्मा युध्येत भरतर्षभ ।
लोकस्येश्वरतां भूयश् शत्रुभिश्चाप्यधृष्यताम् । [पाठान्तरम्]

2. घ—इतः सार्धश्लोकद्वयं नास्ति । 3. ङ-म-मा—बाधिष्यते ।

4. अ-क-ख-ग-घ-म—सम्पत्स्यसे ।

संयुगे वै महाराज दृश्यते वै महान् क्षयः ।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥ २८

पाण्डवैर्निहतैस्सङ्ख्ये पुत्रैर्वाऽपि महाबलैः ।
यद्विन्देथास्सुखं राजंस् तद्ब्रूहि भरतर्षभ ॥ २९

शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान् रक्ष महतो भयात् ॥ ३०

न पश्येम कुरून् सर्वान् पाण्डवांश्चैव संयुगे ।
क्षीणानुभयतश्शूरान् रथिनो रथिभिर्हतान् ॥ ३१

समवेताः पृथिव्यां हि राजानो राजसत्तम ।
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ३२

त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषं स्यात् कुरुनन्दन ॥ ३३

शुद्धा वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजंस् तान् पाहि महतो भयात् ॥ ३४

सुखेनेमे भूमिपालाः परिष्वज्य परस्परम् ।
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ३५

[1]सुवाससस्स्रग्विणश्च सत्कृता भरतर्षभ ।
[2]अमर्षं च निराकृत्य वैराणि च परन्तप ॥ ३६

1. अ-क—इदमर्धं नास्ति। 2. म—अर्धद्वयं नास्ति।

हार्दं यत् पाण्डवेष्वासीत् प्राक् तस्मि[1]न् नागसाह्वये ।
तदेव ते भवत्वद्य सन्धत्स्व भरतर्षभ ॥ ३७

बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान् पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ३८

भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३९

आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतश्शासनाद्दुःखम् अनुभूतं सहानुगैः ॥ ४०

द्वादशैतानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाऽज्ञातै[2]स् सजनैः परिवत्सरम् ॥ ४१

[3]स्थाता नस्समये तस्मिन् पितेति कृतनिश्चयाः ।
[4]तीर्णास्स्म समयं राजंस् तच्च नो ब्राह्मणा विदुः ॥ ४२

तस्मिन् नस्समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन् स्वराज्यांशं लभेमहि ॥ ४३
[5]त्वं धर्ममर्थं सञ्जानन् सम्यङ् नस्त्रातुमर्हसि ॥ ४३॥

---

1. अ-क-म—स्त्वायुषः क्षये ।
2. ख-ग-घ—रुषितः । ङ-म-मा—रुषितः परिवत्सरः ।
3. ख-घ-ङ—स्थापितास्समये तस्मिन् पितेति ।
4. अ-क—इदमर्धं नास्ति ।
5. घ-ङ—धर्ममर्थं च युञ्जानो व्यसनात् त्रातुमर्हसि ।
   म—तान् धर्ममर्थं युञ्जानं सम्यङ् नो त्रातुमर्हसि ॥

गुरुत्वं भवति प्रेक्ष्य बहून् क्लेशान् सहामहे ।
स भवान् मातृपितृवद् अस्मासु प्रतिपद्यताम् ॥ ४४॥
गुरोर्गरीयसी वृत्तिर् या च शिष्यस्य भारत ।
वर्तामहे त्वयि च तां त्वं च वर्तस्व नस्तथा ॥ ४५॥
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ।
संस्थापय पथिष्वस्मांस् तिष्ठ धर्मे स्ववर्त्मनि ॥ ४६॥
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ।
धर्मज्ञेषु सभासत्सु नेह युक्तमसाम्प्रतम् ॥ ४७॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ४८॥
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
[1]नचास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ ४९॥
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ५०
ये धर्ममनुपश्यन्तस् तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्म्यं च न्याय्यं च भरतर्षभ ॥ ५१
[2]शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ।

---

1. म—इदमर्धं नास्ति ।
2. म—अमर्षं च निराकृत्य वैराणि च परन्तप ।
हार्दं यत् पाण्डवेष्वासीत् प्राक् तस्मिन् नागसाह्वये ।
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ।
अत्रापि हीनाः पुत्राः के त्वयैव परिवर्धिताः ॥ [अधिकः पाठः]

ब्रुवन्तु वा महीपालास् सभायां ये समासते ॥ ५२

धर्मार्थौ सम्प्रधार्यैव यदि सत्यं ब्रवीम्यहम् ।
प्रमुञ्चेमान् मृत्युपाशात् क्षत्रियान् पुरुषर्षभ ॥ ५३

प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ॥ ५३॥

पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततस्सपुत्रस्सिद्धार्थो भुङ्क्ष्व भोगान् परन्तप ॥ ५४॥

अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ॥ ५५॥

द्रोहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ॥ ५६॥

स तत्र निर्वसन् सर्वान् वशमानीय पार्थिवान् ।
त्वन्मुखानकरोद्राजन् न च त्वामत्यवर्तत ॥ ५७॥

तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता ।
राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ॥ ५८॥

स तामवस्थां सम्प्राप्य कृष्णां प्रेक्ष्य सभागताम् ।
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ॥ ५९॥

अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात् सुखाच्चैव राजन् मा नीनशः प्रजाः ॥ ६०॥

अनर्थमर्थं मन्वानोऽप्यर्थं चानर्थमात्मनः ।
लोभेऽतिप्रसृतान् पुत्रान् निगृह्णीष्व विशाम्पते ॥ ६१॥

स्थिताश्शुश्रूषितुं पार्थास् स्थिता योद्धुमरिन्दमाः ।
यत् ते पथ्यतमं राजंस् तस्मिंस्तिष्ठ परन्तप ॥ ६२॥

वैशम्पायनः—

तद्वाक्यं पार्थिवास्सर्वे हृदयैस्समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ ५४ ॥ भगवद्यानपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये ६३॥ श्लोकाः]

---

## ॥ त्र्यशीतितमोऽध्यायः ॥

---

जामदग्न्येन दम्भोद्भवोपाख्यानमाख्याय कृष्णार्जुनयोः नरनारायणस्वरूपताभिधानम् ॥ १ ॥

---

वैशम्पायनः—

तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन् सर्वे सभासदः ॥ १

कश्चिदुत्तरमेतेषां वक्तुं नोत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥ २

तथा तेषु च सर्वेषु तूष्णीम्भूतेषु राजसु ।
जामदग्न्य इदं वाक्यम् अब्रवीत् कुरुसंसदि ॥ ३

जामदग्न्यः—

इमां मे सोपमां वाचं शृणु सत्यामशङ्कितः ।
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥ ४

राजा दम्भोद्भवो नाम सार्वभौमः पुराऽभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नश्श्रुतम् ॥ ५

स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान् क्षत्रियान् वैश्यान् पृच्छन्नास्ते महारथः ॥ ६

दम्भोद्भवः—

अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वाऽपि शस्त्रभृत् ॥ ७

जामदग्न्यः—

इति ब्रुवन्नन्वचरत् स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कञ्चिदन्यमचिन्तयन् ॥ ८

तस्मै वैद्या अकृपणा ब्राह्मणास्सर्वतोभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ९

[1]निषिध्यमानोऽप्यसकृत् पृच्छत्येव स वै द्विजान् ।
अभिमानी श्रिया मत्तस् तमूचुर्ब्राह्मणास्तदा ॥ १०

तपस्विनो महात्मानो वेदव्रतसमन्विताः ।

---

1. अ-क—अर्धद्वयं नास्ति

उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ११

ब्राह्मणः—

[1]अनेकजननं सख्यं ययोः पुरुषसिंहयोः ।
तयोस्त्वं न समो युद्धे भवितासि कदाचन ॥ १२

जामदग्न्यः—

एवमुक्तस्स राजा तु पुनः पप्रच्छ तान् द्विजान् ॥ १२॥

दम्भोद्भवः—

क्व तौ वीरौ क्वजन्मानौ किङ्कर्माणौ च कौ च तौ ॥ १३

ब्राह्मणाः—

नरो नारायणश्चैव तापसाविति नश्श्रुतम् ।
अजातौ मानुषे लोके ताभ्यां [2]युद्ध्यस्व पार्थिव ॥ १४
श्रूयेते तौ महात्मानौ नरनारायणावुभौ ।
तपो घोरमनिर्देश्यं तप्येते गन्धमादने ॥ १५

जामदग्न्यः—

स राजा महतीं सेनां योजयित्वा षडङ्गिनीम् ।
अमृष्यमाणस्सम्प्रायाद् यत्र तावपराजितौ ॥ १६
[3]स गत्वा विषमं घोरं पर्वतं गन्धमादनम् ।
[4]मार्गमाणोऽभ्यगच्छत् तौ तापसावपराजितौ ॥ १७
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसन्ततौ ।
शीतवातातपैरुग्रैः कर्शितौ पुरुषोत्तमौ ॥ १८

---

1. अ-क—अनेकजयिनौ सङ्ख्ये यौ वै पुरुषसत्तमौ [पाठान्तरम्]
2. ग-घ-ङ-म-मा—विहर संयुगे म—विरह संयुगे ।
3. ख—नास्तीदमर्धम् । 4. अ-क-ख—इदमध नास्ति ।

अभिवाद्योपसङ्गृह्य पर्यपृच्छदनामयम् ॥ १८॥

तमर्चित्वा मूलफलैर् आसनेनोदकेन च ।

अब्रूतां परवीरघ्नं किं कार्यं क्रियतामिति ॥ १९॥

[1]ततस्तामानुपूर्वीं स पुनरेवान्वकीर्तयत् ॥ २०

दम्भोद्भवः—

बाहुभ्यां मे जिता भूमिर् निहतास्सर्वशत्रवः ।

भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् ॥ २१

आतिथ्यं दीयतामेतत् काङ्क्षितं मे चिरं प्रति ॥ २१॥

नरनारायणौ—

अपेतक्रोधलोभोऽयम् आश्रमो राजसत्तम ॥ २२

न ह्यस्मिन्नाश्रमे युद्धं कुतश्शस्त्रं कुतोऽनृजुः ।

अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ॥ २३

जामदग्न्यः—

उच्यमानस्तथाऽपि स भूय एवाभ्यभाषत ।

पुनः पुनः क्षाम्यमाणस् सान्त्व्यमानश्च भारत ॥ २४

दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ ॥ २४॥

ततो नरस्त्विषीकाणां मुष्टिमादाय भारत ।

अब्रवीदेहि युद्ध्यस्व युद्धकाम मया सह ॥ २५॥

सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् ॥ २६

---

1. ख-ङ-ञ-म—नास्तीदमर्धम् ।

[1]सन्नह्यस्व च वर्माणि यानि चान्यानि सन्ति ते ॥ २६॥

अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् ।
[2]यदाह्वयसि दर्पेण ब्राह्मणप्रमुखाञ्जनान् ॥ २७॥

दम्भोद्भवः—

यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे ।
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ॥ २८॥

जामदग्न्यः—

इत्युक्त्वा शरवर्षेण सर्वतस्समवाकिरन् ।
दम्भोद्भवस्तापसौ तौ जिघांसुर्बलदर्पितः ॥ २९॥

तस्य तानस्यतः क्षिप्रम् इषून् परतनुच्छिदः ।
कदर्थीकृत्य स मुनिर् इषीकाभिरपानुदत् ॥ ३०॥

ततोऽस्मै प्रासृजद्धोरम् ऐषीकमपराजितः ।
अस्त्रमप्रतिसन्धेयं तदद्भुतमिवाभवत् ॥ ३१॥

तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया ।
निमित्तवेधी स मुनिर् इषीकाभिस्समर्पयत् ॥ ३२॥

स दृष्ट्वा स्फीतमाकाशम् इषीकाभिस्समाचितम् ।
पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ॥ ३३॥

तमब्रवीन्नरो राजन् शरण्यश्शरणैषिणाम् ॥ ३४

नरः—

ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ॥ ३४॥

---

1. अ-क—इदमर्धं नास्ति ।  2. अ-क-ग—नास्तीदमर्धम् ।

[1]नैतादृक् पुरुषो राजन् क्षत्रधर्ममनुस्मरन् ।
मनसा नृपशार्दूल भवत्यरिपुरञ्जयः ॥ ३५॥
मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित् कदाचन ।
सदृशाच् श्रेयसो वाऽपि तत् ते राजन् समाहितम् ॥ ३६॥
जितक्रोधः कृतप्रज्ञो निरहङ्कार आत्मवान् ।
दान्तश्शान्तो मृदुः क्षेमं प्रजाः पालय सर्वदा ॥ ३७॥
[2]मा स्म भूयः क्षिपेः कश्चिद् अविदित्वा बलाबलम् ।
अनुज्ञातस्स्वस्ति गच्छ स्वगृहं राजसत्तम ॥ ३८॥
कुशलं ब्राह्मणान् पृच्छेर् आवयोर्वचनाद्भृशम् ॥ ३९

जामदग्न्यः—

ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्मं चैवाचरद्भृशम् ॥ ४०
अनेकं चास्य तत् कर्म तन्नरेण कृतं पुरा ।
ततो गुणैस्सुबहुभिश् श्रेष्ठो नारायणोऽभवत् ॥ ४१
तस्माद्यावद्धनुश्श्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ।
तावत् त्वं मानमुत्सृज्य गच्छ राजन् धनञ्जयम् ॥ ४२
[3]काकुदीकं शुकं नाकम् अक्षिसन्तर्जनं तथा ।

1. घ-ङ-म—नास्त्ययं श्लोकः। 2. इदमर्धं नास्ति।
3. मा—ककुदीपं पङ्गुचापमक्षिसन्तर्दनं तथा।
म—ककुदीपं पङ्कुलापमक्षिसन्तर्जनं तथा।
ख-ग-ङ—कुक्कुदीपं कुक्कुचापमर्थिसन्तर्दनं तथा।
घ—इतः श्लोकपञ्चकं नास्ति।

सन्तानं नर्तकं घोरम् आस्यमोदकमष्टमम् ॥　　४३

एतैर्विद्धास्सर्व एव मरणं यान्ति मानवाः ।
[1]उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः ॥　　४४

स्वपन्ति च प्लवन्ते च च्छर्दयन्ति च मानवाः ।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ॥　　४५

असङ्ख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः ।
त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयम् ॥　　४६

नरनारायणौ यौ तौ तावेवार्जुनकेशवौ ।
विजानीहि महाराज प्रवीरौ पुरुषोत्तमौ ॥　　४७

यद्येतदेवं जानासि न च मामभिशङ्कसे ।
[2]आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ॥　　४८

अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ॥　　४९

निर्माता सर्वलोकानाम् ईश्वरस्सर्वलोककृत् ।
यस्य नारायणो बन्धुर् अर्जुनो दुस्सहो युधि ॥　　५०

कस्समुत्सहते जेतुं त्रिषु लोकेषु भारत ।

---

1. मा—अर्धद्वयं नास्ति
2. ख-ग-मा—शाम्यमात्मनि चास्थाय ।
　　घ-ङ—साम्यमात्मनि चास्थाय ।

वीरं कपिध्वजं जिष्णुं यस्य नास्ति समो युधि ॥ ५१

भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि ।
तत् तथैवास्तु भद्रं ते स्वार्थमत्रानुचिन्तय ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये ५२ श्लोकाः]

---

## ॥ चतुरशीतितमोऽध्यायः ॥

---

कण्वेन सुयोधनस्य बलावलेपविलोपनाय मातलिवरान्वेषणकथाकथनारम्भः ॥ १॥ मातलिना गुणकेशिनामकस्वकन्याया अनुगुणवरान्वेषणाय नागलोकं प्रति प्रस्थानम् ॥ २ ॥

---

वैशम्पायनः—

जामदग्न्यवचश्श्रुत्वा कण्वोऽपि भगवानृषिः ।
दुर्योधनमिदं वाक्यम् अब्रवीत् कुरुसंसदि ॥ १

कण्वः—

अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः ।
तथैव भगवन्तौ तौ नरनारायणावृषी ॥ २

आदित्यानां हि सर्वेषां विष्णुरेकस्सनातनः ।
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ॥ ३

[1]निमित्तमरणाश्चान्ये चन्द्रसूर्यौ मही जलम् ।
वायुरग्निस्तथाऽऽकाशं ग्रहास्तारागणास्तथा ॥　४

ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा ।
क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ॥　५

मुहूर्तमरणाश्चान्ये मानुषा मृगपक्षिणः ।
तिर्यग्योन्यश्च ये चान्ये जीवलोकचरास्स्मृताः ॥　६

भूयिष्ठेन तु राजानश् श्रियं मुक्त्वाऽऽयुषः क्षये ।
मरणं प्रतिगच्छन्ति भोक्तुं सुकृतदुष्कृते ॥　७

स भवान् धर्मपुत्रेण शमं कर्तुमिहार्हति ।
पाण्डवाः कुरवश्चैव पालयन्तु वसुन्धराम् ॥　८

बलवानहमित्येव न मन्तव्यं सुयोधन ।
बलवन्तो बलिभ्यो हि दृश्यन्ते पुरुषर्षभ ॥　९

न बलं बलिनां मध्ये बलं भवति कौरव ।
बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः ॥　१०

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ॥　११

मतस्त्रिलोकराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥　१२

---

1. ग-व-ङ—निमित्तमावास्त्वन्ये च । म-मा—निमित्तमरणास्त्वन्ये

गुणकेशीति विख्याता नाम्ना सा देवरूपिणी ।
श्रिया च वपुषा चैव स्त्रियोऽन्यास्साऽतिरिच्यते ॥ १३

तस्याः प्रदानसमयं मातलिस्सह भार्यया ।
ज्ञात्वा विममृशे राजंस् तद्धितं परिचिन्तयन् ॥ १४

मातलिः—

धिक् खल्वलघुशीलानाम् उच्छ्रितानां यशस्विनाम् ।
नराणामृद्धसत्वानां कुले कन्याप्ररोहणम् ॥ १५

मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यका सती ॥ १६

देवमानुपलोकौ द्वौ मनसा चैव चक्षुषा ।
अवगाह्यैव विचितौ न च मे रोचते वरः ॥ १७

कण्वः—

न देवान् नैव दितिजान् न गन्धर्वान् न मानुषान् ।
अरोचयद्वरकृते त्रिषु लोकेषु वै ऋषीन् ॥ १८

भार्यया तु स सम्मन्त्र्य सह रात्रौ सधर्मया ।
मातलिर्नागलोकाय चकार गमने मतिम् ॥ १९

न मे देवमनुष्येषु गुणकेश्यास्समो वरः ।
रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ २०

इत्यामन्त्र्य सुधर्मा स कृत्वा चाभिप्रदक्षिणम् ।
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥　　२१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

पातालं गच्छतो मातलेः वरुणं गच्छता नारदेन यदृच्छया पथि समागमः ॥१॥ वरुणेन सत्कृतयोस्तयोस्तमापृच्छ्य पातालं प्रति निवर्तनम् ॥ २ ॥ नारदेन मातलिं प्रति वरुणलोके तत्तद्वस्तुविशेषान् प्रदर्श्य तद्गुणवर्णनम् ॥ ३ ॥

---

कण्वः—

मातलिस्तु व्रजन् मार्गे नारदेन महर्षिणा ।
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥　　१

नारदोऽथाब्रवीदेनं क भवान् गन्तुमुद्यतः ।
स्वेन वा सूत कार्येण शासनाद्वा शतक्रतोः ॥　　२

मातलिर्नारदेनैवं सम्पृष्टः पथि गच्छता ।
यथावत् सर्वमाचष्ट स्वकार्यं नारदं प्रति ॥　　३

तमुवाचाथ स मुनिर् गच्छावस्सहिताविति ॥　　३॥

नारदः—

सलिलेशदिदृक्षार्थम् अहमप्युद्यतो दिवः ॥ ४

अहं ते सर्वमाख्यास्ये [1]दर्शयन् वसुधातले ।

दृष्ट्वा तत्र वरं कञ्चिद् रोचयिष्याव मातले ॥ ५

कण्वः—

अवगाह्य ततो भूमिम् उभौ मातलिनारदौ ।

ददृशाते महात्मानौ लोकपालमपाम्पतिम् ॥ ६

तत्र देवर्षिसदृशीं पूजां स प्राप नारदः ।

महेन्द्रसदृशीं चैव मातलिः प्रत्यपद्यत ॥ ७

तावुभौ प्रीतमनसौ कार्यवन्तौ निवेद्य ह ।

वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ८

नारदस्सर्वभूतानाम् अन्तर्भूमिनिवासिनाम् ।

जानंश्चकार व्याख्यानं यन्तुस्सर्वमजानतः ॥ ९

नारदः—

दृष्टस्ते वरुणस्सूत पुत्रपौत्रसमावृतः ।

पश्य तोयनिधेस्स्थानं सर्वतोभद्रमृद्धिमत् ॥ १०

एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः ।

एष वै शीलवृत्तेन शौचेन च विशिष्यते ॥ ११

एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः ।

रूपवान् दर्शनीयश्च सोमपुत्र्या वृतः पतिः ॥ १२

1. ख—दर्शयन् वै रसातले। ङ-म-मा—दर्शयन् वसुधातलम्।

ज्योत्स्नाकालीति यामाहुर् द्वितीयां रूपतश्श्रियम् ।
[1]अदित्याश्चैव गोपुत्रो ज्येष्ठः पुत्रकृते कृतः ॥　　१३

भवनं पश्य वारुण्यं यदेतत् सर्वकाञ्चनम् ।
यत् प्राप्य सुरतां प्राप्ता सुरास्सुरपतेस्सखे ॥　　१४

एतानि हृतराज्यानां दैतेयानां च मातले ।
दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥　　१५

अक्षयाणि किलैतानि प्रवर्तन्ते स्म मातले ।
अनुभावप्रयुक्तानि सुरैरवजितानि ह ॥　　१६

अत्र राक्षसजात्यश्च भूतयोन्यश्च मातले ।
दिव्यप्रहरणाश्चासन् पूर्वदैवतनिर्मिताः ॥　　१७

अग्निरेष महार्चिष्मान् जागर्ति वरुणह्रदे ।
वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता ॥　　१८

एष [2]गाण्डीवकश्चापो लोकसंहारसम्भवः ।
रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ॥　　१९

[3]एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम् ।
सहस्रशतसङ्ख्येन प्राणेन सततं ध्रुवः ॥　　२०

अशिष्टानपि शास्त्येष रक्षोबन्धुषु राजसु ।

---

1. ख — इतः सार्धश्लोको नास्ति ।　2. अ-क-ग-म-मा — गाण्डीमय
3. अ-क — नास्तीदमर्धम् ।

सृष्टः प्रथमजो दण्डो ब्रह्मणा ब्रह्मवादिना ॥ २१

एतच्छत्रं नरेन्द्राणां महच्चक्रेण भूषितम् ।
पुत्रास्सलिलराजस्य धारयन्ति महोदयम् ॥ २२

एतत् सलिलराजस्य छत्रं छत्रगृहे स्थितम् ।
सर्वतस्सलिलं शीतं जीमूत इव वर्षति ॥ २३

[1]एतच्छत्रात् परिभ्रष्टं सलिलं सोमनिर्मलम् ।
तमसा [2]मूर्छितं भाति येन नार्छति दर्शनम् ॥ २४

बहून्यद्भुतरूपाणि द्रष्टव्यानीह भूतले ।
तव कार्योपरोधस्स्यात् तस्माद्गच्छाव मा चिरम् ॥ २५

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ षडशीतितमोऽध्यायः ॥

नारदेन मातलिं पातालं नीत्वा तत्रत्यवस्तुविशेषान् प्रदर्श्य तद्गुणनिरूपणम् ॥ १ ॥ मातलिना तत्र वरानभिरोचनवचनपूर्वकमन्यत्र यात्राकीर्तनम् ॥ २ ॥

---

नारदः—

एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् ।
पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ १

---

1. ङ-म—अस्माच्छत्रात् ।
2. ङ-ग—मिश्रितं याति । ख-म-मा—मिश्रतां याति ।

इदमद्भिस्समं प्राप्ता ये केचिज्जङ्गजङ्गमाः ।
प्रविशन्तो महानादं नदन्ति भयपीडिताः ॥ २

अत्रासुरोऽग्निस्सततं दीप्यते वारिभोजनः ।
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥ ३

अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ।
अतस्सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥ ४

[1]अत्र दिव्यो हयशिरः काले पर्वणि पर्वणि ।
उत्तिष्ठति सुवर्णाभम् अद्भिरापूरयञ्जगत् ॥ ५

यस्मादत्र समग्रास्ताः पतन्ति जलमूर्तयः ।
तस्मात् पातालमित्येव ख्यायते पुरमुत्तमम् ॥ ६

ऐरावणोऽस्मात् सलिलं गृहीत्वा जगतो हितम् ।
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति[2] ॥ ७

[3]अत्र नानाविधाकारास् तिमयो नैकरूपिणः ।
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥ ८

अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।

---

1. अ-क-ग-ब-म—अत्रादित्यो हयशिराः

2. ङ—ऐरावतो नागराजो वामनः कुमुदोऽञ्जनः ।
प्रसूतास्सुप्रतीकस्य वंशे वारणसत्तमाः ॥ [अधिकः पाठः]

3. ङ—इदमर्धं नास्ति ।

मृता हि दिवसे सूत पुनर्जीवन्ति वै निशि ॥ ९

[1]उद्यन् नित्यशश्चात्र चन्द्रमां रश्मिबाहुभिः ।
अमृतं संस्पृशन् स्पर्शात् सञ्जीवयति देहिनः ॥ १०

अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः ।
दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥ ११

अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः ।
भूतये सर्वभूतानाम् अचरत् तप उत्तमम् ॥ १२

अत्र गोव्रतिनो विप्रास् स्वाध्यायाम्नायकर्शिताः ।
त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः ॥ १३

यत्रतत्रशयो नित्यं येनकेनचिदाशितः ।
येनकेनचिदाच्छन्नस् स [2]गोव्रत इहोच्यते ॥ १४

ऐरावणो नागराजो वामनः कुमुदोऽञ्जनः ।
प्रसूतास्सुप्रतीकस्य वंशे वारणसत्तमाः ॥ १५

पश्य यद्यत्र ते कश्चिद् रोचते गुणतो वरः ।
वरयिष्यामि तं गत्वा यत्नमास्थाय मातले ॥ १६

अण्डमेतज्जले न्यस्तं दीप्यमानमिव श्रिया ।

1. ख-ग-घ-ङ-म-मा—उदये रश्मिभिश्चात्र चन्द्रमा रश्मिपर्वते ।
[पाठान्तरम्]

2. ख-ग-घ—गोवृत्तिरिहोच्यते । म—गोव्रजिरिहोच्यते ।
मा-ङ—गोव्रतिरिहोच्यते ।

अग्रजानां निसर्गाद्धै नोद्विजति न सर्पति ॥ १७

नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै ।
पितरं मातरं चापि नास्य जानाति कश्चन ॥ १८

अतः किल महानग्निर् अन्तकाले समुत्थितः ।
धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् ॥ १९

कण्वः—

[1]मातलिस्त्वब्रवीच्छ्रुत्वा नारदस्याथ भाषितम् ।
न मेऽत्र रोचते कश्चिद् अन्यतो व्रज मा चिरम् ॥ २०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ ५४ ॥ भगवद्यानपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये २० श्लोकाः]

## ॥ सप्ताशीतितमोऽध्यायः ॥

नारदेन दैत्यदानवायतनं हिरण्यपुरमुपेत्य मातलिं प्रति तत्र वरान्वेषणचोदनम् ॥ १ ॥ मातलिना दैत्यदानवानां देवकुलनित्यविरोधितया परपक्षानुबन्धानभिरुचिवचनम् ॥ २ ॥

नारदः—

हिरण्यपुरमित्येतत् ख्यातं पुरवरं महत् ।
दैत्यानां दानवानां च मायाशतविहारिणाम् ॥ १

1. म—नास्त्ययं श्लोकः ।

अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा ।
मयेन मनसा सृष्टं पातालतलमाश्रितम् ॥ २

अत्र मायासहस्राणि विकुर्वाणा महौजसः ।
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ॥ ३

नैते शक्रेण नान्येन मयेन वरुणेन वा ।
शक्यन्ते वशमानेतुं तथैव धनदेन च ॥ ४

पौलोमाः कालकेयाश्च तथा विष्णुपदोद्भवाः ।
नैर्ऋता यातुधानाश्च ब्रह्मपादोद्भवाश्च ये ॥ ५

दंष्ट्रिणो भीमवेगाश्च वायुवेगपराक्रमाः ।
मायावीर्योपसम्पन्ना निवसन्त्यात्मरक्षिणः ॥ ६

निवातकवचा नाम दानवा युद्धदुर्मदाः ।
जानासि च यथा शक्रो नैताञ्शक्नोति बाधितुम् ॥ ७

बहुशो मातले त्वं च तव पुत्रश्च गोमुखः ।
निर्भग्नो देवराजश्च सहपुत्रश्शचीपतिः ॥ ८

पश्य वेश्मानि रौक्माणि मातले राजतानि च ।
[1]कर्मणा विधियुक्तेन युक्तान्युपगतानि च ॥ ९

वैडूर्यहरितानीव प्रवालरुचिराणि च ।
अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च ॥ १०

1. अ-क-ख—नास्तीदमर्धम् ।

पार्थिवानीव चाभान्ति पद्मरागमयानि च ।
[1]शैलानीव च दृश्यन्ते तारकाणीव चाच्युत ॥ ११

सूर्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च ।
मणिजालविचित्राणि प्रांशूनि विविधानि च ॥ १२

[2]नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा ।
गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च ॥ १३

आक्रीडान् पश्य दैत्यानां तथैव शयनान्युत ।
रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥ १४

जलदाभांस्तथा शैलांस् तोयप्रस्रवणान्वितान् ।
कामपुष्पफलांश्चापि पादपान् कामचारिणः ॥ १५

मातले कश्चिदत्रापि रुचिरस्ते वरो भवेत् ।
अथवाऽन्यां दिशं भूमेर् गच्छाव यदि मन्यसे ॥ १६

कण्वः—

मातलिस्त्वब्रवीदेनं भाषमाणं तथाविधम् ॥ १६॥

मातलिः—

देवर्षे नैव मे कार्यं विप्रियं त्रिदिवौकसाम् ॥ १७

नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः ।
अरिपक्षेण सम्बन्धं रोचयिष्याम्यहं कथम् ॥ १८

1. अ-क—नास्तीदमर्धम् । 2. ध—नास्तीदं श्लोकद्वयम् ।

अन्यत्र साधु गच्छावो द्रष्टुं नार्हसि दानवान् ।
जानामि तव चात्मानं इच्छसे कलहानिति ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ५४ ॥ भगवद्यानपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ अष्टाशीतितमोऽध्यायः ॥

नारदेन मातलिं सुपर्णलोकमुपनीय सुपर्णवंश्यानां पक्षिणां नामनिर्देशपूर्वकं गुणानुकीर्तनम् ॥ १ ॥ तत्र वरानभिरोचने देशान्तरनयनवचनम् ॥ २ ॥

---

नारदः—

अयं लोकस्सुपर्णानां पक्षिणां पन्नगाशिनाम् ।
विक्रमे गमने भारे नैषामस्ति परिश्रमः ॥ १

वैनतेयसुतैस्सूत षड्भिस्ततमिदं कुलम् ॥ १॥

सुमुखेन सुदाम्ना च सुनेत्रेण सुवर्चसा ।
सुरुचा पक्षिराजेन सुबलेन च मातले ॥ २॥

वर्धितानि प्रसूत्या वै विनताकुलकर्तृभिः ।
[1]पक्षिराजाभिजात्यानां सहस्राणि शतानि च ॥ ३॥

1. अ-क—नास्तीदमर्धम् ।

कश्यपस्य ततो वंशे जातैर्भूतिविवर्धनैः ॥ ४

सर्वे ह्येते श्रिया युक्तास् सर्वे श्रीवत्सलक्षणाः ।
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ॥ ५

कर्मणा क्षत्रिया ह्येते निर्घृणा भोगिभोजिनः ।
ज्ञातिसङ्क्षयकर्तृत्वाद् ब्राह्मण्यं न लभन्ति वै ॥ ६

नामानि चैषां वक्ष्यामि यथा प्राधान्यतश्शृणु ।
मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ॥ ७

दैवतं विष्णुरेतेषां विष्णुरेव परायणम् ।
हृदि चैषां सदा विष्णुर् विष्णुरेव गतिस्तथा ॥ ८

सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः ।
अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥ ९

काश्यपिर्ध्वजविष्कम्भो वैनतेयोऽथ वामनः ।
वातवेगो निशाचक्षुर् निमेषोऽनिमिषस्तथा ॥ १०

त्रिवारस्सप्तवारश्च वाल्मीकिर्द्वीपकस्तथा ।
[1]दैत्यद्वीपस्तपोद्वीपस् सारसः पद्मलोचनः ॥ ११

सुमुख[2]श्चित्रकेतुश्च चित्रबर्हस्तथाऽनघः ।

---

1. ख-ग-घ-ङ-म-मा—चैत्यद्वीपस्सरिद्द्वीपश्शरभः पद्मकेसरः ।
क—दैत्यद्वीपस्सरिद्द्वीपस्सारसः पद्मकेसरः ।
[ पाठान्तरम् ]

2. ग-घ-ङ-म—स्सुखकेतुश्च चित्रकेतुस्तथाऽनघः ।
मा—श्च सुकेतुश्च चित्रकेतुस्तथाऽनघः ॥

मेवहृत् कुमुदो दक्षस् सर्पान्तस्सोमभोजनः ॥ १२

[1-2]गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः ।

विष्णुधन्वा कुमारश्च परिबर्हो हरिस्तथा ॥ १३

सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ।

मलयो मातरिश्वा च दिवाकरनिशाकरौ ॥ १४

एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ।

प्राधान्यतस्ते यशसा कीर्तिताः पक्षिणश्च ये ॥ १५

यद्यत्र न रुचिः काचिद् एहि गच्छाव मातले ।

तं नयिष्यामि देशं त्वां वरं यत्रोपलप्स्यसे ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ५४ ॥ भगवद्यानपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ एकोननवतितमोऽध्यायः ॥

नारदेन मातलिं रसातलमुपनीय तत्र वास्तव्यसुरभिसन्ततिगुणस्तवनम् ॥ १ ॥

---

नारदः—

इदं रसातलं नाम सप्तमं पृथिवीतलम् ।

यत्रास्ते सुरभिर्माता गवाममृतसम्भवा ॥ १

---

1. अ-क—नास्तीदमर्धम् ।
2. ख—इन्द्रद्वारिस्सुकेतुश्च सूर्यनेत्रश्चिरान्तकः । [पाठान्तरम्]

क्षरन्ती सततं क्षीरं पृथिवीसारसम्भवम् ।
षण्णां रसानां सारेण रसमेकमनुत्तमम् ॥ २

अमृतेनाभितृप्तस्य वाचमुद्गिरतः पुरा ।
पितामहस्य वदनाद् उदतिष्ठदनिन्दिता ॥ ३

यस्याः क्षीरस्य धाराया निपतन्त्या महीतले ।
ह्रदः कृतः क्षीरनिधिः पवित्रं परमम् पदम् ॥ ४

पुष्पितस्येव फेनेन पर्यन्तमनुवेष्टितम् ।
पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः ॥ ५

फेनपा नाम ते ख्याताः फेनाहाराश्च मातले ।
[1]उग्रे तपसि वर्तन्ते येषां बिभ्यति देवताः ॥ ६

अस्याश्चतस्रो [2]धेन्वोऽन्या दिक्षु सर्वासु मातले ।
[3]निवसन्ति दिशां पाल्यो धारयन्त्यो दिशस्स्म ताः ॥ ७

पूर्वां दिशं धारयते सुरूपा नाम सौरभी ।
दक्षिणां हंसिका नाम धारयत्यपरा दिशम् ॥ ८

पश्चिमा वारुणी दिक् च धार्यते वै सुभद्रया ।
[4]महानुभावया नित्यं मातले विश्वरूपया ॥ ९

सर्वकामदुघा नाम धेनुर्धारयते दिशम् ।
उत्तरां मातले धर्म्यां तथैलविलसंश्रिताम् ॥ १०

---

1. च-ङ—नास्त्ययं श्लोकः।    2. अ-क-ख-च-ङ—धेन्वाद्या
3. अ-क—इदमर्धं नास्ति।    4. अ-क-ख—इदमर्धं नास्ति।

आसां तु पयसा मिश्रं पयो निर्मथ्य सागरे ।
मन्थानं मन्दरं कृत्वा दैवैरसुरसंहितैः ॥ ११
उद्धृता वारुणी लक्ष्मीर् अमृतं चापि मातले ।
उच्चैश्श्रवाश्चाश्वराजो मणिरत्नं च कौस्तुभम् ॥ १२
सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम् ।
अमृतं चामृताशेषु सुरभिः क्षरते पयः ॥ १३
अत्र गाथा पुरा गीता रसातलनिवासिभिः ।
पौराणी श्रूयते लोके गीयते या मनीषिभिः ॥ १४
न नागलोके न स्वर्गे न विमाने त्रिविष्टपे ।
परिवासस्सुखस्तादृक् रसातलतले यथा ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
॥ ५४ ॥ भगवद्यानपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[अस्मिन्नध्याये १५ श्लोकाः]

## ॥ नवतितमोऽध्यायः ॥

नारदेन मातलिं भोगवतीं नीत्वा वरान्वेषणचोदनम् ॥ १ ॥ तत्र सुमुखं नाम कञ्चन भुजगराजमभिरोचमानेन मातलिना नारदं प्रति तस्य जन्मकर्मादिप्रश्नः ॥ २ ॥ नारदेन तस्य आर्यकनाम्नो भोगिनः पौत्रत्वे कीर्तिते मातलिना नारदं प्रति तद्धटनाभ्यर्थना ॥ ३ ॥

नारदः—

इयं भोगवती नाम पुरी वासुकिपालिता ।
यादृशी देवराजस्य पुरी वर्याऽमरावती ॥ १

एष शेषस्स्थितो नागो येनेयं धार्यते सदा ।
[1]तपसा लोकमुख्येन प्रभावमहिता मही ॥ २

श्वेतोच्चयनिभाकारो नानाविधविभूषणः ।
सहस्रं धारयन् मूर्ध्ना ज्वालाजिह्वो महाबलः ॥ ३

इह नानाविधाकारा नानाविधविभूषणाः ।
काश्यपस्य सुता नागा निवसन्ति गतव्यथाः ॥ ४

मणिस्वस्तिकवज्राङ्काः कमण्डलुकलक्षणाः ।
सहस्रसंख्या बलिनस् सर्वे रौद्रास्स्वभावतः ॥ ५

सहस्रशिरसः केचित् केचित् पञ्चशताननाः ।
शतशीर्षास्तथा केचित् केचित् त्रिशिरसोऽपि च ॥ ६

त्रिपञ्चशिरसः केचित् केचित् सप्तमुखास्तथा ।
महाबला महाकायाः पन्नगाभोगभोगिनः ॥ ७

बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
नागानामेकवंशानां यथाश्रेष्ठं तु मे शृणु ॥ ८

वासुकिस्तक्षकश्चैव कार्कोटकधनञ्जयौ ।
[2]कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ९

बाह्यकुण्डो मणिर्नागस् तथैवापूरणः खगः ।

---

1. अ-क-ख—इदमर्धं नास्ति ।
2. अ-क-ख—अर्धचतुष्टयं नास्ति ।

वामनश्शैलपत्रश्च कुकुरः कुकुणस्तथा ॥ १०

आर्यको नन्दकश्चैव तथा शलकपोतकौ ।
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ११

सुदामनो दधिमुखश् शङ्खो नन्दोपनन्दकौ ।
आप्तः कोटरकश्चैव शिखण्डी निष्ठुरस्तथा ॥ १२

तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ १३

[1]करवीरः पीठकरस् संवृत्तो वृत्त एव च ।
[2]पिण्डारो बिल्वपत्रश्च मूषिकादश्शिरीषकः ॥ १४

दिलीपश्शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः ।
कौरव्यो धृतराष्ट्रश्च कुहकः कुशकस्तथा ॥ १५

विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।
बधिरश्च विकुण्डश्च विरथस्सुरथस्तथा ॥ १६

एते चान्ये च बहवः कश्यपस्यात्मजास्स्मृताः ।
मातले पश्य यद्यत्र कश्चित् ते रोचते वरः ॥ १७

**कण्वः—**

मातलिस्त्वेवमव्यग्रस् सततं सन्निरीक्ष्य वै ।
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ॥ १८

---

1. मा—श्लोकद्वयं नास्ति ।
2. ग-घ—पिण्डको बिल्वनेत्रश्च । ङ-म—पिण्डरो बिल्वनेत्रश्च ।

मातलिः—

स्थितो य एष पुरतः कौरव्यस्यार्यकस्य तु ।
द्युतिमान् दर्शनीयश्च कस्यैष कुलनन्दनः ॥ १९

कः पिता जननी चास्य कतमस्यैष भोगिनः ।
वंशस्य कस्यैष महान् केतुभूत इव स्थितः ॥ २०

प्रणिधानेन धैर्येण रूपेण वयसा च मे ।
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः ॥ २१

कण्वः—

मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात् ।
निवेदयामास तदा माहात्म्यं जन्म कर्म च ॥ २२

नारदः—

ऐरावतकुले जातस् सुमुखो नाम नागराट् ।
आर्यकस्य मतः पौत्रो दौहित्रो [1]वामनस्य च ॥ २३

एतस्य हि पिता नागश् चिकुरो नाम मातले ।
नचिराद्वैनतेयेन पञ्चत्वमुपपादितः ॥ २४

कण्वः—

ततोऽब्रवीत् प्रीतमना मातलिर्नारदं वचः ॥ २४॥

मातलिः—

एष मे रुचिरस्तात जामाता भुजगोत्तमः ॥ २५

---

1. म—मैनकस्य च । मा—मेनकस्य च ।

क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै ।
अस्य नागपतेर्दातुं प्रियां दुहितरं मुने ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

॥ ५४ ॥ भगवद्यानपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ अस्मिन्नध्याये २६ श्लोकाः ]

## ॥ एकनवतितमोऽध्यायः ॥

नारदेन आर्यकं प्रति पौत्रार्थं मातलिकन्यापरिग्रहचोदनम् ॥ १ ॥ आर्यकेण नारदं प्रति सुमुखजनकं भक्षितवता वैनतेयेन मासान्तरे सुमुखभक्षणप्रतिज्ञानिवेदनम् ॥२॥ मातलिना तार्क्ष्यात् सुमुखरिरक्षिषया सुमुखनारदाभ्यां सह शक्रसमीपगमनम् ॥ ३ ॥ नारदेन मातलिकार्यं विज्ञापितेन विष्णुना सुमुखाय अमृतवितरणज्ञापनेऽपि इन्द्रेण अमृताप्रदानेनैव दीर्घायुर्दानम् ॥ ४ ॥ मातलिना सुमुखाय स्वकन्यां प्रदाय विवाहनिर्वर्तनम् ॥ ५ ॥

कण्वः—

मातलेर्वचनं श्रुत्वा नारदो मुनिसत्तमः ।
अब्रवीन्नागराजानम् आर्यकं कुरुनन्दन ॥ १

नारदः—

सूतोऽयं मातलिर्नाम शक्रस्य दयितस्सुहृत् ।
शुचिश्शीलगुणोपेतस् तेजस्वी वीर्यवान् बली ॥ २
शक्रस्यायं सखा चैव मन्त्री सारथिरेव च ।

[1]अल्पान्तरप्रभावश्च वासवेन समो रणे ॥ ३

अयं हरिसहस्रेण युक्तं चैन्द्रं रथोत्तमम् ।
देवासुरेषु युद्धेषु मनसैव नियच्छति ॥ ४

[2]अनेन विजितानश्वैर् दोर्भ्यां जयति वासवः ।
अनेन प्रहृते पूर्वं बलभित् प्रहरत्युत ॥ ५

अस्य कन्या वरारोहा रूपेणासदृशी भुवि ।
सत्वशीलगुणोपेता गुणकेशीति विश्रुता ॥ ६

तस्यास्य यत्नाच्चरतस् त्रैलोक्यममरद्युतेः ।
[3]सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ॥ ७

यदि ते रोचते सौम्य भुजगोत्तम मा चिरम् ।
क्रियतामार्यक क्षिप्रं बुद्धिः कन्यापरिग्रहे ॥ ८

यथा विष्णुकुले लक्ष्मीर् यथा स्वाहा विभावसौ ।
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ९

पौत्रस्यार्थे भवांस्तस्माद् गुणकेशीं प्रतीच्छतु ।
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ १०

पितृहीनमपि ह्येनं गुणतो वरयामहे ।
बहुमानाच्च भवतस् तथैवैरावतस्य च ॥ ११

---

1. अ-क-ख—नास्तीदमर्धम् ।　2. अ-क-ख—नास्तीदमर्धम् ।
3. अ-क-ख—नास्तीदमर्धम् ।

सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः ।
अभिगम्य स्वयं कन्याम् अर्यं दातुं समुद्यतः ॥ १२

मातलेस्तस्य सम्मानं कर्तुमर्हो भवानपि ॥ १२॥

कण्वः—

स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः ।
म्रियमाणे तथा पौत्रे पुत्रे च निधनं गते ॥ १३॥

आर्यकः—

न मे नैतद्बहुमतं महर्षे वचनं तव ।

सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् ॥ १४॥

कारणस्य तु दौर्बल्याच् चिन्तयामि महामुने ॥ १५

अस्य देहकरस्तात मम पुत्रो महामुने ।
भक्षितो वैनतेयेन दुःखार्तास्तेन वै वयम् ॥ १६

पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो ॥ १७

ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम् ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन च ॥ १८

कण्वः—

[1]आर्यकस्य वचश्श्रुत्वा गरुडं प्रति भाषितम् ।

मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया ॥ १९

1. ख-ङ—कोशयोरेवेदमर्धं दृश्यते ।

जामातृभावेन वृतस् सुमुखस्तव पुत्रजः ॥ १९॥
सोऽयं मया च सहितो नारदेन च पन्नगः ।
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् ॥ २०॥
शेषेणैवास्य कार्यस्य प्राप्तिस्स्यान्महदायुषः ।
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ २१॥
सुमुखश्च मया सार्धं देवेशमभिगच्छतु ।
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजङ्गम ॥ २२॥
आर्यकेणाभ्यनुज्ञाता गम्यतामिति भारत ॥ २३
ततस्ते सुमुखं गृह्य सर्व एव महौजसः ।
ददृशुश्शक्रमासीनं देवराजं महाद्युतिम् ॥ २४
सङ्गत्या तत्र भगवान् विष्णुरासीच्चतुर्भुजः ।
ततस्तत् सर्वमाचख्यौ नारदो मातलिं प्रति ॥ २५
ततः पुरन्दरं विष्णुर् उवाच भुवनेश्वरम् ॥ २५॥

श्रीभगवान्—

अमृतं दीयतामस्मै क्रियताममरैस्समः ॥ २६
मातलिर्नारदश्चैव सुमुखश्चैव वासव ।
लभन्तां भवतः कामात् काममेतं यथेप्सितम् ॥ २७

कण्वः—

पुरन्दरोऽथ सञ्चिन्त्य वैनतेयपराक्रमम् ।
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ २८

श्रीभगवान्—

ईशस्त्वं सर्वलोकानां चराणामचराश्च ये ।

त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो ॥ २९

कण्वः—

प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम् ।

न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ ३०

लब्ध्वा वरं तु सुमुखस् सुमुखस्सम्बभूव ह ।

कृतदारो यथाकामं जगाम च गृहान् प्रति ॥ ३१

नारदस्त्वार्यकश्चैव कृतकार्यौ मुदा युतौ ।

प्रतिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

॥ ५४ ॥ भगवद्यानपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

## ॥ द्विनवतितमोऽध्यायः ॥

सुमुखाय आयुर्दानश्रवणकुपितेन गरुडेन इन्द्रोपेन्द्रावभ्येत्य दर्पोक्तिः ॥ १ ॥ उपेन्द्रेण तार्क्ष्यदर्पविमोक्षणाय तदंसे स्वदक्षबाहुविक्षेपे तद्वहनाक्षमेण तेन तत्क्षमापणम् ॥२॥ कण्वेन सुयोधनं प्रति गरुडनिदर्शनप्रदर्शनपूर्वकं गर्वपरिहारेण पाण्डवैः सह शमविधानम् ॥ ३ ॥ दुर्योधनेन ऊरूताडनपूर्वकं कण्वोपहासे तेन तं प्रति तव ऊरावेव मृत्युर्भविष्यतीति शापदानम् ॥ ४ ॥

---

कण्वः—

गरुडस्तत्र शुश्राव यथावृत्तं महाबलः ।

आयुःप्रदानं शक्रेण सुमुखस्य तु भारत ॥ १

पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः ।
सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥　२

गरुडः—

भगवन् किमवज्ञानात् क्षुधं प्रति भये मम ।
कामकारवरं दत्त्वा पुनश्चलितवानसि ॥　३

निसर्गात् सर्वभूतानां सर्वभूतेश्वरेण मे ।
आहारो विहितो धाता किमर्थं वार्यते त्वया ॥　४

वृतश्चैष महानागस् स्थापितस्समयश्च मे ।
अनेन च मया देव भर्तव्यः प्रसवो महान् ॥　५

एतस्मिंस्त्वन्यथा भूते नान्यं हिंसितुमुत्सहे ।
क्रीडसे कामकारेण देवराज यथेप्सितम् ॥　६

सोऽहं प्राणान् विमोक्ष्यामि तथा परिजनो मम ।
ये च भृत्या मम गृहे प्रीतिमान् भव वासव ॥　७

कण्वः—

श्रुत्वा सुपर्णवचनं सुमुखो दुर्मुखस्तदा ।
[1]त्यक्त्वा रूपं विवर्णस्तु सर्परूपधरोऽभवत् ॥　८

गत्वा विष्णुसमीपं तु पादपीठं समाश्लिषत् ॥　८॥

[2]तत्र स्थित्वा वैनतेयम् उवाच बलघृत्रहा ॥　९

---

1. अ-क-ख—इदमर्धं नास्ति　　2. ख-घ—नास्तीदमर्धम्

इन्द्रः—

न मत्कृतं वैनतेय न मां क्रोद्धुं त्वमर्हसि ।
दत्ताभयस्य सुमुखो विष्णुना प्रभविष्णुना ॥ १०

कण्वः—

श्रुत्वा पुरन्दरेणोक्तम् उवाच विनतासुतः ॥ १०॥

वैनतेयः—

एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन् ।
त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः ॥ ११॥

त्वयि तिष्ठति देवेश न विष्णुः कारणं मम ।
त्रैलोक्यराजराज्यं हि त्वयि वासव शाश्वतम् ॥ १२॥

ममापि दक्षस्य सुता जननी कश्यपः पिता ।
अहमप्युत्सहे लोकान् समन्ताद्वोढुमोजसा ॥ १३॥

असह्यं सर्वभूतानां ममापि विपुलं बलम् ।
मयाऽपि सुमहत् कर्म कृतं दैतेयविग्रहे ॥ १४॥

श्रुतश्रीश्श्रुतसेनश्च विवस्वान् रोचनामुखः ।
प्रसहः कालकाङ्क्षश्च मयाऽपि दितिजा हताः ॥ १५॥

यत्तु ध्वजस्थानगतो यत्नात् परिचराम्यहम् ।
वहामि चैवानुजं ते तेन मामवमन्यसे ॥ १६॥

कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः ।
मया योऽहं विशिष्टस्सन् वहामीमं सबान्धवम् ॥ १७॥

अवज्ञाय तु यत् तेऽहं भोजनादवरोपितः ।
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव ॥ १८॥

अदित्यां य इमे जाता बलविक्रमशालिनः ।
त्वमेषां किल सर्वेषां विशेषाद् बलवत्तरः ॥ १९॥

सोऽहं पक्षैकदेशेन वहामि त्वां पराक्रमात् ।
विमृश त्वं शनैस्तात को न्वत्र बलवानिति ॥ २०॥

कण्वः—

स तस्य वचनं श्रुत्वा खगस्योदर्कदारुणम् ।
अक्षोभ्यं क्षोभयंस्तार्क्ष्यम् उवाच रथचक्रभृत् ॥ २१॥

श्रीभगवान्—

गरुत्मन् मन्यसे त्मानं बलवन्तं सुदुर्बलम् ।
[1]अलमस्मत्समक्षं ते स्तोतुमात्मानमण्डज ॥ २२॥

त्रैलोक्यमपि मे कृत्स्नम् अशक्तं देहधारणे ।
अहमेवात्मनाऽऽत्मानं वहामि त्वां च धारये ॥ २३॥

न त्वं वहसि मां दोर्भ्यां मोघं तव विकत्थनम् ।
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह ॥ २४॥

यद्येनं धारयस्येकं सफलं ते विकत्थनम् ॥ २५

कण्वः—

इत्युक्त्वा भगवांस्तस्य स्कन्धे बाहुं समासजत् ॥ २५॥

1. म—अर्धद्वयं न दृश्यते ।

आरोपितं समुद्वोढुं भुजं तं नाशकद्बलात् ।
निपपात स भारार्तो विह्वलो नष्टचेतनः ॥ २६॥

यावान् हि भारः कृत्स्नायाः पृथिव्याः पर्वतैस्सह ।
एकस्या देहशाखायास् तावद्भारममन्यत ॥ २७॥

न चैनं पीडयामास बलेन पुरुषोत्तमः ।
ततो हि जीवितं तस्य न व्यनीनशदच्युतः ॥ २८॥

विपक्षस्स्रस्तकायश्च विचेता विह्वलः खगः ।
मुमोच पत्राणि तदा गुरुभारप्रपीडितः ॥ २९॥

स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः ।
विचेता विह्वलो दीनः किञ्चिद्वचनमब्रवीत् ॥ ३०॥

वैनतेयः—

[1]भगवँल्लोकसारस्य सदृशेन वपुष्मता ।
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले ॥ ३१॥

क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ॥ ३२॥

न हि ज्ञातं बलं देव मया ते परमं विभो ।
तेन मन्ये ह्यहं वीर्यम् आत्मनो न समं परैः ॥ ३३॥

कण्वः—

ततश्शनैस्तु भगवान् प्रसन्नो वै गरुत्मतः ।

---

1. ख—नास्तीदमर्धम्।

मैवं भूय इति स्नेहात् तदा चैनमुवाच ह ॥ ३४॥

पादाङ्गुष्ठेन चिक्षेप सुमुखं गरुडोरसि ।
ततः प्रभृति राजेन्द्र सह सर्पेण वर्तते ॥ ३५॥

एवं विष्णुबलाक्रान्तो गर्वनाशमुपागमन् ।
गरुडो बलवान् राजन् वैनतेयो महायशाः ॥ ३६॥

तथा त्वमपि गान्धारे यावत् पाण्डुसुतान् रणे ।
नासादयसि तान् वीरांस् तावज्जीवसि पुत्रक ॥ ३७॥

भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः ।
धनञ्जयश्चेन्द्रसुतो निहन्यात् तावकान् रणे ॥ ३८॥

विष्णुर्वायुश्च शक्रश्च धर्मस्तावश्विनावुभौ ।
एते देवास्त्वया केन हेतुना वीक्षितुं क्षमाः ॥ ३९॥

तदलं ते विरोधेन शमं गच्छ नृपात्मज ।
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ॥ ४०॥

प्रत्यक्षदर्शी सर्वस्य नारदोऽयं महातपाः ।
माहात्म्यस्य तदा विष्णोस् सोऽयं चक्रगदाधरः ॥ ४१॥

**वैशम्पायनः—**

दुर्योधनस्तु तच्छ्रुत्वा निश्श्वसन् भ्रुकुटीमुखः ।
राधेयमभिसम्प्रेक्ष्य जहास स्वनवत् तदा ॥ ४२॥

[1]कदर्थीकृत्य तद्वाक्यम् ऋषेः कण्वस्य दुर्मतिः ।
ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ॥ ४३॥

दुर्योधनः—
यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः ।
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ॥ ४४॥

वैशम्पायनः—
ततः कण्वोऽब्रवीत् क्रुद्धो दुर्योधनमपण्डितम् ॥ ४५

कण्वः—
यस्मादूरुं ताडयसि ऊरौ मृत्युर्भविष्यति ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

॥ ५४ ॥ भगवद्यानपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ४५॥ श्लोकाः]

---

## ॥ त्रिनवतितमोऽऽध्यायः ॥

निर्बन्धस्यानर्थहेतुतायां निदर्शनप्रदर्शनाय दुर्योधनं प्रति नारदेन गालवोपाख्यानकथनारम्भः॥ १ ॥ विश्वामित्रेण गुरुदक्षिणानिषेधनेऽपि निर्बन्धकारिणं गालवं प्रति एकतश्श्यामकर्णश्वेताश्वशताष्टकानयननियोगः ॥ २॥

---

जनमेजयः—
अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम् ।
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् ॥ १

---

1. ख-म—नास्तीदमर्धम्।

ज्ञातीनां दुःखकर्तारं बन्धूनां शोकवर्धनम् ।
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् ॥ २

कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः ।
सौहृदाद्वा सुहृत् स्निग्धो भगवान् वा पितामहः ॥ ३

वैशम्पायनः—

उक्तं भगवता वाक्यम् उक्तं भीष्मेण यत् क्षमम् ।
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ॥ ४

नारदः—

दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितस्सुहृत् ।
तिष्ठते हि सुहृद् यत्र न बन्धुस्तत्र तिष्ठते ॥ ५

श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन ।
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ॥ ६

[1]दुर्योधन निबोधेदं वचनं मम भारत ।
कृत्वा चापि त्वया कार्यं विचार्य गुरुलाघवम् ॥ ७

निर्बन्धश्चापि मानश्च त्वया त्याज्यो महामते ॥ ७॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ॥ ८॥

विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
अभ्यागच्छत् स्वयं भूत्वा वसिष्ठो भगवानृषिः ॥ ९॥

1. ख-ब-ङ-म-मा—नास्त्ययं सार्धश्लोकः ।

सप्तर्षीणामन्यतमं वेषमास्थाय भारत ।
बुभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य तु ॥ १०॥

विश्वामित्रोऽथ सम्भ्रान्तश् श्रपयामास वै चरुम् ।
परमान्नं स यत्नेन न च तं प्रत्यपालयत् ॥ ११॥

अन्नं तेन तदा भुक्तम् अन्यैर्दत्तं तपस्विभिः ।
अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत् ॥ १२॥

[1]भुक्तं मे तिष्ठ तावत् त्वम् इत्युक्त्वा भगवान् ययौ ।
विश्वामित्रस्ततो राजन् स्थित एव महाद्युतिः ॥ १३॥

भक्तं प्रगृह्य मूर्ध्ना वै बाहुभ्यां पार्श्वतो वहन् ।
स्थितस्स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः ॥ १४॥

तस्य शुश्रूषणे यत्नम् अकरोद्गालवो मुनिः ।
गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया ॥ १५॥

अथ वर्षशते पूर्णे धर्मः पुनरुपागमत् ।
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया ॥ १६॥

स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा ।
तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता ॥ १७॥

प्रतिगृह्य ततो धर्मस् तथैवोष्णं तथा नवम् ।
भुक्त्वा प्रीतोऽस्मि विप्रेति तमुक्त्वा स मुनिर्गतः ॥ १८॥

1. ब—इतः सार्धश्लोको नास्ति

क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः ।
धर्मस्य वचनात् प्रीतो विश्वामित्रस्तदाऽभवत् ॥ १९॥

विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः ।
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह ॥ २०॥

विश्वामित्रः—

अनुज्ञातो मया वत्स यथेच्छं गच्छ गालव ॥ २१

नारदः—

इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम् ।
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् ॥ २२

गालवः—

दक्षिणाः काः प्रयच्छामि भवते गुरुकर्मणि ।
दक्षिणाभिरुपेतं हि कर्म सिद्ध्यति मानवम् ॥ २३

दक्षिणानां विसृष्टानां अपवर्गेण भुज्यते ।
स्वर्गे क्रतुफलं सद्भिर् दक्षिणा शान्तिरुच्यते ॥ २४

किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति ॥ २४॥

नारदः—

जानमानश्च भगवान् खिन्नं शुश्रूषणेन च ।
विश्वामित्रस्तमसकृद् गच्छ गच्छेत्यचोदयत् ॥ २५॥

असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः ।

किं ददानीति बहुशो गालवः प्रत्यभाषत ॥ २६॥

निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः ।
किञ्चिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् ॥ २७॥

विश्वामित्रः—

एकतश्श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
अष्टौ शतानि मे देहि गच्छ गालव मा चिरम् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

॥ ५४ ॥ भगवद्यानपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[अस्मिन्नध्याये २८॥ श्लोकाः]

---

## ॥ चतुर्नवतितमोऽध्यायः ॥

विश्वामित्रोक्तलक्षणाश्वाधिगमोपायापरिज्ञानेन शोचता गालवेन स्वार्थलाभाय श्रीविष्णूपासनम् ॥ १ ॥ सुहृदा गरुडेन गालवमुपगम्य स्वेन तस्याभिमतदेशप्रापणकथनम् ॥ २ ॥

---

नारदः—

एवमुक्तस्तदा तेन विश्वामित्रेण धीमता ।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ १

त्वगस्थिभूतो हरिणश् चिन्ताशोकपरायणः ।
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना ॥ २

गालवो दुःखितो दुःखाद् विललाप सुयोधन ॥ २॥

गालवः—

कुतः पुष्टानि मित्राणि कुतोऽर्थास्सञ्चयः कुतः ।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ॥ ३॥

कुतो मे भोजने श्रद्धा सुखश्रद्धा कुतश्च मे ।
श्रद्धा मे जीवितस्यापि किं फलं जीवितेन मे ॥ ४॥

अहं पारे समुद्रस्य पृथिव्या वा परं परान् ।
गत्वाऽऽत्मानं विमुञ्चामि किं फलं जीवितस्य मे ॥ ५॥

अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः ।
ऋणं धारयमाणस्य कुतस्सुखमनीहया ॥ ६॥

सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ ७॥

प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥ ८॥

न रूपमनृतस्यास्ति नानृतस्यास्ति सन्ततिः ।
नानृतस्याधिपत्यं च कुत एव गतिश्शुभा ॥ ९॥

कुतः कृतघ्नस्य यशः कुतस्स्थानं कुतस्सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १०॥

न जीवत्यधनः पापः कुतः पापस्य सा घृणा ।

[1]पापो ध्रुवमवाप्नोति विनाशं नाशयन् कृतम् ॥ ११॥

सोऽहं पापः कृतघ्नश्च कृपणश्चानृतोऽपि च ।
गुरोर्यः कृतकार्यस्संस् तत् करोमि न भाषितम् ॥ १२॥

सोऽहं प्राणान् विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ।
अर्थिता न मया काचित् कृतपूर्वा दिवौकसाम् ॥ १३॥

मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे ॥ १४

अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम् ।
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् ॥ १५

भोगा यस्मात् प्रवर्तन्ते प्राप्य सर्वान् सुरासुरान् ।
प्रयतो द्रष्टुमिच्छामि कृष्णं योगिनमव्ययम् ॥ १६

नारदः—

एवमुक्ते सखा तस्य गरुडो विनतासुतः ।
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया ॥ १७

गरुडः—

सुहृद्भवान् मम मतस् सुहृदां च मतस्सुहृत् ।
ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति ॥ १८

विभवश्चास्ति मे विप्र वासवावरजो द्विज ।
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन ते ॥ १९

1. अ-क—इदमर्धं नास्ति

स भवानेतु गच्छाव नयिष्ये त्वां यथेप्सितम् ।
देशं पारं पृथिव्या वा गच्छ गालव मा चिरम् ॥ २०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

गालवं प्रति गरुडेन स्वेन तस्य पूर्वादिदिक्प्रापणकथनपूर्वकं पूर्वदिग्गुणवर्णनम् ॥ १ ॥

---

सुपर्णः—

अनुशिष्टोऽस्मि देवेन गालव ज्ञानयोनिना ।
ब्रूहि कामं तु कां यामि द्रष्टुं प्रथमतो दिशम् ॥ १

पूर्वां वा दक्षिणां वेमाम् अथवा पश्चिमां दिशम् ।
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ २

यस्यामुदयते पूर्वं सर्वलोकप्रभावनः ।
सविता यत्र साध्यानां सिद्धानां वर्धते तपः ॥ ३

यस्यां पूर्वं द्युतिर्जाता यया व्याप्तमिदं जगत् ।
चक्षुषी यत्र धर्मस्य यत्र धर्मः प्रतिष्ठितः ॥ ४

हुतं यतो मुखे हव्यं सर्पते सर्वतोदिशम् ।
एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाऽध्वनः ॥ ५

अत्र पूर्वं प्रसूता वै दाक्षायण्यस्तथा स्त्रियः ।
यस्यां दिशि प्रवृद्धाश्च काश्यपस्यात्मसम्भवाः ॥ ६

यतोमूला सुराणां श्रीर् यत्र शक्रोऽभ्यषिच्यत ।
सुरराजेन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ७

एतस्मात् कारणाद् ब्रह्मन् पूर्वेत्येषा दिगुच्यते ।
यस्मात् पूर्वतरे काले पूर्वमेषा वृता सुरैः ॥ ८

[1]अत एव च सर्वेषां पूर्वामाशामवेक्षताम् ।
पूर्वं कार्याणि सर्वाणि दैवानि सुखमीप्सता ॥ ९

अत्र वेदाञ्जगौ पूर्वं भगवाँल्लोकभावनः ।
अत्रैवोक्ता सवित्राऽऽसीत् सावित्री ब्रह्मवादिषु ॥ १०

अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम ।
अत्र लब्धवरस्सोमस् सुरैः क्रतुषु पीयते ॥ ११

अत्र तृप्ता हुतवहास् स्वां योनिमुपभुञ्जते ।
अत्र पातालमाश्रित्य वरुणश्श्रियमाप च ॥ १२

[2]अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ ।
प्रसूतिश्च प्रतिष्ठा च धर्मश्चैव प्रकाशते ॥ १३

---

1. अ-क—इदमर्धं नास्ति 2. अ-क—अर्धद्वयं नास्ति

ओङ्कारस्यात्र जायन्ते मूर्तयो दशतीर्दश ।
पिबन्ति मुनयो यत्र हविर्धाने स्म सोमपाः ॥ १४

प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने ।
शक्रेण यज्ञभागार्थे दैवतेषु प्रकल्पिताः ॥ १५

अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये ।
उदयंस्तान् हि सर्वान् वै क्रोधाद्धन्ति विभावसुः ॥ १६

एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च ।
एष पूर्वो दिशां भागो गच्छावोऽत्र यदीच्छसि ॥ १७

प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः ।
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ षण्णवतितमोऽध्यायः ॥

गरुडेन गालवं प्रति दक्षिणदिग्गुणवर्णनम् ॥ १ ॥

---

सुपर्णः—
इयं विवस्वता पूर्वं श्रौतेन विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक् ॥ १

अत्र लोकत्रयस्यापि पितृपक्षः प्रतिष्ठितः ।
अत्रोष्मपाणां देवानां निवासश्श्रूयते द्विज ॥ २

अत्र विश्वे सदा देवाः पितृभिस्सार्धमासते ।
इज्यमानास्स्म लोकेषु सम्प्राप्तास्तुल्यभागताम् ॥ ३

एतद्द्वितीयं धर्मस्य द्वारमाचक्षते द्विज ।
[1]त्रुटिशो लवशश्चापि गण्यते कालनिश्चयः ॥ ४

अत्र देवर्षयो दिव्याः पितृलोकर्षयस्तथा ।
तथा राजर्षयस्सर्वे निवसन्ति गतव्यथाः ॥ ५

अत्र धर्मश्च सत्यं च कर्म चात्र नियम्यते ।
[2]गतिरेषा द्विजश्रेष्ठ कर्मणामवसायिनाम् ॥ ६

एषा दिक् सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते ।
[3]मृतात्माऽनवबोधेन सुखं तेन न गम्यते ॥ ७

नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ ।
[4]सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ८

अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च ।
गायन्ति गाथा गन्धर्वाश् चित्तबुद्धिहरा द्विज ॥ ९

अत्र सामानि गाथाभिश् श्रुत्वा गीतानि रैवतः ।

---

1. अ-क-ख—इदमर्धं नास्ति 2. अ-क—इदमर्धं नास्ति
3. अ-क-ख-मा—इदमर्धं नास्ति
4. ख-ग—दुष्टानि। घ-ङ-म-मा—दृष्टानि।

गतदारो गतामात्यो गतराज्यो वनं गतः ॥ १०

अत्र सावर्णिना चैव यवक्रीतात्मजेन च ।
मर्यादा स्थापिता ब्रह्मन् यां सूर्यो नातिवर्तते ॥ ११

अत्र राक्षसराजेन पौलस्त्येन महात्मना ।
रावणेन तप [1]श्चर्त्वा सुरेभ्योऽमरता वृता ॥ १२

अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमेयिवान् ।
[2]अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥ १३

[3]अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव ।
अत्र वैतरणी नाम नदी पितृगणैर्वृता ॥ १४

अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ।
अत्र वृत्तो दिनकरः क्षरते सुरसं पयः ॥ १५

काष्ठां चासाद्य वासिष्ठां हिममुत्सृजते पुनः ॥ १५॥

अत्राहं गालव पुरा क्षुधार्तः परिचिन्तयन् ।
लब्धवान् युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ ॥ १६॥

अत्र शक्रधनुर्नाम सूर्याज्जातो महानृषिः ।
विदुर्यं कपिलं देवं येनास्तास्सगरात्मजाः ॥ १७॥

अत्र सिद्धाश्शिवा नाम ब्राह्मणा वेदपारगाः ।

---

1. ख-ग—स्तप्त्वा ।　　2. अ-क-ख-मा—इदमर्धं नास्ति
3. ख—इतः सार्धश्लोको नास्ति

अधीत्य सकलान् वेदान् नालभन्त यमक्षयम् ॥ १८॥

अत्र भोगवती नाम पुरी वासुकिपालिता ॥ १९

तक्षकेण च नागेन तथैवैरावतेन च ॥ १९॥

अत्र निर्याणकाले हि तमस्सम्प्राप्यते महत् ।
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना ॥ २०॥

एष ते ख्यापितो मार्गः परितापस्य गालव ।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु वा मम ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ५४ ॥ भगवद्यानपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ सप्तनवतितमोऽध्यायः ॥

गरुडेन गालवं प्रति पश्चिमदिग्गुणवर्णनम् ॥ १ ॥

---

सुपर्णः—

इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः ।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ १

अत्र पश्चादहस्सूर्यो विसर्जयति भास्वजाः ।
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम ॥ २

यादसामत्र राज्येन सलिलस्य तु गुप्तये ।
काश्यपो भगवान् देवो वरुणं स्माभ्यषेचयत् ॥ ३

अत्र पीत्वा समस्तान् वै वरुणस्य रसांस्तु षट् ।
जायते तरुणस्सोमः शुक्लस्यादौ तमिस्रहा ॥ ४

अत्र पश्चात्कृता दैत्या वायुना संयुतास्तदा ।
निश्श्वसन्तो महानागैर् अर्दितास्सुषुपुर्द्विज ॥ ५

अत्र प्रलम्बिनं सूर्यं प्रतिगृह्णाति पर्वतः ।
अस्तो नाम यतस्सन्ध्या पश्चिमा प्रतिसर्पति ॥ ६

अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये ।
जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ७

अत्र देवीं दितिं सुप्ताम् आत्मप्रसवधारिणीम् ।
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ॥ ८

अत्र मूलं हिमवतो मन्दरं याति शाश्वतम् ।
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ॥ ९

अत्र काञ्चनशैलस्य काञ्चनाम्बुरुहस्य च ।
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः ॥ १०

अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते ।
स्वर्भानोस्सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥ ११

सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः ।

अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ॥ १२

अत्र ध्वजवती नाम कुमारी हरिमेधसः ।
आकाशे तिष्ठ तिष्ठेति तस्थौ सूर्यस्य शासनात् ॥ १३

अत्र वायुस्तथा वह्निर् आपः खं चापि गालव ।
आह्निकं चैव नैशं च दुःखस्पर्शं विमुञ्चति ॥ १४

अतःप्रभृति सूर्यस्य तिर्यगावर्तते गतिः ।
अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ॥ १५

अष्टाविंशतिरात्रं च चङ्क्रम्य सह भानुना ।
निष्पतन्ति पुनस्सूर्यात् सोमसंयोगयोगतः ॥ १६

अत्र नित्यं स्रवन्तीनां प्रभवस्सागरोदयः ।
अत्र लोकत्रयस्यापस् तिष्ठन्ति वरुणाश्रयाः ॥ १७

अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम् ।
अनादिनिधनस्यात्र विष्णोस्स्थानमनुत्तमम् ॥ १८

अत्रानलसखस्यापि पवनस्य निवेशनम् ।
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ १९

एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः ।
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम ॥ २०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ५४ ॥ भगवद्यानपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

## ॥ अष्टनवतितमोऽध्यायः ॥

गरुडेन गालवं प्रति उत्तरदिगनुवर्णनपूर्वकं अभिमतदिगभिगमनाय स्वपृष्ठाधिरोहणविधानम् ॥ १ ॥

सुपर्णः—

यस्मादुत्तार्यते पापाद् यस्मा[1]न्निश्रेयसोऽश्नुते ।
अस्मादुत्तारणफलाद् उत्तरेत्युच्यते बुधैः ॥ १

उत्तरस्य [2]हिरण्यस्य परिवापस्य गालव ।
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमस्स्मृतः ॥ २

अस्यां दिशि वरिष्ठायाम् उत्तरायां द्विजर्षभ ।
नासौम्यो नाविधेयात्मा नाधर्मो [3]वर्तते जनः ॥ ३

अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः ।
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ४

अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः ।
[4]प्रकृत्या पुरुषस्यार्धं युगान्ताग्निसमप्रभः ॥ ५

---

1. ख-ग-घ-ङ—न्निश्श्रेयसं चरेत् । म—न्निश्श्रेयसश्च ते मा—दुत्तार्यते दिशः ।
2. ङ—हि पुण्यस्य परिपाल्यस्य । म—हि पुण्यस्य परिपावस्य ।
3. ङ-म-मा—वसते जनः । घ—वाऽऽसते जनः । अ-क—विशते जनम् ।
4. ङ-मा—अर्धषट्कं नास्ति ख-घ—अर्धपञ्चकं नास्ति

न सं दृश्यो मुनिगणैस् तथा देवैस्सवासवैः ।
गन्धर्वयक्षसिद्धैर्वा नरनारायणादृते ॥ ६

अत्र विष्णुस्सहस्राक्षस् सहस्रचरणोऽव्ययः ।
सहस्रशिरसश्श्रीमान् एकः पश्यति मायया ॥ ७

अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत ॥ ७॥

अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् ।
[1]प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तमः ॥ ८॥

अत्रोमया तपस्तप्तं महेश्वरपरीप्सया ।
[2]अत्र कामश्च रोषश्च शैलश्चोमा च सम्बभुः ॥ ९॥

अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव ।
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ॥ १०॥

अत्र चैत्ररथं रम्यम् [3]अनु वैखानसाश्रमः ॥ ११

अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ।
अत्र सौगन्धिकवनं दैवतैरभिरक्ष्यते ॥ १२

शाद्वलं कदली[4]स्कन्धम् अत्र सन्तानका नगाः ॥ १२॥

अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम् ।
विमानान्यनुरूपाणि कामभोग्यानि गालव ॥ १३॥

---

1. अ-क—इदमर्धं नास्ति  2. अ-क—इदमर्धं नास्ति
3. मा—अत्र वैखानसं सरः । 4. ग-घ-ङ-म—स्पर्शम् । मा—षण्डम् ।

अत्र ते ऋषयस्सप्त देवी चारुन्धती तथा ।
अत्र तिष्ठति वै [1]स्वातिर् अत्रास्या उदयस्स्मृतः ॥ १४॥

अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः ।
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः ॥ १५॥

अत्र गङ्गामहाद्वारं रक्षन्ति द्विजसत्तमाः ।
[2]कामा नाम महात्मानो मुनयस्सत्यवादिनः ॥ १६॥

न तेषां ज्ञायते सूतिर् नाकृतिर्न तपश्चितम् ।
[3]परिवर्तसहस्राणि कामभोग्यानि गालव ॥ १७॥

यथा यथा प्रविशति तस्मात् परतरं नरः ।
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव ॥ १८॥

नैतत् केनचिदन्येन गतपूर्वं द्विजर्षभ ।
ऋते नारायणं देवं नरं वा [4]जिष्णुमव्ययम् ॥ १९॥

अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ।
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश ॥ २०॥

अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम् ।

---

1. ख-ग—रात्रिं न चात्राप्यवतिष्ठति ।
 घ-ङ-म—रात्रिं दिवाऽत्राप्यवतिष्ठते ।
 मा—तिष्ठत्यहोरात्रं दिवाप्यत्रापि तिष्ठति ।
2. ग-घ-ङ—धावमाना । ख—यामा नाम । म-मा—धामा नाम ।
3. अ-क—इदमर्धं नास्ति  4. ग-घ-ङ-म—विष्णु ।

त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम् ॥ २१॥

अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम ।
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः ॥ २२॥

जीमूतस्यात्र विप्रर्षेर् उपतस्थे महात्मनः ।
साक्षाद्धैमवतः पुण्यो विमलः कमलाकरः ॥ २३॥

ब्राह्मणेषु च यत् कृत्स्नं स्वकं कृत्वा धनं महत् ।
वव्रे वनं महर्षिस्स जैमूतं तद्वनं ततः ॥ २४॥

अत्र नित्यं दिशां पालास् सायं प्रातर्द्विजर्षभ ।
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव ॥ २५॥

एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ।
उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा ॥ २६॥

एता विस्तरशस्तात तव सङ्कीर्तिता दिशः ।
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि ॥ २७॥

उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं जगत् ।
पृथिवीं चाखिलां ब्रह्मंस् तस्मादारोह मां द्विज ॥ २८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

॥ ५४ ॥ भगवद्यानपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ अस्मिन्नध्याये २८॥ श्लोकाः ॥

## ॥ एकोनशततमोऽध्यायः ॥

गरुडवेगमसहमानेन गालवेन गुरुदक्षिणानर्पणेनैव स्वप्राणविमोक्षणशङ्कया परिशोचनम् ॥ १ ॥ गरुडेन गालवं प्रति प्रागेवाभिमतानिवेदनेन अकौशलाभिलपनपूर्वकं ऋषभाचले विश्रम्य पुनर्निवर्तनकीर्तनम् ॥ २ ॥

---

गालवः—

गरुत्मन् भुजगेन्द्रारे सुपर्ण विनतात्मज ।
नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥ १

पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता ।
देवतानां हि सान्निध्यम् अत्र कीर्तितवानसि ॥ २

अत्र सत्यं च धर्मश्च त्वया सम्यक् प्रकीर्तितौ ॥ २॥

इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम् ।
भूयश्च तान् सुरान् द्रष्टुम् इच्छेयमरुणानुज ॥ ३॥

नारदः—

तमाह विनतासूनुर् आरोहस्वेति वै द्विजम् ।
आरुरोहाथ स मुनिर् गरुडं गालवस्तदा ॥ ४॥

गालवः—

क्रममाणस्य ते रूपं दृश्यते पन्नगाशन ।
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ५॥

पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् ।
प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ६॥
ससागरवनामुर्वीं सशैलवनकाननाम् ।
आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ७॥
समीननागनक्रं च खमिवारोप्यते जलम् ।
वायुना चैव महता पक्षवातेन चानिशम् ॥ ८॥
तुल्यरूपाननान् मत्स्यांस् तथा तिमितिमिङ्गिलान् ।
[1]नागाश्वनरवक्त्रांश्च पश्याम्युन्मथितानिव ॥ ९॥
महार्णवस्य च रवैश् श्रोत्रे मे बधिरे कृते ।
न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् ॥ १०॥
शनैस्स तु भवान् यातु ब्रह्मवध्यामनुस्मरन् ॥ ११
न दृश्यते रविस्तात न दिशो न च खं खग ।
तम एव तु पश्यामि शरीरं ते न लक्षये ॥ १२
मणी व जात्यौ पश्यामि चक्षुषी तेऽहमण्डज ।
शरीरं तु न पश्यामि तव चैवात्मनश्च ह ॥ १३
पदे पदे तु पश्यामि सलिलादग्निमुत्थितम् ॥ १३॥
स मे निर्वाप्य सहसा शाम्यते चक्षुषी पुनः ।
तन्निवर्त महान् कालो गच्छतोर्विनतात्मज ॥ १४॥
न मे प्रयोजनं किञ्चिद् गमने पन्नगाशन ।

---

1. च-ङ—नागांश्च नरमुख्यांश्च ।
ख—नागांश्च नरवक्त्रांश्च । मा—नागांश्च नरवक्त्रांश्च ।

सान्निवर्ते महाभाग न वेगं विषहामि ते ॥　　१५॥

[1]गुरवे संश्रुतानीह शतान्यष्टौ च वाजिनाम् ।

एकतश्श्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥　　१६॥

तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।

ततोऽयं जीवितत्यागे दृष्टो मार्गो मया द्विज ॥　　१७॥

नैव मेऽस्ति धनं किञ्चिन्न धनेनान्वितस्सुहृत् ।

न चार्थेनापि महता शक्यमेतद्व्यपोहितुम् ॥　　१८॥

नारदः—

एवं बहु च दीनं च ब्रुवाणं गालवं तदा ।

प्रत्युवाच व्रजन्नेव प्रहसन् विनतात्मजः ॥　　१९॥

सुपर्णः—

नातिप्रज्ञोऽसि विप्रर्षे योत्मानं त्यक्तुमिच्छसि ।

न चापि कृत्रिमः कालः कालो हि परमेश्वरः ॥　　२०॥

किमहं पूर्वमेवेह भवता नाभिचोदितः ।

उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥　　२१॥

तदेष ऋषभो नाम पर्वतस्सागरोरसि ।

अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव ॥　　२२॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ५४ ॥ भगवद्यानपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

1. ङ—गुरोर्मया श्रुतानीह ।

## ॥ शततमोऽध्यायः ॥

ऋषभगिरिशृङ्गमुपगतयोः गरुडगालवयोः तत्र शाण्डिलीनामकब्राह्मणीदर्शनम् ॥ १ ॥ तद्दत्तान्नमुपभुज्य विश्रमाय तत्र शयनम् ॥ २ ॥ सुप्तोत्थितं शिथिलपक्षबन्धं तार्क्ष्यमभिवीक्ष्य गालवेन तं प्रति तत्कारणप्रश्नः ॥ ३ ॥ सुपर्णेन ब्राह्मण्याः विष्ण्वाद्यन्यतमसमीपप्रापणानुचिन्तनस्य स्वानर्थप्राप्तिकारणत्वकथनपूर्वकं तां प्रति क्षमापणम् ॥ ४ ॥ तत्प्रसादाधिगतपक्षबलेन सुपर्णेन सह गच्छतो गालवस्य मध्येमार्गं यदृच्छोपागतेन विश्वामित्रेण पुनरश्वानयनचोदनम् ॥ ५ ॥

नारदः—

ऋषभस्य ततश्शृङ्गे निपत्य द्विजपक्षिणौ ।
शाण्डिलीं ब्राह्मणीं तत्र ददृशाते [1]तपोन्विताम् ॥ १

अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् ।
तया च स्वागतेनोक्तौ विष्टरे सन्निषीदतुः ॥ २

सिद्धमन्नं तया क्षिप्रं बलिमन्त्रोपबृंहितम् ।
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ चैव समाहितौ ॥ ३

मुहूर्तात् प्रतिबुद्धस्तु सुपर्णो गमनेप्सया ।
अथ भ्रष्टतनूजाङ्गम् आत्मानं ददृशे खगः ॥ ४

[2]मांसपिण्डोपमोऽभूत् स मुखपादान्वितः खगः ।
गालवस्तं तथा दृष्ट्वा विषण्णः पर्यपृच्छत ॥ ५

1. ख-ङ—तपस्विनीम् 2. ख—नासीदमर्धम् ।

गालवः—

किमिदं भवता प्राप्तम् इहागमनजं फलम् ।
वासोऽयमिह कालं तु कियन्तं नो भविष्यति ॥ ६

किं नु ते मनसा ध्यातम् अशुभं पततां वर ।
न ह्ययं भवतस्स्वल्पो व्यभिचारो भविष्यति ॥ ७

नारदः—

सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज ।
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ॥ ८

यत्र देवो महादेवो यत्र विष्णुस्सनातनः ।
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ९

सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया ।
ममैतन्नाम प्रध्यातं मनसा शोचता किल ॥ १०

तदेवं बहुमानं ते मयेहानीप्सितं कृतम् ।
सुकृतं दुष्कृतं वा त्वं माहात्म्यात् क्षन्तुमर्हसि ॥ ११
सा तौ तदाऽब्रवीत् तुष्टा पतगेन्द्रद्विजर्षभौ ॥ ११॥

शाण्डिली—

न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज सम्भ्रमम् ॥ १२

निन्दिताऽस्मि त्वया वत्स न च निन्दां क्षमाम्यहम् ।
लोकेभ्यस्सपदि भ्रश्येद् यो मां निन्देत पापकृत् ॥ १३

हीनया लक्षणैस्सर्वैस् तथा निन्दितया मया ।
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा ॥ १४

आचारलक्षणो धर्मो ह्याचाराल्लभते धनम् ।

आचाराच्छ्रेय आप्नोति आचारो हन्त्यलक्षणम् ॥ १५
तदायुष्मन् खगपते यथेष्टं गम्यतामितः ।
न च ते गर्हणीयाऽस्मि गर्हितव्यास्त्रियः क्वचित् ॥ १६
भवितासि यथा पूर्वं बलवीर्यसमन्वितः ॥ १६॥

नारदः—
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ ।
अनुज्ञातस्तु शाण्डिल्या यथागतमुपागमत् ॥ १७॥
नैव चासादयामास तथारूपांस्तुरङ्गमान् ॥ १८
विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितम् ।
उवाच वदतां श्रेष्ठो वैनतेयस्य सन्निधौ ॥ १९

विश्वामित्रः—
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज ।
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् ॥ २०
प्रतीक्षिष्याम्यहं कालम् एतावन्तं तथा परम् ।
यथा संसिध्यते विप्र स मार्गः प्रविमृश्यताम् ॥ २१

नारदः—
सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम् ॥ २१॥

सुपर्णः—
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् ॥ २२
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव ।
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयाऽऽसितुम् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ५४ ॥ भगवद्यानपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

## ॥ एकाधिकशततमोऽध्यायः ॥

गालवानुगतेन गरुडेन ययातिं गत्वा गालववृत्तान्तकथनपूर्वकं धनयाचनम् ॥ १ ॥

नारदः—

अथाह गालवं दीनं सुपर्णः पततां वरः ॥ ॥

सुपर्णः—

निर्मितं वह्निना भूमौ वायुना [1]वर्धितं तथा ।
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ १॥

धत्ते धारयते चेदम् एतस्मात् कारणाद्धनम् ।
तदेतत् त्रिषु लोकेषु धनं तिष्ठति शाश्वतम् ॥ २॥

नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यस्समादत्ते शुक्रश्चित्तार्जितं धनम् ॥ ३॥

अजैकपादहिर्बुध्न्यौ रक्ष्येते धनदेन च ।
एवं न शक्यते लब्धुम् अलब्धव्यं द्विजर्षभ ॥ ४॥

[2]ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ॥ ५

अर्थं [3]याचस्व राजानं कञ्चिद् राजर्षिवंशजम् ।
[4]अपीड्य राजा पौरान् हि यो नौ कुर्यात् कृतार्थिनौ ॥ ६

1. ख—शोषितं । ग—चैधितं । घ-ङ—चोदितं । मा—वेधितं ।
2. ख—इतः श्लोकद्वयं नास्ति 3. घ-ङ—याचावहे विप्र
4. ग-ङ—धार्मिकं पृथिवीपालं । घ—अपीड्य राजा दाराँध यो नौ ।
म—अपीड्य राजा पौराँध यौ नौ ।

अस्ति सोमान्ववाये मे जातः कश्चिन्नृपस्सखा ।
अभिगच्छावहे तं वै यस्यास्ति विभवो भुवि ॥ ७

ययातिर्नाम राजर्षिर् नाहुषस्सत्यविक्रमः ।
स दास्यति मया चोक्तो भवता चार्थितस्स्वयम् ॥ ८

विभवश्चास्य सुमहान् आसीद्धनपतेरिव ।
[1]एवं गुरुधनं विद्वन् दानेनैव विशोधय ॥ ९

नारदः—

तथा तौ कथयन्तौ च चिन्तयन्तौ च यत् क्षमम् ।
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ १०

प्रतिगृह्य च [2]सत्कारैर् अर्घ्यपाद्यादिकं ददौ ।
पृष्टश्चागमने हेतुम् उवाच विनतासुतः ॥ ११

सुपर्णः—

अयं मे नाहुष सखा गालवस्तपसो निधिः ।
विश्वामित्रस्य शिष्योऽभूद् वर्षाण्ययुतशो नृप ॥ १२

सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।
तमाह भगवान् किं ते ददानि गुरुदक्षिणाम् ॥ १३

असकृत् तेन चोक्तेन किञ्चिदागतमन्युना ।

1. ख-घ-ङ—नास्तीदमर्धम् ।
2. ख-ग—सत्कारमर्घ्यादीन् भोजनाद्वरम् ।
घ-ङ-म-मा—सत्कारमर्घ्यादिं भोजनं परम् ।

अयमुक्तः प्रयच्छेति जानता विभवं लघु ॥ १४
[1]एकतश्श्यामकर्णानां शुभ्राणां शुद्धजन्मनाम् ।
अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् ॥ १५
गुर्वर्थो दीयतामेष यदि गालव मन्यसे ।
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः ॥ १६
सोऽयं शोकेन महता तप्यमानो द्विजर्षभः ।
अशक्तः प्रतिकर्तुं तद् भवन्तं शरणं गतः ॥ १७
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।
कृत्वाऽपवर्गं गुरवे चरिष्यति महत् तपः ॥ १८
तपसस्संविभागेन भवन्तमपि योक्ष्यते ।
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ १९
यावन्ति रोमाणि हये भवन्तीह नरेश्वर ।
तावतो वाजिदा लोकान् प्राप्नुवन्ति महीपते ॥ २०
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान् ।
शङ्खे क्षीरमिवासक्तं भवत्वेतत् तथोपमम् ॥ २१

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ ५४ ॥ भगवद्यानपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. अ-क-ख-घ—श्लोकद्वयं नास्ति

## ॥ द्व्यधिकशततमोऽध्यायः ॥

व्ययितवित्तेन ययातिना धनप्रतिनिधितया माधवीनामकस्वकन्यकासमर्पणम् ॥ १ ॥ गरुडेन समधिगततुरगाधिगमोपायं गालवमापृच्छ्य स्वगृहगमनम् ॥ २ ॥ गालवेन कन्यया सह हर्यश्वनामकनृपसमीपमुपेत्य शुल्कार्पणेन कन्याकलत्रीकरणकथनम् ॥ ३ ॥

नारदः—

एवमुक्तस्सुपर्णेन तथ्यं वचनमुत्तमम् ।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥ १

यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः ।
ययातिः[1] स्सूर्यसङ्काश इदं वचनमब्रवीत् ॥ २

दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम् ।
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ॥ ३

अतीत्य च नृपानन्यान् आदित्यकुलसम्भवान् ।
मत्सकाशमनुप्राप्तावेतां बुद्धिमवेक्ष्य च ॥ ४

ययातिः—

अद्य मे सफलं जन्म तारितं चाद्य मे कुलम् ।
अद्यायं पावितो देशो मम तार्क्ष्य त्वयाऽनघ ॥ ५

वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा ।

1. अ-क-म-स्सर्वकाशीश. घ-ङ-मा—र्वत्सकाशीश. ख—र्धर्मविद्राजा.

न तथा वित्तवानस्मि क्षीणं वित्तं हि मे सखे ॥ ६

न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग ।
न चाशामस्य विप्रर्षेर् वितथां कर्तुमुत्सहे ॥ ७

पुत्रीं दास्यामि यत् कार्यम् द्वयं सम्पादयिष्यति ।
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥ ८

नातः परं वैनतेय किञ्चित् पापिष्ठमुच्यते ।
यथाऽऽशानाशनं लोके देहि नास्तीति वा वचः ॥ ९

हताशो ह्यकृतार्थस्सन् हतसम्भावनो नरः ।
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतोऽर्थिताम् ॥ १०

तस्माच्चतुर्णां वर्णानां स्थापयित्री सुता मम ।
माधवी नाम तार्क्ष्येयं सर्वधर्मप्रदायिनी ॥ ११

इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ॥ ११॥

सदा देवमनुष्याणाम् असुराणां च गालव ।
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥ १२॥

अस्याश्शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम् ।
किं पुनश्श्यामकर्णानां हयानां द्वे चतुश्शते ॥ १३॥

स भवान् प्रतिगृह्णातु ममैतां माधवीं सुताम् ।
दौहित्रपूतस्स्यामेष एष मे स्याद्वरः प्रभो ॥ १४॥

नारदः—

स तस्य वचनं श्रुत्वा ब्राह्मणश्शंसितव्रतः ।
प्रतिगृह्य च तां कन्यां गालवस्सह पक्षिणा ॥ १५॥
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ १६
उपलब्धमिदं द्वारम् अश्वानामिति चाण्डजः ।
उक्त्वा गालवमापृच्छ्य जगाम भवनं प्रति ॥ १७
गते पतगराजे तु गालवस्सह कन्यया ।
चिन्तयानः क्षमं दाने राजानं शुल्कतोऽगमत् ॥ १८
सोऽगच्छन्मनसैक्ष्वाकं हर्यश्वं राजसत्तमम् ।
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् ॥ १९
कोशधान्यबलोपेतं प्रियपौरं प्रियद्विजम् ।
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् ॥ २०
तमुपागम्य विप्रस्स हर्यश्वं गालवोऽब्रवीत् ॥ २०॥

गालवः—

कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी ।
इयं शुल्केन भार्यार्थे हर्यश्व प्रतिगृह्यताम् ॥ २१॥
[1]शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा सम्प्रधार्यताम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ५४ ॥ भगवद्यानपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. ब—नास्तीदमर्धम्

## ॥ त्र्यधिकशततमोऽध्यायः ॥

हर्यश्वपृष्टेन गालवेन तं प्रति शुल्कनिवेदनम् ॥ १ ॥ हर्यश्वेन गालवं प्रति स्वस्याश्वशतद्वयवत्तया वरदाने सति एकापत्योत्पादनेन पुनः कन्याविसर्जनोक्तिः ॥ २॥ माधव्या गालवं प्रति स्वस्य प्रसूत्यन्ते प्रसूत्यन्ते पुनः पुनः कन्यात्वसम्पादकविप्रवरप्राप्तिकथनम् ॥ ३ ॥ हर्यश्वेन शुल्कदानेन तस्यां वसुमनोनामकपुत्रोत्पादनम् ॥ ४ ॥ हर्यश्वेन कालान्तरे समागताय गालवाय पुनर्माधवीप्रत्यर्पणम् ॥ ५ ॥ गालवेन कामतः पुनः कन्यात्वमुपगतया तया सह दिवोदाससमीपगमनम् ॥ ६ ॥

---

नारदः—

हर्यश्वस्त्वब्रवीद् वाक्यं विचिन्त्य बहुधा ततः ।
दीर्घकालं विनिश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ १

हर्यश्वः—

उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु ।
गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता हि पञ्चसु ॥ २

[1]श्रोण्यौ ललाटकक्ष्यौ च घ्राणं चेति षडुन्नतम् ।
सूक्ष्माण्यङ्गुलिपर्वाणि केशरोमनखत्वचः ॥ ३

स्वरस्सत्वं च नाभिश्च त्रिगम्भीरं प्रचक्षते ।
पाणिपादतले रक्ते नेत्रान्तास्यनखानि च ॥ ४

[2]बहुदेवासुरालोका बहुगन्धर्वदर्शना ।

---

1. अ-क-म-मा—श्लोकद्वयं नास्ति 2. अ-क—इदमर्धं नास्ति

बहुलक्षणसम्पन्ना बहुकल्याणधारिणी ॥ ५

समर्थेयं जनयितुं चक्रवर्तिनमात्मजम् ॥ ५॥

ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ६

गालवः—

एकतश्श्यामकर्णानां शतान्यष्टौ च देहि मे ।
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ७

ततस्तव भवित्रीयं पुत्राणां जननी शुभा ।
अरणीव हुताशानां योनिरायतलोचना ॥ ८

नारदः—

स तच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः ।
उवाच गालवं दीनो राजर्षिरृषिसत्तमम् ॥ ९

हर्यश्वः—

द्वे मे शते सन्निहिते हयानां यद्विधास्तव ।
एष्टव्याश्शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ १०

सोऽहमेकमपत्यं वै जनयिष्यामि गालव ।
अस्यामेतं भवान् कामं सम्पादयतु मे वरम् ॥ ११

नारदः—

एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ॥ ११॥

माधवी—

मम दत्तो वरः कश्चित् केनचिद् ब्रह्मवादिना ।
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वमिति प्रभो ॥ १२॥

[1]स त्वं ददस्व मां राज्ञे परिगृह्य हयोत्तमान् ॥ १३

नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि वै ।
भविष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ १४

क्रियतामुपसंहारो गुर्वर्थं द्विजसत्तम ।
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज ॥ १५

**नारदः—**

एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ।
हर्यश्वं पृथिवीपालम् इदं वचनमब्रवीत् ॥ १६

**गालवः—**

इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ।
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ १७

**नारदः—**

प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च ।
समये देशकाले च लब्धवान् सुतमीप्सितम् ॥ १८

जातो वसुमना नाम वसुभ्यो वसुसत्तमः ।
वसुप्रख्यो नरपतिस् स बभूव वसुप्रदः ॥ १९

अथ काले पुनर्धीमान् गालवः प्रत्युपस्थितः ।
उपसङ्गम्य चोवाच हर्यश्वं प्रीतमानसम् ॥ २०

**गालवः—**

जातो नृप सुतस्तेऽयं बालो भास्करसन्निभः ।

---

1. म—अर्धद्वयं नास्ति

काले गन्तुं नरश्रेष्ठ शुल्कार्थमपरं नृपम् ॥ २१

नारदः—

हर्यश्वस्सत्यवचने स्थितस्स्थित्वा च पौरुषे ।
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ २२

माधवी च पुनर्दीप्तां परित्यज्य नृपाश्रियम् ।
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् ॥ २३

त्वय्येव तावत् तिष्ठन्तु हया इत्युक्तवान् द्विजः ।
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ चतुरधिकशततमोऽध्यायः ॥

गालवेन दिवोदासं प्रति स्वागमनकारणकथनम् ॥ १ ॥ तेन स्वस्या-प्यश्वशतद्वयवत्त्वेन एकपुत्रोत्पादनकथनम् ॥ २ ॥ तथा शुल्कदानेन तस्यां प्रतर्दनाख्यसुतमुत्पाद्य कालान्तरागताय गालवाय माधवीप्रत्यर्पणम् ॥ ३ ॥

---

गालवः—

महावीर्यो महीपालः काशीनामीश्वरः प्रभुः ।
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः ॥ १

तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः ।
धार्मिकस्संयमे युक्तस् सत्ये चैव जनेश्वरः ॥ २

नारदः—

तमुपागम्य स मुनिर् न्यायतस्तेन सत्कृतः ।
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ॥ ३

दिवोदासः—

श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज ।
काङ्क्षितो हि मयैषोऽर्थश् श्रुत्वैव द्विजसत्तम ॥ ४

एतच्च मे बहुमतं यदुत्सृज्य नराधिपान् ।
मामेवमुपयातोऽसि भावि चैतदसंशयम् ॥ ५

स एव विभवोऽस्माकम् अश्वानामपि गालव ।
अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥ ६

नारदः—

तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात् कन्यां महीपतेः ।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ॥ ७

रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः ।
स्वाहायां च यथा वह्निर् यथा शच्यां च वासवः ॥ ८

यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः ।
वरुणश्च यथा गौर्यां यथा चर्ध्या धनेश्वरः ॥ ९

यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः ।

यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः ॥ १०

अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया ।
च्यवनश्च सुकन्यायां पुलस्त्यस्सन्ध्यया यथा ॥ ११

अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान् यथा ।
[1]यथा भृगुः पुलोमायाम् अदित्यां कश्यपो यथा ॥ १२

रेणुकायां यथर्चीको हैमवत्यां च कौशिकः ।
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वया ॥ १३

यथा भूम्यां भूमिपतिर् उर्वश्यां च पुरूरवाः ।
दधीचिस्सत्यधृत्यां च सरस्वत्यां यथा मनुः ॥ १४

शकुन्तलायां दुष्यन्तो धृत्यां धर्मश्च शाश्वतः ।
दमयन्त्यां नलश्चैव सत्यवत्यां च भार्गवः ॥ १५

जरत्कारुर्जरत्कार्वां [2]रत्यां च मदनो यथा ।
[3]मेनकायां यथोर्णायुस् तुम्बुरुश्चैव रम्भया ॥ १६

वासुकिश्शतशीर्षायां कुमार्यां च धनञ्जयः ।
[4]वैदेह्यां च यथा रामो रुक्मिण्यां च जनार्दनः ॥ १७

तथा तु रममाणस्य दिवोदासस्य भूपतेः ।

1. अ-क—इदमर्धं नास्ति
2. अ-क-ख-ग-घ-म-मा—पुलहश्च पतिव्रताम् । [ अधिकः पाठः ]
3. ङ—पुलहश्च भरद्वाज्यां धृत्यां धर्मश्च शाश्वतः ।
4. ङ—इदमर्धं नास्ति

माधवी जनयामास पुत्रमेकं प्रतर्दनम् ॥ १८

अथाजगाम भगवान् दिवोदासं स गालवः ।
समये समनुप्राप्ते वचनं चेदमब्रवीत् ॥ १९

गालवः—

निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः ।
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ २०

नारदः—

दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम् ।
कन्यां निर्यातयामास स्थितस्सत्ये महीपतिः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

गालवेन पुनः कन्यात्वमुपगतया माधव्या सह उशीनरनृपं गत्वा स्वागमनकारणकथनम् ॥ १ ॥ तेनाप्यश्वशतद्वयदानेन माधव्यां शिबिनामकतनयोत्पादनम् ॥ २ ॥ कालान्तरे उशीनरान्माधवीमादाय गच्छतो गालवस्य मध्येमार्गं गरुडेन समागमः ॥ ३ ॥

---

नारदः—

तथैव तां श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी ।
माधवी गालवं विप्रम् अन्वयात् सत्यसङ्गरा ॥ १

गालवो विमृशन्नेव स्वकार्यगतमानसः ।
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ २

तमुवाचा[1]थ गत्वा तु भूपते सत्यविक्रमम् ॥ २॥

गालवः—

इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ।
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च ॥ ३॥

सोमार्कप्रतिसङ्काशौ जनयित्वा सुतौ नृप ॥ ४

शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम् ।
एकतश्श्यामकर्णानां देयं मह्यं चतुश्शतम् ॥ ५

गुर्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे ।
यदि शक्यं महाराज [2]क्रियतामविचारितम् ॥ ६

अनपत्योऽसि राजर्षे सुतौ जनय पार्थिव ।
पितॄन् पुत्रप्लवेन त्वम् आत्मानं चैव तारय ॥ ७

न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः ।
न याति नरकं घोरं यत्र गच्छन्त्यनात्मजाः ॥ ८

नारदः—

एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम् ।
उशीनरः प्रतिवचो ददौ तस्य नराधिपः ॥ ९

1. ङ—भिसङ्गम्य ।
2. ङ-म-मा—क्रियतां मा विचारणा।

उशीनरः—

श्रुतवानस्मि ते वाक्यं यथा वदसि गालव ।
विधिस्तु बलवान् ब्रह्मन् प्रवणं हि मनो मम ॥ १०

शते द्वे तु मयाऽश्वानाम् ईदृशानां द्विजोत्तम ।
इतरेषां सहस्राणि सुबहूनि चरन्ति मे ॥ ११

अहमप्येकमेवास्यां जनयिष्यामि गालव ।
[1]द्विज पुत्रगतं मार्गं गमिष्यामि परैरहम् ॥ १२

मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम ।
पौरजानपदार्थं तु ममार्थो नात्मभोगतः ॥ १३

कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मन् युज्यते यशसाऽपि च ॥ १४

सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान् मम ।
कुमारीं देवगर्भाभाम् एकपुत्रभवाय मे ॥ १५

नारदः—

तथा तु बहुकल्याणम् उक्तवन्तं नराधिपम् ।
उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ १६

उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम् ।
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ॥ १७

कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।

---

1. अ-क — नास्तीदमर्धम्

उद्यानेषु विचित्रेषु वनेपूपवनेषु च ॥ १८

हर्म्येषु रमणीयेषु प्रासादशिखरेषु च ।

वातायनविमानेषु तथा गर्भगृहेषु च ॥ १९

ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः ।

शिबिर्नाम्नाऽतिविख्यातो यस्स पार्थिवसत्तमः ॥ २०

उपस्थाय स तं विप्रो गालवः प्रतिगृह्य ताम् ।

कन्यां [1]प्रायाच्च तं राजन् दृष्टवान् विनतात्मजम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

॥ ५४ ॥ भगवद्यानपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ षडधिकशततमोऽध्यायः ॥

गालवेन गरुडं प्रत्यश्वानां शतद्वयन्यूनताकथनम् ॥ १॥ गरुडेन तस्य दुर्लभत्वकथनपूर्वकं तत्प्रतिनिधितया माधव्या एव दानकथनम् ॥ २ ॥ विश्वामित्रेण गालवदत्तायां माधव्यां अष्टकाख्यपुत्रमुत्पाद्य तस्याः पुनर्गालवे प्रत्यर्पणम् ॥ ३ ॥ गालवेन पुनर्ययातये माधवीप्रत्यर्पणम् ॥ ४ ॥

---

नारदः—

गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् ॥ ॥

सुपर्णः—

दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥ १

---

1. ग—प्रायाच्छतं। अ-क-ख—प्रयातस्तां। मा—प्रायच्छतं।

नारदः—

गालवस्तु वचश्श्रुत्वा वैनतेयेन भाषितम् ।
चतुर्भागावशिष्टं तम् आचख्यौ कार्यमस्य हि ॥ २

सुपर्णस्त्वब्रवीदेनं गालवं पततां वरः ॥ २॥

सुपर्णः—

प्रयत्नस्ते न कर्तव्यो नैष सम्पत्स्यते तव ॥ ३

पुरा हि कन्याकुब्जे वै गाधेस्सत्यवतीं सुताम् ।
भार्यार्थे वरयन् कन्याम् ऋचीकस्तेन भाषितः ॥ ४

[1]एकतश्श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
भगवन् दीयतां मह्यं सहस्रमिति गालव ॥ ५

ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः ।
अश्वतीर्थे हयाँल्लब्ध्वा दत्तवान् पार्थिवाय वै ॥ ६

इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्ते तैः पार्थिवैस्तदा ॥ ७

अपराण्यपि चत्वारि शतानि द्विजसत्तम ।
नीयमानानि सन्तारे हृतान्यासन्नितस्ततः ॥ ८

एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ॥ ८॥

इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय ।
विश्वामित्राय धर्मात्मन् षड्भिरश्वशतैस्सह ॥ ९॥

---

1. म—अर्धत्रयं नास्ति

ततोऽसिं गतसम्मोहः कृतकृत्यो द्विजोत्तम ॥ १०

नारदः—

गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः ।
आदायाश्वांश्च कन्यां च विश्वामित्रमुपागमत् ॥ ११

गालवः—

अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै ।
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ॥ १२
अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः ।
चतुर्थं जनयत्वेकं भवानपि नरोत्तमम् ॥ १३
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते ।
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥ १४

नारदः—

विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा ।
कन्यां च तां वरारोहाम् इदमित्यब्रवीद्वचः ॥ १५

विश्वामित्रः—

किमियं पूर्वमेवेह न दत्ता मम गालव ।
पुत्रा ममैव चत्वारो भवेरन् कुलभावनाः ॥ १६
प्रतिगृह्णामि ते कन्याम् एकपुत्रफलाय वै ।
अश्वाश्चाश्रममासाद्य तिष्ठन्तु मम सर्वशः ॥ १७

नारदः—

स तया रममाणोऽथ विश्वामित्रो महाद्युतिः ।
आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ १८

जातमात्रं सुतं तं च विश्वामित्रो महामुनिः ।
संयोज्यार्थैस्तथा धर्मैर् अश्वैस्तैस्समयोजयत् ॥ १९

अथाष्टकः पुरं प्रायात् तदा सोमपुरप्रभम् ।
निर्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ ॥ २०

गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम् ।
मनसाऽभिप्रणीतेन कन्यामिदमुवाच ह ॥ २१

गालवः—

जातो दानपतिः पुत्रस् त्वया शूरस्तथाऽपरः ।
सत्यधर्मरतश्चान्यो यज्वा चापि तथाऽपरः ॥ २२

तदागच्छ वरारोहे तारितस्ते पिता सुतैः ।
[1]चत्वारश्चैव राजानस् तथाऽहंच सुमध्यमे ॥ २३

वैशम्पायनः—

[2]नारदस्य तु तद्वाक्यं श्रुत्वा सर्वे सभासदः ।
पूजयामासुरत्यर्थं सर्वज्ञं नारदं तदा ॥ २४

नारदः—

गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ।
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ५४ ॥ भगवद्यानपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

---

1. ख-घ-ङ-मा—भर्तारश्चैव । 2. ख-घ-ङ—नास्त्ययं श्लोकः

## ॥ सप्ताधिकशततमोऽध्यायः ॥

यथातिना माधव्याः गङ्गायमुनासङ्गमदेशे स्वयंवरोद्घोषणेन यक्षगन्धर्वादीनां तत्रागमनम् ॥ १ ॥ माधव्या तु सर्ववरानतिक्रम्य वनमध्ये तपश्चरणम् ॥ २ ॥ कालान्तरे स्वर्गं गतस्य ययातेः बहुवर्षसहस्रावसाने सदसि देवर्ष्याद्यवमाननेन सद्यस्तेजोहानिः ॥ ३ ॥

नारदः —

स तु राजा पुनस्तस्याः कर्तुकामस्स्वयंवरम् ।
उपगम्याश्रमपदं गङ्गायामुनसङ्गमे ॥ १

गृहीतमाल्यदामां तां रथमारोप्य माधवीम् ।
पूरुर्यदुश्च भगिनीम् आश्रमे पर्यधावताम् ॥ २

नागयक्षमनुष्याणां पतत्रिमृगपक्षिणाम् ।
[1]शैलद्रुमवनौकानाम् आसीत् तत्र समागमः ॥ ३

नानापुरुषदेश्यानाम् ईश्वरैश्च समाकुलम् ।
ऋषिभिश्च महाभागैस् समन्तादावृतं वनम् ॥ ४

निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी ।
वरानुत्क्रम्य सर्वांस्तान् वरं वृतवती वनम् ॥ ५

अवतीर्य रथात् कन्या नमस्कृत्य च बन्धुषु ।
उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥ ६

---

1. अ-क-ख—इदमर्धं नास्ति

उपवासैश्च विविधैर् दीक्षाभिर्नियमैस्तथा ।
आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ॥ ७

वैडूर्याङ्कुरकल्पानि मृदूनि हरितानि च ।
चरन्ती [1]श्लक्ष्णशष्पाणि तिक्तानि मधुराणि च ॥ ८

[2]स्रवन्तीनां च पुण्यानां सुरसानि [3]शुचीनि च ।
पिबन्ती वारिमुख्यानि शीतानि विमलानि च ॥ ९

वनेष्वमृतकल्पेषु सिंहविप्रोषितेषु च ।
दवाग्निविप्रमुक्तेषु शून्येषु गहनेषु च ॥ १०

चरन्ती हरिणैस्सार्धं मृगीव वनचारिणी ।
चचार विपुलं धर्मं ब्रह्मचर्येण संवृता ॥ ११

ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः ।
बहुवर्षसहस्रायुर् युयुजे कालधर्मणा ॥ १२

पूरुर्यदुश्च द्वौ वंशे वर्धमानौ नरोत्तमौ ।
ताभ्यां प्रतिष्ठितो लोको परलोके च नाहुषः ॥ १३

---

1. मा—तृणमुख्यानि ।　　म—श्लक्ष्णमुख्यानि ।
ग—शष्पमुख्यानि स्निग्धानि ।
घ-ङ—शष्पमुख्यानि शीतानि विविधानि च ।
ख—बिल्वमुख्यानि तिक्तानि कटुकानि च ।
2. घ-ङ—नास्त्ययं श्लोकः ।　　3. ख-ग-म-मा—लघूनि च ।

[1]महीपते नरपतिर् ययातिस्स्वर्गमास्थितः ।
महर्षिकल्पो नृपतिस् स्वर्गाग्र्यफलभुग्विभुः ॥ १४

अथ वर्षसहस्रान्ते काले बहुगुणे गते ।
राजर्षिषु निषण्णेषु महीयस्सु महर्धिषु ॥ १५

अवमेने नरान् सर्वान् देवान् ऋषिगणांस्तथा ।
ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः ॥ १६

ततस्तं बुबुधे देवश् शक्रो बलनिषूदनः ।
ते च राजर्षयस्सर्वे धिग्धिगित्येवमब्रुवन् ॥ १७

विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम् ॥ १७॥

कोऽन्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः ।
कर्मणा केन सिद्धोऽयं क वाऽनेन तपश्चितम् । १८॥

[2]कथं विज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ १९

एवं विचारयन्तस्ते राजानं स्वर्गवासिनः ।
दृष्ट्वा पप्रच्छुरन्योन्यं ययातिं नृपतिं प्रति ॥ २०

विमानपालाश्शतशस् स्वर्गद्वाराभिरक्षिणः ।
पृष्टा आसनपालाश्च न जानीम इति ब्रुवन् ॥ २१

---

1. अ-क—इदमर्धं नास्ति 2. अ-क—इदमर्धं नास्ति

सर्वे ते ह्यावृतज्ञाना [1]नाभ्यजानन्त तं नृपम् ।
स मुहूर्तादथ नृपो हतौजाश्चाभवत् तदा ॥ २२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ५४ ॥ भगवद्यानपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

## ॥ अष्टाधिकशततमोऽध्यायः ॥

ययातिं प्रति इन्द्रदूतेन पतेत्युक्तिः ॥ १ ॥ ययातेः सत्सु पतेयमिति स्वप्रार्थितेन्द्रवरेण नैमिशे यजतां स्वदौहित्राणां मध्ये भुवं प्रति पतनम् ॥ २ ॥ ययातिना तैः प्रदित्सितसुकृतफलप्रतिग्रहानभिरोचनम् ॥ ३ ॥ तत्रागतया माधव्या तेषां तद्दौहित्रतामभिधाय ययातये तेभ्यः सुकृतफलप्रदापनपूर्वकं स्वसुकृतफलार्धदानम् ॥ ४ ॥ गालवेन स्वतपोष्टमांशफलदानम् ॥ ५ ॥

---

नारदः—

अथ प्रचलितस्स्थानाद् आसनाच्च परिच्युतः ।
कम्पितेनैव मनसा धर्षितश्शोकवह्निना ॥ १

म्लानस्रग् भ्रष्टविज्ञानः प्रभ्रष्टमकुटाङ्गदः ।
विघूर्णस्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः ॥ २

अदृश्यमानस्तान् पश्यन् अपश्यंश्च पुनःपुनः ।

1. ग-व-ङ-म-मा—ययातिं नृपतिं प्रति ।

शून्यश्शून्येन मनसा प्रापतत् स महीतलम् ॥ ३

किं मया मनसा ध्यातम् अशुभं स्वर्गदूषणम् ।
येनाहं चालितस्स्थानाद् इति राजा व्यचिन्तयत् ॥ ४

ते तु तत्रैव राजानस् सिद्धाश्चाप्सरसस्तथा ।
अपश्यन्त निरालम्बं ययातिं स्वर्गतश्च्युतम् ॥ ५

अथैत्य पुरुषः कश्चित् क्षीणपुण्यं निपातिता ।
ययातिमब्रवीद्राजन् देवराजस्य शासनात् ॥ ६

अतीव मदमत्तस्त्वं न कश्चिन्नावमन्यसे ।
मानेन भ्रष्टस्स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ॥ ७

न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् ॥ ७॥

पतेयं सत्स्विति वचस् त्रिरुक्त्वा नहुषात्मजः ।
पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः ॥ ८॥

एतस्मिन्नेव काले तु नैमिशे पार्थिवर्षभान् ।
चतुरोऽपश्यत नृपस् तेषां मध्ये पपात सः ॥ ९॥

प्रतर्दनो वसुमनाश् शिबिरौशीनरोऽष्टकः ।
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् ॥ १०॥

तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम् ।
ययातिरुपाजिघ्रन् वै निपपात महीं प्रति ॥ ११॥

भूमौ स्वर्गे च सम्बद्धां नदीं धूम[1]मयीमिव ।
[2]गङ्गां गामिव गच्छन्तीम् आलम्ब्य जगतीपतिः ॥ १२॥

श्रीमत्स्ववभृथाग्र्येषु चतुर्षु [3]प्रियबन्धुषु ।
मध्ये निपतितो राजा लोकपालोपमेषु सः ॥ १३॥

चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु ।
पपात मध्ये राजर्षिर् ययातिः पुण्यसङ्क्षये ॥ १४॥

तमाहुः पार्थिवास्सर्वे दीप्यमानमिव श्रिया ॥ १५

राजानः—

[4]को भवान् कस्य वा बन्धुर् देशस्य नगरस्य वा ।
यक्षो [5]वाऽप्यथवा देवो गन्धर्वो राक्षसोऽपि वा ॥ १६
न हि मानुषरूपोऽसि को वाऽर्थः काङ्क्षितस्त्वया ॥ १६॥

ययातिः—

ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः ।
पतेयं सत्स्विति ध्यायन् भवत्सु पतितस्ततः ॥ १७॥

राजानः—

सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ ।
सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् ॥ १८॥

---

1. ङ-म-मा—मर्यां नृपः ।　　2. ख-ब-ङ-मा—स गङ्गामिव ।
3. म—प्रीत । अ-क-ख-ग-ब-ङ—प्रति । 4. म—अर्धद्वयं नास्ति
5. मा—विद्याधरो देवो ।

ययातिः—

नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम् ।
न च मे प्रवणा बुद्धिः परपुण्यविनाशने ॥ १९॥

नारदः—

एतस्मिन्नेव काले तु मृगचर्याक्रमागताम् ।
माधवीं प्रेक्ष्य राजानस् त्वभिवाद्येदमब्रुवन् ॥ २०॥

राजानः—

किमागमनकृत्यं ते किं कुर्मश्शासनं तव ।
आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने ॥ २१॥

नारदः—

तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा ।
पितरं समुपागच्छद् ययातिं सा ववन्द च ॥ २२॥
दृष्ट्वा मूर्धनि तान् पुत्रांस् तापसी वाक्यमब्रवीत् ॥ २३

माधवी—

दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ।
इमे त्वां तारयिष्यन्ति दृष्टमेतत् पुरातनम् ॥ २४
अहं ते दुहिता राजन् माधवी मृगचारिणी ।
मयाऽप्युपचितो धर्मस् ततोऽर्धं प्रतिगृह्यताम् ॥ २५
यस्माद्राजन् नरास्सर्वे अपत्यफलभागिनः ।

तस्मादिच्छन्ति दौहित्रान् यथा त्वं वसुधाधिप ॥ २६

नारदः—

ततस्ते पार्थिवास्सर्वे शिरसा जननीं तदा ।
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् ॥ २७

उच्चैरनुपमैस्स्निग्धैस् स्वरैरापूर्य मेदिनीम् ।
मातामहं नृपतयस् तारयन्तो दिवश्च्युतम् ॥ २८

राजानः—

[1]राजधर्मगुणोपेतास् सत्यधर्मपरायणाः ।
दौहित्रास्ते वयं राजन् दिवमारोह पार्थिव ॥ २९

नारदः—

अथाकस्मादुपगतो गालवोऽप्याह पार्थिवम् ॥ २९॥

गालवः—

तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ५४ ॥ भगवद्यानपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

---

1. अ-क-म—अर्धद्वयं नास्ति

## ॥ नवाधिकशततमोऽध्यायः ॥

स्वदौहित्रादिदत्तपुण्यफलप्रभावेण पुनर्ययातेः स्वर्गगमनम् ॥ १ ॥

नारदः—

प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवैः ।
[1]ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः ॥ १

[2]समारुरोह नृपतिर् अस्पृशन् वसुधातलम् ॥ १॥

दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत् पदा ॥ २॥

ततो वसुमनाः पूर्वम् उच्चैरुच्चारयन् वचः ।
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ॥ ३॥

वसुमनाः—

प्राप्तवानस्मि यल्लोके सर्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ॥ ४॥

[3]यत् फलं दानशीलस्य क्षमाशीलस्य यत् फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥ ५॥

नारदः—

ततः प्रतर्दनोऽप्याह वाचं क्षत्रियपुङ्गवः ॥ ६

1. म-मा—इदमर्धं नास्ति 2. अ-क—इदमर्धं नास्ति
3. अ-क—नास्त्ययं श्लोकः।

प्रतर्दनः—

यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ।
प्राप्तवानस्मि यल्लोके क्षत्रवंशोद्भवं यशः ॥ ७

वीरशब्दफलं चैव तेन संयुज्यतां भवान् ।
[1]यथा धर्मे रतिर्नित्यं तेन सत्येन खं व्रज ॥ ८

नारदः—

[2]शिबिरौशीनरो धीमान् उवाच मधुरां गिरम् ॥ ८॥

शिबिः—

यथा बालेषु नारीषु वैवाह्येषु तथैव च ।
सङ्गरेषु निपातेषु तथा च व्यसनेषु च ॥ ९॥
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ॥ १०

यथा प्राणांश्च राज्यं च राजकर्मसुखानि च ।
त्यजेयं न त्वहं सत्यं तेन सत्येन खं व्रज ॥ ११

यथा सत्येन मे धर्मो यथा सत्येन मे यमः ।
प्रीत[3]श्शतक्रतुश्चैव तेन सत्येन खं व्रज ॥ १२

नारदः—

अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।
अनेकशतयज्वानं वचनं प्राह धर्मवित् ॥ १३

---

1. अ-क—इदमर्धं नास्ति　　2. मा—इतः अर्धचतुष्टयं नास्ति
3. म-मा—श्शक्रश्च सत्येन ।

अष्टकः—

शतशः पुण्डरीका मे गोसवा रचिताः प्रभो ।
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि ॥ १४

न मे रत्नानि न धनं न तथाऽन्ये परिच्छदाः ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज ॥ १५

नारदः—

यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ।
तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ ॥ १६

एवं सर्वे समस्तैस्ते राजानस्सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा ॥ १७

दौहित्रास्स्वेन धर्मेण यज्ञदानकृतेन वै ।
चतुर्षु राजवंशेषु सम्भूताः कुलवर्धनाः ॥ १८

मातामहं महाप्राज्ञं दिवमारोपयन्त ते ॥ १८॥

राजानः—

राजधर्मगुणोपेतास् सत्यधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन् दिवमारोह पार्थिव ॥ १९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

॥ ५४ ॥ भगवद्यानपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ अस्मिन्नध्याये १९॥ श्लोकाः ]

---

## ॥ दशाधिकशततमोऽध्यायः ॥

स्वर्गे ययातिप्रश्नानुरोधेन पितामहेन तत्पतनकारणकथनम् ॥ १ ॥ नारदेन ययात्युपाख्यानोपसंहारपूर्वकं दुर्योधनं प्रति गालवययातिदृष्टान्त-प्रदर्शनेन निर्बन्धाभिमानत्यागपूर्वकं पाण्डवैः सन्धिकरणविधानम् ॥ २ ॥

नारदः—

सद्भिरारोपितस्स्वर्गं पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान् ययातिर्दिवमास्थितः ॥ १

अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना ।
परिष्वक्तश्च पुण्येन वायुना च सुगन्धिना ॥ २

अचलं स्थानमारुह्य दौहित्रफलनिर्जितम् ।
कर्मभिस्स्वैरुपचितो जज्वाल परया श्रिया ॥ ३

उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः ।
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्स्वनैः ॥ ४

अभिष्टुतश्च विविधैर् देवराजर्षिचारणैः ।
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ॥ ५

प्राप्तस्स्वर्गफलं चैव तमुवाच पितामहः ।
निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ६

ब्रह्मा—

चतुष्पादस्त्वया धर्मश् चितो लौक्येन कर्मणा ।

अक्षयस्तव लोकोऽयं कीर्तिश्चैवाक्षया दिवि ॥ ७

पुनस्त्वयैव राजर्षे [1]स्वकृतेन विघातितम् ।
आवृतं तमसा चेतस् सर्वेषां स्वर्गवासिनाम् ॥ ८

येन त्वां नाभिजानन्ति ततो ज्ञात्वाऽसि पातितः ।
प्रीत्यैव चासि दौहित्रैस् तारितस्त्वमिहागतः ॥ ९

स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम् ।
अचलं शाश्वतं पुण्यम् उत्तमं ध्रुवमव्ययम् ॥ १०

ययातिः—

भगवन् संशयो मेऽस्ति कश्चित् तं भेत्तुमर्हसि ।
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ ११

बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
[2]अनेकक्रतुदानौघैर् यन्मयोपार्जितं फलम् ॥ १२

कथं तदल्पकालेन क्षीणं येनास्मि पातितः ।
भगवन् वेत्थ लोकांश्च शाश्वतान् मम निर्मितान् ॥ १३

कथं नु मम तत् सर्वं विप्रनष्टं महाद्युते ॥ १३॥

ब्रह्मा—

बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैर् यत् त्वयोपार्जितं फलम् ॥ १४॥

---

1. ख-ग-घ-ङ-म-मा—स्वकृतेनैव कर्मणा ।
2. अ—अर्धपञ्चकं नास्ति

तदनेनैव दोषेण क्षीणं येनासि पातितः ।
अभिमानेन राजेन्द्र धिक्कृतस्स्वर्गवासिभिः ॥ १५॥
नायं मानेन राजर्षे न बलेन न हिंसया ।
न शाठ्येन न मायाभिर् लोको भवति शाश्वतः ॥ १६॥
नावमान्यास्त्वया राजन्नधमोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित् ॥ १७॥
पतनारोहणमिदं कथयिष्यन्ति ये नराः ।
विषमाण्यपि ते प्राप्तास् तरिष्यन्ति न संशयः ॥ १८॥

नारदः—

एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना ।
निर्बन्धताऽतिमात्रं च गालवेन महीपते ॥ १९॥
श्रोतव्यं हितकामानां सुहृदां भूतिमिच्छताम् ।
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयावहः ॥ २०॥
तस्मात् त्वमपि गान्धारे मानं क्रोधं च वर्जय ।
सन्धत्स्व पाण्डवै[1]र्वीर संरम्भं त्यज पार्थिव ॥ २१॥
[2]स भवान् सुहृदां पथ्यं वचो गृह्णातु माऽनृतम् ।
समर्थैर्विग्रहं कृत्वा विषमस्थो भविष्यसि ॥ २२॥

ददाति यत् पार्थिव यत् करोति
यद्वा तपस्तप्यति यज्जुहोति ।

---

1. म—र्वीरैस् ।　2. अ-क-ख-म-मा—अर्धद्वयं नास्ति

न तस्य नाशोऽस्ति न चापकर्षो
नान्यस्तदश्नाति स एव कर्ता ॥ २३॥
इदं महाख्यानमनुत्तमं मतं
बहुश्रुतानां गतरोषरागिणाम् ।
समीक्ष्य लोके बहुधा प्रधावतां
त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

॥ ५४ ॥ भगवद्यानपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[अस्मिन्नध्याये २४॥ श्लोकाः]

---

## ॥ एकादशाधिकशततमोऽध्यायः ॥

धृतराष्ट्रेण श्रीकृष्णं प्रति दुर्योधनानुनयप्रार्थना ॥ १ ॥ श्रीकृष्णेन दुर्योधनानुनयः ॥ २ ॥

---

धृतराष्ट्रः—
भगवन्नेवमेवैतद् यथा वदसि नारद ।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् ॥ १

वैशम्पायनः—
[1]एवमुक्त्वा ततः कृष्णम् अभ्यभाषत भारत ॥ १॥

धृतराष्ट्रः—
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव ।

---

1. घ-ङ—इतः सार्धः श्लोको नास्ति

न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ॥　　२॥

[1]न मंस्यन्ते दुरात्मानः पुत्रा मम जनार्दन ॥　　३

[2]अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ।
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ॥　　४

[3]न शृणोति महाबाहो वचनं साधु भाषितम् ॥　　४॥

गान्धार्याश्च हृषीकेश विदुरस्य च धीमतः ।
अन्येषां चैव सुहृदां भीष्मादीनां हितैषिणाम् ॥　　५॥

स त्वं पापमतिं क्रूरं पापचित्तमचेतनम् ।
अनुशाधि दुरात्मानं स्वयं दुर्योधनं नृपम् ॥　　६॥

सुहृत्कार्यं तु सुमहत् कृतं ते स्याज्जनार्दन ॥　　७

**वैशम्पायनः—**

ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सूक्ष्मधर्मार्थतत्त्ववित् ॥　　८

**श्रीभगवान्—**

दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
समर्थं ते विशेषेण सानुबन्धस्य भारत ॥　　९

महाप्राज्ञकुले जातस् साध्वेतत् कर्तुमर्हसि ।
श्रुतवृत्तोपसम्पन्नस् सर्वैस्समुदितो गुणैः ॥　　१०

---

1. अ-ख-ग-घ-ङ-म-मा—इदमर्धं नास्ति
2. घ—तथाऽब्रवीद्वासुदेवं धृतराष्ट्रो जनेश्वरम् ।　　[अधिकः पाठः]
3. ख-घ-ङ-म-मा—कोशेषु सार्धश्लोकद्वयं न दृश्यते ।

दौष्कुलेया [1]दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर् यथा त्वं तात [2]वर्तसे ॥ ११

धर्मार्थयुक्ता लोकेऽस्मिन् प्रवृत्तिर्लक्ष्यते सताम् ।
असतां विपरीता तु लक्ष्यते भरतर्षभ ॥ १२
विपरीता त्वियं वृत्तिर् असकृल्लक्ष्यते त्वयि ॥ १२॥

अनर्थश्चानुबन्धोऽत्र घोरः प्राणहरो महान् ।
अनेकशस्त्वन्निमित्तम् अयशस्यं च भारत ॥ १३॥

तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि ।
भ्रातृणामथ भृत्यानां मित्राणां च परन्तप ॥ १४॥
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे ॥ १५
प्राज्ञैश्शूरैर्महोत्साहैर् आत्मवद्भिर्बहुश्रुतैः ।
सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ॥ १६
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः ।
पितामहस्य द्रोणस्य विदुरस्य महामतेः ॥ १७
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
अश्वत्थाम्नो विकर्णस्य सञ्जयस्य विविंशतेः ॥ १८
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परन्तप ।
शमे शर्म भवेत् तात सर्वस्य जगतस्तथा ॥ १९

---

1. ग—दुराचारा। म—महात्मानो ।
2. अ-क-ख-ग-घ—मन्यसे ।

ह्रीमानसि कुले जातश्श्रुतवानानृशंस्यवान् ।
तिष्ठ तात पितुश्शास्त्रे मातुश्च भरतर्षभ ॥　　२०

एतच्छ्रेयो हि तन्मन्ये पिता यच्छास्ति भारत ।
उत्तमापद्गतः पूर्वं पितुस्स्मरसि शासनम् ॥　　२१

रोचते ते पितुस्तात पाण्डवैस्सह सङ्गमः ।
सामात्यस्य कुरुश्रेष्ठ तत् तुभ्यं तात रोचताम् ॥　　२२

श्रुत्वा यस्सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते [1]दहत्येनं किम्पाकमिव भक्षितम् ॥　　२३

यस्तु निश्श्रेयसं वाक्यं मोहान्न प्रतिपद्यते ।
स दीर्घसूत्रो हीनार्थः पश्चात् तापेन युज्यते ॥　　२४

यस्तु निश्श्रेयसं श्रुत्वा प्राप्तमेवाभिपद्यते ।
आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥　　२५

योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां [2]वशमेति सः ॥　　२६

सतां मतमतिक्रम्य योऽसतां वर्तते मते ।
शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥　　२७

मुख्यानमात्यानुत्सृज्य यो निहीनान् निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥　　२८

---

1. ख-च-ङ-म—हिनस्त्येनं ।　　2. ग-च-ङ—वशमेष्यति ।

योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम् ।
परान् वृणीते स्वान् द्वेष्टि [1]तं गौस्त्यजति भारत ॥ २९

स त्वं विरुद्ध्य तैर्वीरैर् अन्येभ्यस्त्राणमिच्छसि ।
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ ॥ ३०

को हि शक्रसमान् ज्ञातीन् अतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत् त्वदन्यो भुवि मानवः ॥ ३१

जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ३२

मिथ्योपचरितास्तात जन्मप्रभृति पाण्डवाः ।
त्वयि सम्यङ् महाबाहो प्रतिपन्ना यशस्विनः ॥ ३३

त्वयाऽपि प्रतिपत्तव्यं तथैव भरतर्षभ ।
[2]स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥ ३४

त्रिवर्गयुक्तः प्राज्ञानाम् आरम्भो भरतर्षभ ।
धर्मार्थावनुरुद्ध्यन्ते त्रिवर्गासम्भवे नराः ॥ ३५

पृथक् च विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुद्ध्यते ॥ ३६

इन्द्रियैः [3]प्राकृतो लोभाद् धर्मं विप्रजहाति यः ।

---

1. ख-ग-ङ—भूस्तं शपति । घ—श्रीस्तं शपति ।
म-मा—भूतं शपति । 2. ङ—अर्धत्रयं नास्ति
3. ग-घ-ङ-म-मा—प्रसृतो बालो धर्मं विप्रजहाति सः ।

कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ३७

कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वाऽपि कदाचन ॥ ३८

उपायं धर्ममेवाहुस् त्रिवर्गस्य विशाम्पते ।
लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्धते ॥ ३९

स त्वं तातानुपायेन लिप्ससे भरतर्षभ ।
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ॥ ४०

आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यस्सम्यग् वर्तमानेषु [1]मिथ्या राजन् प्रवर्तते ॥ ४१

[2]अमित्रो नातिकर्तव्यः नातिदेयः कदाचन ।
[3]जीवितं ह्यपि दुःखार्तास् सन्त्यजन्ति कदाचन ॥ ४२

न सम्पन्नस्य मतिं छिन्द्याद् यस्य नेच्छेत् पराभवम् ॥ ४२॥

अविच्छिन्नस्य धीरस्य कल्याणे धीयते मतिः ॥ ४३

त्यक्तात्मानं न बाधेत त्रिषु लोकेषु भारत ।
अप्यन्यं प्राकृतं कञ्चित् किमु तान् पाण्डवर्षभान् ॥ ४४

अमर्षवशमापन्नो न किञ्चिद्बुध्यते नरः ।

---

1. म-मा—स्वेषु मिथ्या प्रवर्तते ।
2. अ-क-ख-म-मा—इदमर्धं नास्ति
3. अ-क-ख-ग-घ-म-मा—इदमर्धं नास्ति

छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ॥ ४५

श्रेयस्ते [1]दुर्जनात् तात पाण्डवैस्सह सङ्गतम् ॥ ४५॥

[2]तैर्हि सम्प्रीयमाणस्त्वं परान् कामानवाप्स्यसि ।
पाण्डवैर्निर्जितां भूमिं भुञ्जानो राजसत्तम ॥ ४६॥

पाण्डवान् पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ।
दुश्शासने दुर्विषहे कर्णेऽथापि च सौबले ॥ ४७॥

एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ।
न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा ॥ ४८॥

विक्रमे चाप्यपर्याप्ताः पाण्डवान् प्रति भारत ।
न हीमे सर्वराजानः पर्याप्तास्सहितास्त्वया ॥ ४९॥

क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ।
इदं सन्निहितं तात समग्रं पार्थिवं बलम् ॥ ५०॥

अयं भीष्मस्तथा द्रोणः कर्णश्चापि तथा कृपः ।
भूरिश्रवास्सौमदत्तिर् अश्वत्थामा जयद्रथः ॥ ५१॥

अशक्तास्सर्व एवैते प्रतियोद्धुं धनञ्जयम् ॥ ५२

अजेयो ह्यर्जुनः क्रुद्धस् सर्वैरपि सुरासुरैः ।
मानुषैरपि गन्धर्वैर् मा युद्धे चेत आदधाः ॥ ५३

---

1. घ-ङ—दुर्जयैस्तात।
2. ख-घ-ङ—तैस्सह प्रीयमाणस्तु सर्वान् कामानवाप्स्यसि।

दृश्यतां वा पुमान् कश्चित् समग्रे पार्थिवे बले ।
योऽर्जुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ॥ ५४

किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात् पुमानेकस्स दृश्यताम् ॥ ५५

यस्स देवान् सगन्धर्वान् सयक्षासुरपन्नगान् ।
अजयत् खाण्डवप्रस्थे कस्तं युद्ध्येत मानवः ॥ ५६

तथा विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ५७

तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम् ।
आशंससीह समरे वीरमर्जुनमूर्जितम् ॥ ५८

अद्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायान्तम् अपि साक्षात् पुरन्दरः ॥ ५९

बाहुभ्यामुद्धरेद्भूमिं दहेत् क्रुद्ध इमाः प्रजाः ।
पातयेत् त्रिदिवाद्देवान् योऽर्जुनं समरे जयेत् ॥ ६०

पश्य पुत्रांस्तथा भ्रातॄन् ज्ञातीन् सम्बन्धिबान्धवान् ।
त्वत्कृते न विनश्येयुर् इमे भरतसत्तमाः ॥ ६१

अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ६२

त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।

महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरम् ॥ ६३

मा तात श्रियमायान्तीम् अवमंस्थास्समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ॥ ६४

पाण्डवै[1]स्संशमं कृत्वा कृत्वा च सुहृदां वचः ।
सम्प्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ५४ ॥ भगवद्यानपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[अस्मिन्नध्याये ६५ श्लोकाः]

---

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

भीष्मद्रोणाभ्यां दुर्योधनं प्रति श्रीकृष्णवचनादरणविधानम् ॥ १ ॥
तथा धृतराष्ट्रेणापि दुर्योधनं प्रति श्रीकृष्णवाक्यप्रत्याख्याने अनर्थप्राप्ति-कथनम् ॥ २ ॥

---

वैशम्पायनः—

ततश्शान्तनवो भीष्मो दुर्योधनमरिन्दमम् ।
केशवस्य वचश्श्रुत्वा प्रोवाच भरतर्षभ ॥ १

भीष्मः—

कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता ।

---

1. ङ—स्सङ्गमं कृत्वा ।

अन्वपद्यस्व तत् तात मा मन्युवशमन्वगाः ॥ २
अकृत्वा वचनं तस्य केशवस्य महात्मनः ।
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ३
धर्म्यमर्थ्यं महाबाहुर् आह त्वां तात केशवः ।
तमर्थमभिपद्यस्व मा राजन् नीनशः प्रजाः ॥ ४
[1]ज्वलितां त्वमिमां लक्ष्मीं भारतीं सर्वराजसु ।
जीवतो धृतराष्ट्रस्य दौरात्म्याद् भ्रंशयिष्यसि ॥ ५
आत्मानं च सहामात्यं सपुत्रभ्रातृबान्धवम् ।
[2]अहमित्यनया बुद्ध्या जीविताद् भ्रंशयिष्यसि ॥ ६
अतिक्रामन् केशवस्य तथ्यं वचनमर्थवत् ।
पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ॥ ७
मा कुलघ्नः कुपुरुषो दुर्मतिः कापथं गमः ॥ ७॥
मातरं पितरं चैव वृद्धौ शोकाय मा ददाः ॥ ८

वैशम्पायनः—

अथ द्रोणोऽब्रवीत् तत्र दुर्योधनमिदं वचः ।
अमर्षवशमापन्नं निश्श्वसन्तं पुनः पुनः ॥ ९

द्रोणः—

धर्मार्थयुक्तं वचनम् आह त्वां तात केशवः ।

---

1. ङ-म-मा—इमां श्रियं प्रज्वलितां ।
2. ग-ङ—सह मित्रमसद्बुद्ध्या । घ—अहमित्यमसद्बुद्ध्या ? ।
म—सहपुत्रमसद्बुद्ध्या । मा—सहमित्रमसम्बुद्ध्या ।

तथा भीष्मश्शान्तनवस् तज्जुषस्व नराधिप ॥ १०

प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ ।
आहतुस्त्वां हितं वाक्यं तदादत्स्व नराधिप ॥ ११

अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ।
[1]मा वचो लघुबुद्धीनां समास्थास्त्वं परन्तप ॥ १२

माधवं बुद्धिमोहेन माऽवमंस्थाः परन्तप ।
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ॥ १३
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ १३॥

मा [2]नीनशः प्रजास्सर्वाः पुत्रान् भ्रातृंस्तथैव च ।
वासुदेवार्जुनौ यत्र विद्ध्यजेयं बलं हि तत् ॥ १४॥

एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः ।
यदि नादास्यसे तात पश्चात् तप्स्यसि भारत ॥ १५॥

यथोक्तं जामदग्न्येन भूयानेष ततोऽर्जुनः ।
कृष्णो हि देवकीपुत्रो देवैरपि सुदुस्सहः ॥ १६॥
किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ ॥ १७

एतत् ते सर्वमाख्यातं यथेच्छसि तथा कुरु ।
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम ॥ १८

---

1. अ-क-ख—इदमर्धं नास्ति
2. ग—कुरूञ्जहि नस्सर्वान्। ब-ङ—कुरूञ्जहि तान् सर्वान्।
म—कुरूञ्जनयन् सर्वान्। मा—कुरूञ्जीवनस्सर्वान् पुत्रान्।

वैशम्पायनः—

तस्मिन् वाक्यान्तरे वाक्यं क्षत्ताऽपि विदुरोऽब्रवीन् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ १९

विदुरः—

दुर्योधन न शोचामि त्वामहं भरतर्षभ ॥
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते ॥ २०
यावनाथौ भविष्येते त्वया नाथेन दुर्हृदा ।
हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ ॥ २१
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ।
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् ॥ २२

वैशम्पायनः—

अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
[1]आसीनं भ्रातृभिस्सार्धं राजभिः परिवारितम् ॥ २३

धृतराष्ट्रः—

दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययम् ॥ २४
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ।
इष्टान् सर्वानभिप्रायान् प्राप्स्यामस्सर्वराजसु ॥ २५
सुसंहितः केशवेन तात गच्छ युधिष्ठिरम् ॥

---

1. अ-क—इदमर्धं नास्ति

चर स्वस्त्ययनं कृत्स्नं भरतानामनामयम् ॥ २६

वासुदेवेन तीर्थेन तात गच्छस्व सङ्गतिम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ २७

शमं चेद्याचमानं त्वां प्रत्याख्यास्यसि केशवम् ।
त्वदर्थमभिजल्पन्तं न तस्यास्ति पराभवः ॥ २८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

॥ ५४ ॥ भगवद्यानपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[ अस्मिन्नध्याये २८ श्लोकः ]

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

---

पुनर्भीष्मद्रोणाभ्यां दुर्योधनं प्रति परेषां युद्धसन्नाहात् पूर्वमेव तैस्सह शमविधानम् ॥ १ ॥

---

वैशम्पायनः—

धृतराष्ट्रवचश्श्रुत्वा भीष्मद्रोणौ समेत्य तौ ।
दुर्योधनमिदं वाक्यम् ऊचतुश्शासनातिगम् ॥ १

भीष्मद्रोणौ—

यावत् कृष्णावसन्नद्धौ यावत् तिष्ठति गाण्डिवम् ।
यावद्धौम्यो न सेनाग्नौ जुहोतीह द्विषद्बलम् ॥ २

यावन्न प्रेक्षते क्रुद्धस् सेनां तव युधिष्ठिरः ।

ह्रीनिषेवो महेष्वासस् तावच्छाम्यतु वैशसम् ॥ ३

यावन्न दृश्यते पार्थस् स्वेष्वनीकेष्ववस्थितः ।
भीमसेनो महेष्वासस् तावच्छाम्यतु वैशसम् ॥ ४

[1]यावन्न चरते मार्गान् पृतनामभिहर्षयन् ।
भीमसेनो गदापाणिस् तावन् संशाम्य पाण्डवैः ॥ ५

यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ।
गदया वीरघातिन्या फलानीव वनस्पतेः ॥ ६

कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥ ६॥

[2]नकुलस्सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ॥ ७॥

यावन्न प्रविशन्त्येते नक्रा इव महार्णवम् ।
कृतास्त्राः क्षिप्रमस्यन्तस् तावच्छाम्यतु वैशसम् ॥ ८॥

यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ।
गार्ध्रपत्राः पतन्त्युग्रास् तावच्छाम्यतु वैशसम् ॥ ९॥

चन्दनागरुदिग्धेषु हारनिष्कधरेषु च ।
नोरस्सु यावद्योधानां महेष्वासैर्महेषवः ॥ १०॥

कृतास्त्रैः क्षिप्रमस्यद्भिर् दूरपातिभिरायसाः ।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ११॥

---

1. ङ—अर्धपञ्चकं नास्ति  2. अ-क-च—श्लोकद्वयं नास्ति

अभिवादयमानं त्वां शिरसा राजकुञ्जरः ।
पाणिभ्यां प्रतिगृह्णातु धर्मराजो महामतिः ॥ १२॥

ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणम् ।
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ ॥ १३॥

रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ १४॥

सालस्कन्धो महाबाहुस् त्वां सुजातो वृकोदरः ।
साम्नाऽभिवदतां चापि शान्तये भरतर्षभ ॥ १५॥

अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः ।
मूर्ध्नि तान् समुपाघ्राय प्रेम्णाऽभिवद पार्थिव ॥ १६॥

दृष्ट्वा त्वां पाण्डवैर्वीरैर् भ्रातृभिस्सह सङ्गतम् ।
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः ॥ १७॥

घुष्यतां राजधानीषु सर्वसम्पन्महीक्षिताम् ।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव ॥ १८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

॥ ५४ ॥ भगवद्यानपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ अस्मिन्नध्याये १८॥ श्लोकाः ]

---

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥

दुर्योधनेन श्रीकृष्णं प्रति स्वस्मिन्नपराधलेशोऽपि नास्तीति कथनम् ॥ १ ॥ भीष्मादिरक्षितस्य स्वस्याजय्यत्वकथनपूर्वकं युद्धे निधनसम्भवेऽपि पाण्डवेभ्यः सूच्यग्रपरिमितभूमेरप्यप्रदानवचनम् ॥ २ ॥

वैशम्पायनः—

श्रुत्वा दुर्योधनो वाक्यं हेतुमत् कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ १

दुर्योधनः—

प्रसमीक्ष्य भवानेतद् वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ २

भक्तिवादेन पार्थानाम् अकस्मान्मधुसूदन ।
भवान् गर्हयते नित्यं किं समीक्ष्य बलाबलम् ॥ ३

भवान् क्षत्ता च राजा च आचार्यो वा पितामहः ।
मामेव परिगर्हन्ते नान्यं कञ्चन पार्थिवम् ॥ ४

न चाहं लक्षये कञ्चिद् व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां [1]विद्विषन्ति सराजकाः ॥ ५

न चाहं कञ्चिदत्यर्थम् अपराधमरिन्दम ।
विचिन्तयन् प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ६

1. ख-ग—विगर्हन्ते । घ-ङ-म-मा—विभजन्ति ।

प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन ।
जिताऽशकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ७

यत् पुनर्द्रविणं किञ्चित् तत्राजीयन्त पाण्डवाः ।
तेभ्य एवाभ्यनुज्ञातं तत् तदा मधुसूदन ॥ ८

अपराधो न चास्माकं यत् ते ह्यक्षपराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥ ९

केन वाऽप्यवमानेन विरुद्ध्यन्त्यरिभिस्सह ।
अशक्ताः पाण्डवाः कृष्ण प्रभ्रष्टाः प्रत्यमित्रवत् ॥ १०

किमस्माभिः कृतं तेषां कस्मिन् वा पुनरागसि ।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवास्सृञ्जयैस्सह ॥ ११

न चापि वयमुग्रेण कर्मणा वचनेन वा ।
वित्रस्ताः प्रणमामेह भयादपि शतक्रतोः ॥ १२

न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम् ।
उत्सहेत युधा जेतुं यो नश्शत्रुनिबर्हण ॥ १३

न हि भीष्मकृपद्रोणास् सकर्णा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ १४

स्वधर्ममनुपश्यन्तो यदि माधव संयुगे ।
अस्त्रेण निधनं काले प्राप्स्यामस्स्वर्गमेव तत् ॥ १५

मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन ।

यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम् ॥ १६

ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे ।
अप्रणम्यैव शत्रूणां नातस्तप्स्यन्ति माधव ॥ १७

कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन् ।
[1]भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्य चित् ॥ १८

[2]उद्यच्छेदेव न नमेद् उद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ १९

इति मातङ्गवचनं परीप्सन्ति हितेप्सवः ।
धर्माय चैव प्रणमेद् ब्राह्मणेभ्यश्च मद्विधः ॥ २०

अचिन्तयन् कञ्चिदन्यं यावज्जीवं तथा चरेत् ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ २१

राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराऽभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ २२

यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।
न्यस्तशस्त्रा वयं ते वाऽप्युपजीवाम भारत ॥ २३
अप्रदेयं पुरा दत्तं राज्यं परवतो मम ॥ २३॥

अज्ञानाद्वा भयाद्वाऽपि मयि बाले जनार्दन ।

---

1. ग-ब-ङ-म-मा—भयाद्वा वृत्तिहेतोर्वा ।
2. ब—नास्तीदमर्धम् ।　　ङ—नास्त्ययं श्लोकः ।

न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ॥ २४॥

ध्रियमाणे महाबाहो मयि सम्प्रति केशव ॥ २५

यावद्धि तीक्ष्णया सूच्या [1]विद्ध्येदग्रेण माधव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[अस्मिन्नध्याये २६ श्लोकाः]

## ॥ पञ्चदशाधिकशततमोऽध्यायः ॥

श्रीकृष्णेन दुर्योधनं प्रति सगर्हणं पाण्डवेषु तत्कृतापनयानुस्मारणम् ॥ १ ॥ दुर्योधनस्य पाण्डवैरसन्धाने कौरवैर्बन्धनपूर्वकं पाण्डवेभ्यः स्वसमर्पणप्रतिपादकदुश्शासनवचनश्रवणजकोपात् सभातो निर्गमनम् ॥ २ ॥ कृष्णेन धृतराष्ट्रं प्रति कुलस्यार्थे दुर्योधनपरित्यागविधानम् ॥ ३ ॥ तथा सदृष्टान्तप्रदर्शनं दुर्योधनस्य बन्धनपूर्वकं पाण्डवेभ्यः समर्पणविधानम् ॥ ४ ॥

वैशम्पायनः—

ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यम् अब्रवीत् कुरुसंसदि ॥ १

श्रीभगवान्—

लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।

1. ङ—भिन्द्यादग्रैर्जनार्दन । म-मा—भिद्येदग्रे जनार्दन ।

स्थिरो भव सहामात्यो विमर्दो भविता महान् ॥ २
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत् सर्वं निबोध त्वं नराधिप ॥ ३
श्रिया सन्तप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ४
कथं च ज्ञातयस्तात श्रेयांसस्साधुसम्मताः ।
तथा न्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ॥ ५
अक्षद्यूतं महाप्राज्ञ सतां मतिविनाशनम् ।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च ॥ ६
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।
असमीक्ष्य सदाचारान् सार्धं पापानुबन्धनैः ॥ ७
कश्चान्यो ज्ञातिदारान् वै विप्रकर्तुं तथाऽर्हति ।
आनीय च सभां वक्तुं यथोक्ता द्रौपदी त्वया ॥ ८
कुलीना शीलसम्पन्ना प्राणेभ्योऽपि गरीयसी ।
महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया ॥ ९
जानन्ति कुरवस्सर्वे यथोक्ताः कुरुसंसदि ।
दुश्शासनेन कौन्तेयाः प्रव्रजन्तः परन्तपाः ॥ १०
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु ।
स्वेषु बन्धुषु कस्साधुश् चरेदेवमसाम्प्रतम् ॥ ११

नृशंसानामनार्याणां तथा परुषभाषणम् ।
कर्णदुश्शासनाभ्यां च त्वया च बहुशः कृतम् ॥ १२

सह माता प्रदग्धुं तान् बालकान् वारणावते ।
आस्थितः परमो यत्नो न समृद्धं च तत् तव ॥ १३

ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥ १४

विषेण बन्धैस्सर्पैश्च घातिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत् तव ॥ १५

[1]एवंवृत्तः कथं राज्ये स्थातुमर्हसि पापकृत् ।
स राज्याच्च सुखाच्चैव हास्यसे कुलपांसन ॥ १६

एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तस्सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ १७

[2]यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्ससि ।
तच्च पाप प्रजातोऽसि भ्रष्टैश्वर्यो निपातितः ॥ १८

कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यस्सन्नद्य विप्रतिपद्यसे ॥ १९

मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव ॥ २०

---

1. अ-क-ख-म-मा—श्लोकोऽयं नास्ति 2. म-मा—श्लोकोऽयं न दृश्यते ।

शमे हि सुमहाँल्लाभस् तव पार्थस्य चोभयोः ।
[1]न च रोचयसे राजन् किमन्यद्बुद्धिलाघवात् ॥　　२१

न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ॥　　२२

वैशम्पायनः—

एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुश्शासन इदं वाक्यम् अब्रवीत् कुरुसंसदि ॥　　२३

दुश्शासनः—

न चेत् सन्धास्यसे राजन् स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥　　२४

वैकर्तनं त्वां च मां च त्रीनेतान् मनुजर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥　　२५

वैशम्पायनः—

भ्रातुरेतद्वचश्श्रुत्वा धार्तराष्ट्रस्सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥　　२६

विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥　　२७

सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥　　२८

---

1. ब-ङ-म-मा—तव ते न रोचते ।

ते प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुस्सहामात्या राजानश्चापि सर्वशः ॥ २९

सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिस्सह ।
दुर्योधनमभिप्रेक्ष्य भीष्मश्शान्तनवोऽब्रवीत् ॥ ३०

भीष्मः—

धर्मार्थावभिसन्त्यज्य संरम्भं [1]योऽनुमन्यते ।
[2]हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव ॥ ३१

दुरात्मा राजपुत्रोऽयं धार्तराष्ट्रोऽनुपायवित् ।
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ॥ ३२

कालपक्वमिदं मन्ये सर्वक्षत्रं जनार्दन ।
सर्वे ह्यनुसृता मोहात् पार्थिवास्सह मन्त्रिभिः ॥ ३३

वैशम्पायनः—

भीष्मस्याथ वचश्श्रुत्वा दाशार्हः पुष्करेक्षणः ।
भीष्मद्रोणमुखान् सर्वान् अभ्यभाषत वीर्यवान् ॥ ३४

श्रीभगवान्—

सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।
[3]प्रसह्य मन्दमैश्वर्ये न नियच्छन्ति यन्नृपम् ॥ ३५

---

1. ग—ऽनुवर्तते । घ-ङ—ऽनुपद्यते ।
2. ग-घ-ङ—शोचन्ति ।
3. मा—विसृज्य मन्दमैश्वर्ये । ग-घ—विसृज्य चेदमैश्वर्ये ।
ङ-म—प्रसृज्य मदमैश्वर्ये ।

तत्र कार्यमहं मन्ये कालप्राप्तमरिन्दमाः ।
क्रियमाणे भवेच्छ्रेयस् तत् सर्वं शृणुतानघाः ॥ ३६
प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः ।
भवतामानुकूल्येन यदि रोचेत भारताः ॥ ३७
भोजराजस्य वृद्धस्य दुराचारो ह्यनात्मवान् ।
जीवतः पितुरैश्वर्यं हृत्वा मृत्युवशं गतः ॥ ३८
उग्रसेनसुतः कंसः परित्यक्तस्स बान्धवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे ॥ ३९
आहुकः पुनरस्माभिर् ज्ञातिभिश्चाभिसत्कृतः ।
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः ॥ ४०
कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ।
सम्भूय सुखमेधन्ते भारतान्धकवृष्णयः ॥ ४१
अपि चाप्यवदद्राजन् परमेष्ठी प्रजापतिः ।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ४२
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत ।
अब्रवीत्तु तदा देवो भगवाँल्लोकभावनः ॥ ४३

प्रजापतिः—

पराभविष्यन्त्यसुरा दैतेया दानवैस्सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः ॥ ४४
देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः ।

[1]अस्मिन् युद्धे सुसंयत्ता भविष्यन्ति परस्परम् ॥ ४५

[2]वर्तमानं जगत् सर्वं मुहूर्तान्न भविष्यति ।
अस्य नाशेन महतो लोकस्य च परन्तप ॥ ४६

श्रीभगवान्—

इति मत्वाऽब्रवीद्धर्मं परमेष्ठी प्रजापतिः ॥ ४६॥

प्रजापतिः—

वरुणाय प्रयच्छैतान् बद्ध्वा दैतेयदानवान् ॥ ४७

श्रीभगवान्—

[3]एवमुक्तस्ततो धर्मो नियोगात् परमेष्ठिनः ।
वरुणाय ददौ सर्वान् बद्ध्वा दैतेयदानवान् ॥ ४८

तान् बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणस्सागरे यत्तो नित्यं रक्षति दानवान् ॥ ४९

तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।
बद्ध्वा दुश्शासनं चापि पाण्डवेभ्यः प्रयच्छत ॥ ५०

त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ५१

राजन् दुर्योधनं बद्ध्वा ततस्संशाम्य पाण्डवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[अस्मिन्नध्याये ५२ श्लोकाः]

---

1. अ-क—सुसङ्क्रुद्धा हनिष्यन्ति ।
2. अ-क-ख-म-मा-अर्धद्वयं नास्ति 3. अ-क-म-श्लोकोऽयं न दृश्यते ।

## ॥ षोडशाधिकशततमोऽध्यायः ॥

विदुरेण धृतराष्ट्राज्ञया गान्धार्याः सभां प्रत्यानयनम् ॥ १ ॥ गान्धार्या दुर्योधनं पुनः सभामानाय्य तं प्रति नीतिकथनपूर्वकं पाण्डवैः सह शर्मविधानम् ॥ २ ॥

**वैशम्पायनः—**

कृष्णस्य तु वचश्श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ १

**धृतराष्ट्रः—**

गच्छ तात महाप्राज्ञ गान्धारीं दीर्घदर्शिनीम् ।
आनयेह तया सार्धम् अनुनेष्यामि दुर्मतिम् ॥ २

यदि सा न दुरात्मानं शमयेद्दुष्टचेतसम् ।
अपि कृष्णस्य सुहृदस् तिष्ठेम वचने वयम् ॥ ३

[1]अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत् ।
दुर्बुद्धेर्दुस्सहायस्य समक्षं ब्रुवती वचः ॥ ४

अपि नो व्यसनं घोरं दुर्योधनकृतं महत् ।
शमयेच्चिररात्राय योगक्षेमवदव्ययम् ॥ ५

**वैशम्पायनः—**

राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम् ।

1. ख-ग-म—अति ।

आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ६

धृतराष्ट्रः—

एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः ।
ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ॥ ७

अशिष्टवदमर्यादः पापैस्सह दुरात्मभिः ।
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ॥ ८

वैशम्पायनः—

सा भर्तृवचनं श्रुत्वा राज[1]पुत्री यशस्विनी ।
अन्विच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत् ॥ ९

गान्धारी—

[2]आनयैनं सुतं क्षिप्रं राज्यकामुकमातुरम् ॥ ९॥

न हि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना ।
[3]आप्तुमाप्तं तथाऽपीदम् अविनीतेन सर्वथा ॥ १०॥

त्वमेवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः ।
यो जानन् पापतामस्य तत्प्रज्ञामनुवर्तसे ॥ ११॥

स एष काममन्युभ्यां प्रलब्धो मोहमास्थितः ।
अशक्योऽद्य त्वया राजन् विनिवर्तयितुं बलात् ॥ १२॥

---

1. म-मा—पत्नी ।
2. अ-क—आनायय । ङ—आनायस्वाचिरं पुत्रं ।
म—आनये न तु तं पापं । मा—आनयेह सुतं पापं ।
3. ङ-म—इदमर्धं नोपलभ्यते ।

राष्ट्रप्रदाने मूढस्य बालिशस्य दुरात्मनः ।
दुर्योधनस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥ १३॥

कथं हि स्वजने भेदम् उपेक्षेत [1]महीपतिः ।
भिन्नं हि स्वजनेन त्वां [2]प्रहसिष्यन्ति शत्रवः ॥ १४॥

यो हि शक्यो महाराज साम्ना भेदेन वा पुनः ।
निस्तर्तुमापदस्स्वेषु दण्डं कस्तत्र पातयेत् ॥ १५॥

वैशम्पायनः—

शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम् ।
मातुश्च वचनात् क्षत्ता सभां प्रावेशयत् पुनः ॥ १६॥

स मातुर्वचनाकाङ्क्षी प्रविवेश पुनस्सभाम् ।
अतिताम्रेक्षणः क्रोधान्निश्वसन्निव पन्नगः ॥ १७॥

तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमा[3]स्थितम् ।
विगर्हमाणा गान्धारी [4]शमार्थं वाक्यमब्रवीत् ॥ १८॥

गान्धारी—

दुर्योधन निबोधेदं वचनं मम पुत्रक ।
हितं ते सानुबन्धस्य तथाऽऽयत्यां सुखोदयम् ॥ १९॥

[5]दुर्योधन यदाह त्वां पिता भरतसत्तमः ।

---

1. ङ-म-मा—महामतिः । 2. ङ-म—प्रसहिष्यन्ति ।
3. ङ—श्रितम् ।
4. ग-ब-ङ-म—समर्थं । मा—समक्षं ।
5. ङ-म—श्लोकोऽयं न दृश्यते ।

भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ॥ २०॥

भीष्मस्य तु पितुश्चैव मम चापचितिः कृता ।
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया ॥ २१॥

न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते ।
अवाप्तुं रक्षितुं वाऽपि भोक्तुं भरतसत्तम ॥ २२॥

न ह्यवश्येन्द्रियो राज्यम् अश्नीयाद्दीर्घमन्तरम् ।
विजितात्मा तु मेधावी [1]स राज्यमभिपालयेत् ॥ २३॥

कामक्रोधौ हि पुरुषम् अर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ २४॥

लोकेश्वराभिभूतं हि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥ २५॥

इन्द्रियाणि महत् प्रेप्सुर् नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर् वर्धतेऽग्निरिवेन्धनैः ॥ २६॥

अविधेयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथिषु सारथिम् ॥ २७॥

अविजित्य य आत्मानम् अमात्यान् विजिगीषते ।
अजितात्माऽजितामात्यस् सोऽवशः परिहीयते ॥ २८॥

---

1. ङ-म—स्वाराज्य। मा—स्वराज्य।

आत्मानमेव प्रथमं [1]द्वेष्यरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ २९॥

वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं वीरम् अत्यर्थं श्रीर्निषेवते ॥ ३०॥

[2]क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ३१॥

याभ्यां हि देवास्स्वर्यातुस् स्वर्गस्यापिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ३२॥

कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ३३॥

सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥ ३४॥

कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ३५॥

एकीभूतैर्महाप्राज्ञैश् शूरैररिनिवर्हणैः ।
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितस्सुखी ॥ ३६॥

यथा भीष्मश्शान्तनवो द्रोणश्चापि महायशाः ।
आहतुस्तात तत् सत्यम् अजेयौ कृष्णपाण्डवौ ॥ ३७॥

---

1. ख-ध-ङ-मा—देश । 　म—देव ।
2. अ-क—इदमर्धं नोपलभ्यते ।

प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम् ।
प्रसन्नो हि सुखाय स्याद् उभयोरेव केशवः ॥ ३८॥

सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरश्शत्रुनन्दनः ॥ ३९॥

न युद्धे तात कल्याणं न धर्मार्थौ कुतस्सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आदधाः ॥ ४०॥

भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च ।
दत्तोंऽशः पाण्डुपुत्राणां भेदाद्भीतैररिन्दम ॥ ४१॥

तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि ।
यद्भुङ्क्षे पृथिवीं कृत्स्नां शूरैर्निहतकण्टकाम् ॥ ४२॥

प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ।
यदीच्छसि सहामात्यो भोक्तु[1]मर्धमहीमिमाम् ॥ ४३॥

अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवनम् ।
सुहृदां वचने तिष्ठन् यशः प्राप्स्यसि भारत ॥ ४४॥

श्रीमद्भिरात्मवद्भिस्तैर् बुद्धिमद्भिर्जितेन्द्रियैः ।
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतस्सुखात् ॥ ४५॥

निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् ।

---

1. ख-ब-ङ-म-मा—मित्थं महीमिमाम् ।

स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय पुरुषर्षभ ॥ ४६॥

अलं महान् निकारोऽयं त्रयोदशसमाः कृताः ।
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ४७॥

न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति ।
सूतपुत्रो दृढक्रोधो भ्राता दुश्शासनश्च ते ॥ ४८॥

भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये ।
धृष्टद्युम्ने च सङ्क्रुद्धे न स्युस्सर्वाः प्रजा ध्रुवम् ॥ ४९॥

अमर्षवशमापन्नो मा [1]कुरूंस्तात जीघनः ।
[2]एषा हि पृथिवी कृत्स्ना मा गमत् त्वत्कृते वधम् ॥ ५०॥

यच्च त्वं मन्यसे मूढ भीष्मद्रोण[3]कृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५१॥

समं हि राज्यं प्रीतिश्च स्थानं च विदितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ५२॥

धृतराष्ट्रः—

राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५३॥

---

1. ख-ग-ब-ङ—कुरूंस्तात नीनशः ।
2. ख-ग-ब-ङ-म-मा—सर्वा हि पृथिवी नष्टा त्वत्पाण्डवकृते वधे ।
3. ङ-मा—कृपाः परान् ।

न लोभादर्थसम्पत्तिर् नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ५४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ ५४ ॥ भगवद्यानपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[ अस्मिन्नध्याये ५४॥ श्लोकाः ]

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥

मातृवाक्यमनादृत्य निर्गतेन दुर्योधनेन कर्णादिभिः सहालोच्य कृष्णबन्धननिर्धारणम् ॥ १ ॥ इङ्गितज्ञेन सात्यकिना कृष्णादिषु तन्निवेदनम् ॥ २ ॥ धृतराष्ट्रेण पुनर्दुर्योधनमानाय्य कृष्णस्य दुर्ग्रहत्वनिरूपणम् ॥ ३ ॥ विदुरेण सङ्गृह्य कृष्णचरित्रनिरूपणपूर्वकं दुर्योधनगर्हणम् ॥ ४ ॥

वैशम्पायनः—

तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात् सकाशमकृतात्मनाम् ॥ १

ततस्सभाया निर्गम्य मन्त्रयामास कौरवः ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ २

[1]दुर्योधनं धार्तराष्ट्रं कर्णं दुश्शासनोऽब्रवीत् ॥ २॥

दुश्शासनः—

नो चेत् सन्धास्यसे राजन् स्वेन कामेन पाण्डवैः ।

1. अ-क-म-मा—इतः अर्धाष्टकं नास्ति

बद्ध्वैव त्वां प्रदास्यन्ति पाण्डुपुत्राय भारत ॥ ३॥
वैकर्तनं त्वां च मां च त्रीनेतान् भरतर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मद्रोणौ पिता च ते ॥ ४॥

वैशम्पायनः—

दुश्शासनस्य तद्वाक्यं निशम्य भरतर्षभ ।
दुर्योधनो धार्तराष्ट्रो निश्वस्य प्रहसन्निव ॥ ५॥
एकान्तमुपसृत्येह मन्त्रं पुनरमन्त्रयत् ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ ६॥
दुर्योधनस्य कर्णस्य शकुनेस्सौबलस्य च ।
दुश्शासनचतुर्थानाम् इदमासीद्विचेष्टितम् ॥ ७॥

दुर्योधनादयः—

[1]पुराऽयमस्मान् गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ८॥
वयमेव निगृह्णीम हृषीकेशं बलादिव ।
प्रसह्य पुरुषव्याघ्रम् इन्द्रो वैरोचनिं यथा ॥ ९॥
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ १०॥
अयं ह्येषां महाबाहुस् सर्वेषां शर्म वर्म च ॥ ११

1. ग-ङ—पुराऽयं मां निगृह्णाति । ख—पुरा यावन्निगृह्णाति ।

अस्मिन् गृहीते [1]वरदे ऋषभे सर्वसात्वताम् ।
निरुद्यमा भविष्यन्ति पाण्डवास्सोमकैस्सह ॥ १२

तस्माद्वयमिहैवैकं केशवं क्षिप्रकारिणम् ।
[2]क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ॥ १३

वैशम्पायनः—
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इङ्गितज्ञः कविः क्षिप्रम् अन्वबुद्ध्यत सात्यकिः ॥ १४

तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत् कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ १५

व्यूढानीकस्सभाद्वारम् उपतिष्ठस्व दंशितः ।
यावदाख्याम्यहं चैतत् कृष्णायाक्लिष्ट[3]कारिणे ॥ १६

स प्रविश्य सभां वीरस् सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ १७

धृतराष्ट्रं ततश्चैव विदुरं चात्मभाविनम् ।
तेषामेतमभिप्रायम् आचचक्षे स्मयन्निव ॥ १८

सात्यकिः—
धर्मादर्थाच्च कामाच्च कर्म साधुविगर्हितम् ।

---

1. ग—वार्ष्णेये ।
2. ख—कोशे इत आरभ्य ७०५ तमपुटस्थ ।"इत्युक्ते धृतराष्ट्रेण" इति ५५॥ तमश्लोकपर्यन्ताः ४२ श्लोकाः नोपलभ्यन्ते
3. ग-ङ-म—कर्मणे ।

मन्दाः कर्तुमिहेच्छन्ति न [1]चावाप्यं कथञ्चन ॥ १९

पुरा विकुर्वते मूढाः पापात्मानस्समागताः ।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः ॥ २०

इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ।
[2]पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ २१

वैशम्पायनः—

सात्यकेस्तद्वचश्श्रुत्वा विदुरो दीर्घदर्शिवान् ।
धृतराष्ट्रं महाबाहुम् अब्रवीत् कुरुसंसदि ॥ २२

विदुरः—

राजन् परीतकालास्ते पुत्रास्सर्वे परन्तप ।
अशक्यमयशस्यं च कर्तुं कर्म समुद्यताः ॥ २३

इमं हि पुण्डरीकाक्षम् अभिभूय प्रसह्य च ।
निगृहीतुं किलेच्छन्ति सहिता वासवानुजम् ॥ २४

इमं पुरुषशार्दूलम् अप्रधृष्यं दुरासदम् ।
आसाद्य न भविष्यन्ति पतङ्गा इव पावकम् ॥ २५

[3]एते न शक्तास्सर्वे हि साहसान् कर्तुमुद्यताः ॥ २५॥

अयमिच्छन् हि तान् सर्वान् युध्यमानान् जनार्दनः ।

---

1. ङ—च वाच्यं ।　　म—चावध्यं कदाचन ।
2. ङ—वने चाग्निं ।
3. अ-क-ख-म-मा—इदमर्धं नास्ति

सिंहो [1]नागानिव क्रुद्धो गमयेद्यमसादनम् ॥ २६॥

न त्वयं निन्दितं कर्म कुर्यात्[2]पापं कथञ्चन ।
न च धर्मादपक्रामेद् अच्युतः पुरुषोत्तमः ॥ २७॥

[3]यथा वाराणसी दग्धा साश्वा सरथकुञ्जरा ।
सानुबन्धस्तु कृष्णेन काशीनामृषभो हतः ॥ २८॥

तथा नागपुरं दग्ध्वा शङ्खचक्रगदाधरः ।
स्वयं कालेश्वरो भूत्वा नाशयिष्यति कौरवान् ॥ २९॥

पारिजातहरं ह्येनम् एकं यदुसुखावहम् ।
नाभ्यवर्तत संरब्धो वृत्रहा वसुभिस्सह ॥ ३०॥

प्राप्य निर्मोचने पाशान् षट्सहस्रांस्तरस्विनः ।
हतास्ते वासुदेवेन ह्युपसङ्क्रम्य मौरवान् ॥ ३१॥

द्वारमासाद्य सौभस्य विधूय गदया गिरिम् ।
द्युमत्सेनस्सहामात्यः कृष्णेन विनिपातितः ॥ ३२॥

शेषवत्त्वात् कुरूणां तु धर्मापेक्षी तथाऽच्युतः ।
क्षमते पुण्डरीकाक्षश् शक्तस्सन् पापकर्मणाम् ॥ ३३॥

एते हि यदि गोविन्दम् इच्छन्ति सह राजभिः ।
अद्यैवातिथयस्सर्वे भविष्यन्ति यमस्य ते ॥ ३४॥

---

1. ङ-म-मा—मृगानिव ।
2. ग-घ-ङ-म—कृष्णः । म-मा—कृष्णः कदाचन ।
3. अ-क-ख-म-मा—कोशेषु इतः श्लोकाष्टकं नोपलभ्यते ।

यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
तथा चक्रभृतस्सर्वे वशमेष्यन्ति कौरवाः ॥ ३५॥

वैशम्पायनः—

विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः ॥ ३६॥

श्रीभगवान्—

राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनान् अनुजानीहि पार्थिव ॥ ३७॥

एतान् हि सर्वान् संरब्धान् नियन्तुमहमुत्सहे ।
न त्वहं निन्दितं कर्म कुर्यां पापं कथञ्चन ॥ ३८॥

पाण्डवार्थे हि लुभ्यन्तस् स्वार्थाद् भ्रश्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ॥ ३९॥

अद्यैव ह्यहमेनांश्च ये चैनाननु भारत ।
निगृह्य [1]राजन् पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ॥ ४०॥

[2]एष मे निश्चयो राजन् यद्येषोऽस्य विनिश्चयः ।
नर्दन्तु सहिताश्शङ्खाः पणवानकनिस्वनैः ॥ ४१॥

अनायासेन पार्थानां वर्ततां च शिवं महत् ।
निगृह्य राजन् पार्थेभ्यो दद्यां चेत् सुकृतं भवेत् ॥ ४२॥

---

1. ग-घ-ङ—राज्ये राजानं स्थापयिष्यामि पाण्डवम् ।  [पाठान्तरम्]
2. अ-क-ख-म-मा—श्लोकद्वयं नास्ति

इदं तु न प्रवर्तेत निन्दितं कर्म भारत ।
सन्निधौ ते महाराज क्रोधजं पाप[1]बुद्धिजम् ॥ ४३॥
एष दुर्योधनो राजन् यथेच्छति तथाऽस्तु तत् ।
अहं तु सर्वांस्तनयान् अनुजानामि ते नृप ॥ ४४॥

वैशम्पायनः—

एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ॥ ४५

धृतराष्ट्रः—

क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ।
सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ॥ ४६
शक्नुयां यदि पन्थानम् अवतारयितुं पुनः ॥ ४६॥

वैशम्पायनः—

ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत् सभाम् ।
अकामं भ्रातृभिस्सार्धं राजभिः परिवारितम् ॥ ४७॥
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुश्शासनाभ्यां च राजभिश्चापि संवृतम् ॥ ४८॥

धृतराष्ट्रः—

नृशंस [2]हतभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैस्सहायै[3]स्सङ्गत्य निगृहीतुं किलेच्छसि ॥ ४९॥

---

1. ङ-म-मा—चेतसाम् ।
2. ग-घ-ङ—मापद् । मा—माप भूयिष्ठं । ङ-म—मापद्भूयिष्ठं ।
3. ग-म—स्सामात्यैः पापं कर्म चिकीर्षसि ।
अ-क-ख-घ—स्संहत्य निगृहीतुं किमिच्छसि ।
मा—स्सहितः पापं कर्म चिकीर्षसि ।

[1]अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवस्येत् कुलपांसनः ॥　　५०॥

त्वमिमं पुण्डरीकाक्षम् अप्रधृष्यं दुरासदम् ।
पापैस्सहायैस्संहत्य निग्रहीतुं किलेच्छसि ॥　　५१॥

यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥　　५२॥

देवैर्मनुष्यैर्गन्धर्वैर् असुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस् तं न बुध्यसि केशवम् ॥　　५३॥

दुर्ग्राह्यः पाणिना वायुर् दुस्स्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना [2]दुर्ग्राह्यः केशवो बलात् ॥　　५४॥

**वैशम्पायनः—**

इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥　　५५॥

**विदुरः—**

सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥　　५६॥

ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकत् तत्र तं त्वं प्रार्थयसे बलात् ॥　　५७॥

---

1. अ-क-ख-ब-ङ—श्लोकद्वयं न दृश्यते ।
2. ङ-म-मा—दुर्ग्रहः केशवो बली ।

निर्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ५८॥

प्राग्ज्योतिषगतं शौरिं नरकस्सह दानवैः ।
ग्रहीतुं नाशकत् तत्र तं त्वं प्रार्थयसे बलात् ॥ ५९॥

अनेन हि हता बाल्ये पूतना शिशुना तदा ।
गोवर्धनो [1]धारितश्च गवार्थे भरतर्षभ ॥ ६०॥

अरिष्टो धेनुकश्चैव चाणूरश्च महात्मना ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ६१॥

जरासन्धो दन्तवक्रश् शिशुपालश्च वीर्यवान् ।
बाणश्च निहतस्सङ्ख्ये राजानश्च निषूदिताः ॥ ६२॥

वरुणो निर्जितो राजा पावकश्चामितौजसा ।
पारिजातं च हरता जितस्साक्षाच्छचीपतिः ॥ ६३॥

एकार्णवे च स्वपता निहतौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हयः ॥ ६४॥

अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस् तत्तत् कुर्यादयत्नतः ॥ ६५॥

तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ।
आशीविषमिव क्रुद्धं तेजसां राशिमूर्जितम् ॥ ६६॥

---

1. ङ-म—धृतश्चैव । मा—धृतश्शैलो ।

प्रधर्षयन् महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥　　६७॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ५४ ॥ भगवद्यानपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३॥
[अस्मिन्नध्याये ६७॥ श्लोकाः]

---

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

---

श्रीकृष्णेन सभायां विश्वरूपप्रदर्शनम् ॥ १ ॥ कृष्णप्रसादाल्लब्धचक्षुषा धृतराष्ट्रेण कृष्णं दृष्टवता चक्षुषा इतरेषामदिदृक्षया कृष्णवरात् पुनः स्वचक्षुषोरन्तर्धानाधिगमः ॥ २ ॥ कृष्णेन तद्रूपोपसंहारपूर्वकं पूर्वरूपं स्वीकृत्य रथाधिरोहणेन कुन्तीसमीपगमनम् ॥ ३ ॥

---

**वैशम्पायनः—**

विदुरेणैवमुक्ते तु केशवः [1]परपूगहा ।
दुर्योधनं धार्तराष्ट्रम् अभ्यभाषत वीर्यवान् ॥　　१

**श्रीभगवान्—**

एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥　　२

इहैव पाण्डवास्सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥　　३

---

1. ख-ग-च-छ—परवीरहा । 　अ-क—शत्रुपूगहा ।

वैशम्पायनः—

एवमुक्त्वा जहासोच्चैः केशवः परवीरहा ॥ ३॥

तस्य संस्मयतश्शौरेर् विद्युद्रूपा महात्मनः ।
[1]युगपच्च विनिष्पेतुस् साक्षात् सर्वास्तु देवताः ॥ ४॥

अङ्गुष्ठमात्रास्त्रिदशा [2]बभूवुः पावकार्चिषः ॥ ५

तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ।
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ॥ ६

आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ।
मरुतश्च सहेन्द्रेण विश्वे देवास्तथैव च ॥ ७

बभूवुश्चैव यक्षाश्च गन्धर्वोरगराक्षसाः ॥ ७॥

प्रादुरास्तां तदा दोर्भ्यां सङ्कर्षणधनञ्जयौ ।
दक्षिणे चार्जुनो धन्वी हली रामश्च सव्यतः ॥ ८॥

भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ॥ ९

अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ।
[3]अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ॥ १०

शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ।
अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ॥ ११

---

1. अ-क—इदमर्धं नास्ति
2. ग—मामूचुः । क-ङ-मा—मुमुचुः ।
3 ख-ग-घ—अर्चींष्यभूवन् । ङ-म-मा—अर्चिष्वभूवन् ।

नानाबाहुषु [1]कृष्णस्य दीप्यमानानि सर्वशः ॥ ११॥

नेत्राभ्यां नासिकाभ्यां च श्रोत्राभ्यां च समन्ततः ।
प्रादुरासन् महारौद्रास् सधूमाः पावकार्चिषः ॥ १२॥

रोमकूपेषु च तथा सूर्यस्येव मरीचयः ॥ १३

ते दृष्ट्वा परमात्मानं केशवस्य महात्मनः ।
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ १४

ऋते द्रोणं च भीष्मं च विदुरं च महामतिम् ।
सञ्जयं [2]च महाभागं ऋषींश्चैव तपोधनान् ॥ १५

प्रादात् तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः ॥ १५॥

[3]तत्राश्चर्यमभूद्राजन् धृतराष्ट्रस्स्वचक्षुषी ।
लब्धवान् वासुदेवस्य विश्वरूपदिदृक्षया ॥ १६॥

लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः ।
विस्मिता ऋषिभिस्सार्धं तुष्टुवुर्मधुसूदनम् ॥ १७॥

[4]तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ १८॥

---

1. ग-घ-ङ-मा—दृश्यन्ते ।
2. ग-घ-ङ—धृतराष्ट्रं च ऋषींस्तांश्च समागतान् ।
　　म—च महाभागं ऋषींस्तांश्च समागतान् ।
3. ख-ग-घ-ङ—कोशेष्वेव श्लोकद्वयमिदं दृश्यते ।
4. ङ—इदमर्धं नास्ति

धृतराष्ट्रः—

त्वमेव पुण्डरीकाक्ष सर्वस्य जगतः प्रभुः ।
तस्मान्मे यादवश्रेष्ठ प्रसादं कर्तुमर्हसि ॥ १९॥

[1]देवदेव महायोगिन् वासुदेव जनार्दन ।
भगवन् मम नेत्राभ्याम् अन्तर्धानं वृणे पुनः ॥ २०॥

भवन्तं दृष्टवानस्मि नान्यं द्रष्टुमिहोत्सहे ॥ २१

वैशम्पायनः—

ततोऽब्रवीन्महाबाहुर् धृतराष्ट्रं जनार्दनः ॥ २१॥

श्रीभगवान्—

अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन ॥ २२

वैशम्पायनः—

चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ २३

ततस्स पुरुषव्याघ्रस् सञ्जहार वपुस्स्वकम् ।
[2]तां दिव्यामद्भुतां चित्राम् ऋद्धिमत्तामरिन्दमः ॥ २४

ततस्सात्यकिमादाय पाणौ विदुरमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ २५

ऋषयोऽन्तर्हिता जग्मुस् ततस्ते नारदादयः ।
तस्मिन् कोलाहले वृत्ते तदद्भुत[3]मिवाभवत् ॥ २६

---

1. ङ—कोशएकस्मिन्नेवेदमर्धं दृश्यते।
2. अ-क-मा—इदमर्धं नास्ति 3. ङ-म-मा—मभूत् तदा।

तं प्रस्थितमभिप्रेक्ष्य कौरवास्सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ २७

अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततश्शौरिस् सधूम इव पावकः ॥ २८

ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ २९

सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
सैन्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ ३०

तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां सम्मतो वीरो हार्दिक्यस्समदृश्यत ॥ ३१

उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ३२

धृतराष्ट्रः—

यावद्बलं मे पुत्रेषु पश्यस्येतज्जनार्दन ।
प्रत्यक्षं ते न ते किञ्चित् परोक्षं शत्रुसूदन ॥ ३३

कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नाभिशङ्कितुमर्हसि ॥ ३४

न मे पापोऽस्त्यभिप्रायः पाण्डवान् प्रति केशव ।
ज्ञातमेव [1]हिते वाक्यं यन्मयोक्तस्सुयोधनः ॥ ३५

---

1. ख-ग-घ—हितं कार्यं । ङ—हिते कार्यं । म-मा—हि मे कार्यं ।

जानन्ति कुरवस्सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ३६

वैशम्पायनः—

ततोऽब्रवीन्महाबाहुर् धृतराष्ट्रं जनेश्वरम् ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥ ३७

श्रीभगवान्—

प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादसकृदुत्थितः ॥ ३८

वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतस्सर्वान् गमिष्यामि युधिष्ठिरम् ॥ ३९

वैशम्पायनः—

आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभम् ।
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ४०

भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ४१

ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां [1]द्रष्टुं स्वसारं स्वपितुर्ययौ ॥ ४२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ५४ ॥ भगवद्यानपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

1. ग-घ-ङ-म-मा—प्रायात् पृथां द्रष्टुं पितृष्वसाम् ।

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

कृष्णेन कुन्तीं प्रति सप्रणामं सभावृत्तान्तकथनम् ॥ १ ॥ कुन्त्या कृष्णचोदनया तस्मिन् युधिष्ठिराय सन्देशप्रेषणम् ॥ २ ॥

वैशम्पायनः—

प्रविश्याथ गृहं तस्याश् चरणावभिवाद्य च ।
आचख्यौ तत् समासेन यद्वृत्तं कुरुसंसदि ॥ १

श्रीभगवान्—

उक्तं बहुविधं वाक्यं स्पृहणीयं सहेतुकम् ।
ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ २

कालपक्वमिदं सर्वं सुयोधनवशानुगम् ।
सर्वक्षत्रं क्षणेनैव दह्यते पार्थवह्निना ॥ ३
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान् प्रति ॥ ३॥
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ४॥

कुन्ती—

ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ५॥
श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर् धर्ममेवैकमीक्षते ॥ ६॥

अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टस्स्वयम्भुवा ॥ ७

[1]उरसः क्षत्रियास्सृष्टा बाहुवीर्योपजीविनः ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ ८

शृणु चात्रोपमामेकां या वृद्धेभ्यश्श्रुता मया ॥ ८॥

मुचुकुन्दस्य राजर्षेर् अददात् पृथिवीमिमाम् ।
पुरा वैश्रवणः प्रीतो न चासौ तद्गृहीतवान् ॥ ९॥

बाहुवीर्यार्जितं राज्यम् अश्नीयामिति कामये ।
ततो वैश्रवणः प्रीतो विस्मितस्समपद्यत ॥ १०॥

मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धराम् ।
बाहुवीर्यार्जितां सम्यक् क्षत्रधर्ममनुव्रतः ॥ ११॥

यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा [2]विन्देत माधव ॥ १२॥

राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ १३॥

दण्डनीतिस्स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
[3]प्रयुक्ता स्वामिना सम्यग् धर्मेभ्यश्च नियच्छति ॥ १४॥

---

1. ख-ग-घ-ङ—दुष्कराः क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः ।
   म-मा—दुष्करः क्षत्रियस्सृष्टो बाहुवीर्योपजीविता ।
2. म-मा—माधव विन्दति
3. ख-ग-घ-ङ—अयुक्तं स्वामिनं सम्यगधर्मेभ्यो ।
   म-मा—प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो ।

दण्डनीत्यां यदा राजा सम्यक् कात्स्न्येंन वर्तते ।
तदा कृतयुगं नाम कालश्श्रेष्ठः प्रवर्तते ॥ १५॥

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
[1]इति ते संशयो मा भूद् राजा कालस्य कारणम् ॥ १६॥

राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ १७॥

कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
[2]त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ १८॥

[3]प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
[4]कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ १९॥

ततो वसति दुष्कर्मा नरके शाश्वतीस्समाः ।
राजदोषेण हि जगत् स्पृश्यते जगतस्स च ॥ २०॥

राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ २१॥

न हि वैक्लब्यसंस्पृष्ट आनृशंस्ये व्यवस्थितः ।
प्रजापालनसम्भूतं [5]फलं किञ्चन लभ्यते ॥ २२॥

---

1. अ-क—इदमर्धं न दृश्यते   2. अ-क-ग—इदमर्धं नास्ति
3. अ-क—इदमर्धं नास्ति   4. अ-क-म-मा—इदमर्धं नास्ति
5. ख-ग-घ-ङ—किञ्चित् पापफलं नृप । म—किञ्चित् प्राह फलं नृप ।
मा—किञ्चित् प्राप फलं नृप ।

न ह्येतामाशिषं पाण्डुर् न चाहं न पितामहः ।
प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया ॥ २३॥

यज्ञो दानं तपश्शौर्यं प्रज्ञा सन्तानमेव च ।
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया ॥ २४॥

नित्यं स्वाहा स्वधा नित्यं दद्युर्मानुषदेवताः ।
दीर्घमायुर्धनं पुत्रान् सम्यगाराधिताश्शुभाः ॥ २५॥

पुत्रेष्वाशंसते नित्यं पितरो दैवतानि च ।
दानमध्ययनं यज्ञः प्रजानां परिपालनम् ॥ २६॥

एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः ।
[1]ते न वैद्याः कुले जाता अवृत्त्या तात पीडिताः ॥ २७॥

यत्र दानपतिं शूरं क्षुधिताः पृथिवीचराः ।
प्राप्य तुष्टाः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः ॥ २८॥

[2]दानेनान्यं बलेनान्यं तथा सूनृतयाऽपरम् ।
सर्वतः प्रतिगृह्णीयाद् राज्यं प्राप्येह धार्मिकः ॥ २९॥

ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत् ।
वैश्यो धनार्जनं कुर्याच्च् छूद्रः परिचरेच्च तान् ॥ ३०॥

भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।

---

1. ग-च—येन विद्याः । ख-म-मा—ते स्थ विद्याकुले ।
ङ—ये सविद्याः ।
2. च—इतः श्लोकद्वयं नास्ति

क्षत्रियोऽसि क्षतात् त्राता बाहुवीर्योपजीविता ॥ ३१॥

पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।

साम्ना भेदेन दानेन दण्डेनाथ नयेन वा ॥ ३२॥

इतो दुःखतरं किं नु यदहं हीनबान्धवा ।

परापिण्डमुदीक्षामि त्वां सूत्वा मित्रनन्दनम् ॥ ३३॥

युध्यस्व राजधर्मेण मा नि[1]मज्जेः पितामहान् ।

मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ॥ ३४॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९॥

॥ ५४ ॥ भगवद्यानपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

[ अस्मिन्नध्याये ३४॥ श्लोकाः ॥

---

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

कुन्त्या युधिष्ठिरबोधनाय कृष्णं प्रति विदुलोपाख्यानकथनम् ॥ १ ॥

---

कुन्ती—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।

विदुलायाश्च संवादं पुत्रस्य च परन्तप ॥ १

ततश्श्रेयश्च भूयश्च यथावद्वक्तुमर्हति ॥ १॥

---

1. म-मा—मज्जीः ।

यशस्विनी मन्युमती कुलजाता [1]विभाविनी ।
क्षत्रधर्मरता नित्यं विदुला दीर्घदर्शिनी ॥ २॥
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३
विदुला नाम सा साध्वी जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ४
[2]अनन्दनमधर्मज्ञं द्विषतां हर्षवर्धनम् ॥ ४॥

विदुला—

कुनन्दन क्व वा जातो द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ ५॥
निर्मन्यु [3]श्चाप्यसङ्ख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६॥
माऽऽत्मानमवमन्यस्व मैवमल्पेन बीभरः ।
[4]मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ७॥
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान् नन्दयन् सर्वान् [5]मित्राणां चापि शोकदः ॥ ८॥
सुपूरा वै कुनदिका सुपूरो मूषकाञ्जलिः ।

---

1. ख-ग-घ-म—विभावरी ।
2. ङ-म-मा—कोऽशेष्वेवेदमर्धं वर्तते
3. ख-ग-घ-ङ-म-मा—रुपशामीयः पुरुषः क्लीबशासनः ।
4. ग—मनः कृत्वा तु कल्याणि मा भैस्त्वं प्रतिसंयुगम् ।
ङ—मतिं कृत्वा सुकल्याणीं मा भैस्त्वं प्रति संस्तरः ।
5. म-मा—निर्मदो बन्धुशोकदः ।

सुसन्तोषः कापुरुषस् स्वल्पकेनैव तुष्यति ॥ ९॥
अप्यहेरारुजन् दंष्ट्रां मा चैव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमे ॥ १०॥
अप्यरेश्श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमम् ।
विनदन् वाऽथवा तूष्णीं व्योम्नि वा परिशङ्कितः ॥ ११॥
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष [1]मा स्वाप्सीश्शत्रुनिर्जितः ॥ १२॥
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं [2]माऽधो भूस्तिष्ठ चोर्जितः ॥ १३॥
अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल ।
मा तुषाग्निरिवानर्चिर् धूमायेत नरश्चिरम् ॥ १४॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहे जनी राज्ञः खरी मृदुः ॥ १५॥
कृत्वा मानुष्यकं कर्म धृष्टात्मा यावदुत्तरम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं [3]विगर्हयेत् ॥ १६॥
अलब्ध्वा यदि वा लब्ध्वा नानुशोचन्ति पण्डिताः ।
[4]आनन्तर्यं चारभन्ते न प्राणपरिरक्षणाम् ॥ १७॥

---

1. ख-ग-ब-ङ-म-मा—मा शेष्वैवं पराजितः ।
2. ख-ग-ब-ङ-म-मा—मा भूर्भूयिष्ठशोर्जितः ।
3. म-मा—विगर्हते ।　　4. अ-क—इदमर्धं नास्ति

उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ॥ १८

धर्मं पुत्राग्रतः कृत्वा किन्निमित्तं हि जीवसि ॥ १८॥

[1]इष्टापूर्तं च ते कृत्वा कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किन्निमित्तं हि जीवसि ॥ १९॥

शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत् कथञ्चन ॥ २०॥

उद्यम्य धुरमुत्कर्षेद् आजानेयकृतं स्मरन् ।
कुरु सत्वं च मानं च विद्धि पौरुषमात्मनः ॥ २१॥

उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव च ॥ २२

यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ २३

दाने तपसि शौर्ये वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ २४

श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ।
जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥ २५

न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ २६

यदेनमभिनन्देयुर् अमित्राः पुरुषं कृशम् ।

---

1. अ-क—अर्धद्वयं नास्ति

लोकस्य समवज्ञातं [1]निहीनासनवाससम् ॥ २७

अहो लाभकरं हीनम् अल्पजीवनमल्पकम् ।
नेदृशं बन्धुमासाद्य बान्धवस्सुखमेधते ॥ २८

अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात् प्रवासिताः ।
सर्वकामरसैर्हीना स्थानभ्रष्टा अकिञ्चनाः ॥ २९

अवर्णकारिणं सत्सु कुलवंशस्य नाशनम् ।
कलिं पुत्रप्रवादेन सञ्जय त्वामजीजनम् ॥ ३०
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ॥ ३०॥

मा स्म सीमन्तिनी काचिज् जनयेत् पुत्रमीदृशम् ।
मा धूमाय ज्वलात्यन्तम् आक्रम्य जहि शात्रवान ॥ ३१॥

ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ।
एतावानेव पुरुषो यदमर्षी यदक्षमी ॥ ३२॥

क्षमावान् निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ॥ ३३॥

अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।
एभ्यो निकृतिपाशेभ्यः प्रमुञ्चात्मानमात्मना ॥ ३४॥

आयसं हृदयं कृत्वा मृगयस्व पुरं स्वकम् ।
पुरं विषहते यस्मात् तस्मात् पुरुष उच्यते ॥ ३५॥

---

1. म-मा—विहीनाशनवाससम्।

तमाहुर्व्यर्थनामानं स्त्रीवद् य इह [1]जीवति ॥ ३६

शूरस्योर्जितसत्वस्य सिंहविक्रान्तचारिणः ।
दिष्टभावं गतस्यापि [2]विषये मोदते प्रजा ॥ ३७

य आत्मनः प्रियसुखे हित्वा मृगयतेऽ[3]सुखम् ।
[4]अमित्राणामथो हर्षम् आदधात्यचिरेण सः ॥ ३८

सञ्जयः—
किं नु ते मामपश्यन्त्याः पृथिव्याऽपि च सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३९

विदुला—
परैर्विहन्यमानस्य जीवितेनापि किं फलम् ।
निर्मन्युकानां ये लोका द्विषन्तस्तानवाप्नुयुः ॥ ४०

ये वा धृतात्मनां लोकास् सुहृदस्तान् व्रजन्तु नः ॥ ४०॥

भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामनाथानां मा वृत्तिमनु[5]वर्तिथाः ॥ ४१॥

अनु त्वां तात जीवन्तु ब्राह्मणास्सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ४२॥

यमाजीवन्ति पुरुषं सर्वभूतानि सञ्जय ।

---

1. ङ-म-मा—जीर्यते ।
2. ग-घ-ङ—यशसे । म-मा—विषसे ।
3. अ-क-ख-ग-घ-ङ—श्रियम् ।
4. अ-क-ख-ग-म-मा—अमात्याना । 5. ख-घ-ङ—वर्तथाः ।

पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ४३॥

यस्य शूरस्य विक्रान्तैर् वर्धन्ते बान्धवास्सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ४४॥

स्वबाहुबलमाश्रित्य यो हि जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ ५४ ॥ भगवद्यानपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

कुन्त्या विदुलोपाख्यानकथनम् ॥ १ ॥

विदुला—

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ १

यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥ २

अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव सम्प्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ३

सन्ति वै सिन्धुराजस्य सन्तुष्टा बहवो जनाः ।
दौर्बल्यादासते [1]मूढा व्यसनौघप्रतीक्षिणः ॥ ४

सहायोप[2]चयं दृष्ट्वा आगच्छेयुस्ततस्ततः ।
अनुतुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥ ५

तैः कृत्वा [3]सहसा यात्रां गिरिदुर्गालयैश्चर ॥ ५॥
काले व्यसनमाकाङ्क्षन् नैवायमजरामरः ॥ ६

सञ्जयो नामतश्च त्वं न च पश्याम तत् त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ७

सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत् ।
अयं प्राप्य महत् कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ८

तस्य स्मरन्ती वचनम् आशंसे विजयं तव ।
तस्मात् तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥ ९

यस्य युद्धार्थमुद्युक्ता भवत्यवहिता मतिः ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ १०

1. ङ-मा—गूढा ।
2. अ-क—चितं कृत्वा व्यवसायं ।
3. ख-क—सह सङ्घातं गिरिदुर्गालयं चर ।
म—सहसा यान्तं गिरिदुर्गालयांश्चरन् ।
मा—सह सन्धानं गिरिदुर्गालयांश्चरन् ।
4. ख-ब-ङ—भवन्त्यपहिताः परे । मा—भवन्त्युपहताः परे ।
म—भवन्त्युपगताः परे ।

समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ।
एवं विद्वान् युद्धमना भव मा प्रत्युपाहर ॥ ११

नातः पापीयसीं काञ्चिद् अवस्थां शम्बरोऽब्रवीत् ।
यस्य नैवोद्यतः प्रातर् भोजनं प्रतिदृश्यते ॥ १२

पतिपुत्रवधादेतत् परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत् प्रोक्तं पर्यायमरणं हि तत् ॥ १३

अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ १४

महार्हमाल्याभरणां [1]सुमृष्टाम्बरवासिनीम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यन्[2]सुदुःखिताम् ॥ १५

यदा मां चैव भार्यां च द्रष्टासि भृश[3]दुर्बलाम् ।
न तदा जीवितेनार्थो भविता तव सञ्जय ॥ १६

दासकर्मकरान् भृत्यान् आचार्यर्त्विक्पुरोहितान् ।
अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ १७

यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥ १८

नेति चेद् ब्राह्मणं ब्रूयां दीर्येत हृदयं मम ।

1. अ-क-म—सुमृष्टां वरवर्णिनीम् ।
2. अ-क-ख—सुहृद्गताम् ।
3. ङ-म-मा—दुर्बले ।

न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥ १९

वयमाश्रयणीयास्स्म [1]नाश्रितारः परस्य च ।
अन्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ २०

अपारे भव नः पारम् अप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान् सञ्जीवयस्व नः ॥ २१

सर्वे ते शत्रवस्सह्या न चेज्जीवितुमिच्छसि ॥ २१॥

अथ चे[2]दीदृशीं वृत्तिं क्लीबामभ्यवपद्यसे ।
निर्विण्णात्मा हतमना [3]मुञ्चेमां जीविकां पुनः ॥ २२॥

एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ २३
इन्द्रो वृत्रवधेनैव महेन्द्र[4]स्समपद्यत ।
[5]माहेन्द्रप्रग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ २४

नाम विश्राव्य सङ्ख्ये वै शत्रूनाहूय दंशितान् ।
सेनाग्रं चापि विद्राव्य हत्वा [6]शत्रुं परन्तपः ॥ २५

[7]यदैव लभते वीरस् सुयुद्धेन महद्यशः ।

---

1. अ-क—न श्रोतारः म—न श्रोतारं ।
2. ख-ग-घ-ङ-म—दीदृशं कर्म क्लीबानां न च मन्यसे ।
3. ङ—त्यजैनां पापजीविकाम् । म—त्यजैकां प्रेतजीविकाम् ।
मा—त्यजैतां प्रेतजीविकाम् । 4. अ-क-ख-ग-घ-ङ—:प्रतिपद्यते
5. क—माहेन्द्रं । घ-ङ—माहेन्द्रीं च श्रियं ।
म-मा—महेन्द्रं च ग्रहं ।
6. ग-घ-ङ-म-मा—वा पुरुषं परम् । 7. अ-क-ख-ग—तदैव ।

तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥　२६

त्यक्तात्मानं रणे दक्षं शूरं पुरुषमानिनम् ।
अवशाः पूजयन्ति स्म सर्वकामसमृद्धिभिः ॥　२७

राज्यस्याप्यस्य विभ्रंशस् संशयो जीवितस्य वा ।
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥　२८

स्वर्गद्वारोपमं राज्यम् अथवाऽप्यमृतोपमम् ।
[1]भुङ्क्ष्व युद्धेन ते शत्रून् जित्वा तु रणमूर्धनि ॥　२९

[2]नियच्छन्नितरान् वर्णान् विनयन् सर्वदुष्कृतान् ।
[3]रुद्धमेकायने मत्वा पतोल्मुक इवारिषु ॥　३०

जहि शत्रून् रणे राजन् स्वधर्ममनुपालय ।
मा त्वा पश्येत् सुकृपणं शत्रुश्श्रीमान् कदाचन ॥　३१

अस्मदीयैश्च शोचद्भिर् नन्दद्भिश्च परैर्भृशम् ।
अपि त्वां नानुपश्येयं दीनदीनमिव स्थितम् ॥　३२

उष्य सौवीरकन्याभिश् श्लाघ्यस्त्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानाम् [4]अपहासवशं गमः ॥　३३

---

1. अ-क-ख-म-मा — इदमर्धं नास्ति
2. अ-क-ख-घ-ङ-म-मा—इदमर्धं नास्ति
3. ङ—इदमर्धं नास्ति
4. अ-क-ख-ग-घ—अवसन्नो वशं

युवा रूपेण सम्पन्नो विद्ययाऽभिजनेन च ।
कस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥ ३४

[1]वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत् ॥ ३४॥

यदि त्वामत्र पश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥ ३५॥

नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्वं परस्यानुचरस् तात जीवितुमर्हसि ॥ ३६॥

अहं हि क्षत्रहृदयं वेद यद् भूरि शाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ॥ ३७॥

शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥ ३८

यो वै कश्चित् कुले जातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥ ३९

उद्यच्छेदेव न नमेद् उद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ ४०

मातङ्गो मत्त इव च परीयात् स महामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ॥ ४१

1. अ-क—नास्तीदमर्धम्।

नियच्छन्नितरान् वर्णान् विमृशन् सर्वमुन्नतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥ ४२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
॥ ५४ ॥ भगवद्यानपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

---

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

कुन्त्या विदुलोपाख्यानकथनम् ॥ १ ॥

---

सञ्जयः—

कृष्णायसस्य वत ते संहत्या हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञेऽत्यमर्षणे ॥ १

अहो क्षत्रसमाचारो यत्र मामितरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ॥ २

ईदृशं वचनं ब्रूयाद् भवती पुत्रमेकजम् ॥ २॥

किं नु ते मामपश्यन्त्याः पृथिव्याऽपि च सर्वया ।
किमाभरणकृत्येन किं भोगैर्जीवितेन वा ॥ ३॥

[1]मयि वा सङ्गरहते प्रियपुत्रे विशेषतः ॥ ४

विदुला—

सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।

---

1. ङ-म-मा—नास्तीदमर्धम् ।

तानेवाभिसमीक्ष्याहं सञ्जय त्वामचूचुदम् ॥ ५

सुसंवीक्ष्यः क्रमोपेतो मुख्यः कालोऽयमागतः ॥ ५॥

अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ।
असम्भावितरूपस्त्वं [1]सुनृशंसं करिष्यसि ॥ ६॥

तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय ।
परवात्सल्यमेवैतन्निस्सामर्थ्यमहेतुकम् ॥ ७॥

सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ॥ ८॥

[2]तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भव ॥ ९

धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ १०

यो ह्येवमविनीतेन रमते पुत्र नप्तृणा ।
अनुत्थानवता चापि दुर्विनीतेन दुर्धिया ॥ ११

रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम् ॥ ११॥

अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥ १२॥

युद्धाय क्षत्रियस्सृष्टस् सञ्जयेह जयाय च ।

---

1. ग—नृशंसं किं।
2. ख-ग-घ-ङ-मा—यद्वृत्तिमांश्च सद्वृत्तः। म—यद्वृद्धिमांश्च यद्वृत्तस्

क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ १३॥

जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥ १४

न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
[1]यदमित्रान् वशे कृत्वा क्षत्रियस्सुखमश्नुते ॥ १५

मन्युना दह्यमानेन पुरुषेण तपस्विना ।
निकृतेनेह बहुशश् शत्रून् प्रति जिगीषता ॥ १६

आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ १७

इह प्राज्ञो हि पुरुषस् स्वल्पमप्रियमिच्छति ।
यस्यानल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ १८

प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ १९

पुत्रः—

नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।
कारुण्य[2]मेव सन्द्रश्यं भूत्वेह जडमूकवत् ॥ २०

माता—

अतो मे भूयसी नन्दिर् यद्येवमनुपश्यसि ।

---

1. अ-क-ग—यदि मित्रान् । ख-व-ङ—युध्यमित्रान्
2. ग—मेव कर्तव्यं मात्रा पुत्रहितेच्छया । ङ-म—मेव तद्दृश्यं ।
अ-क-ख-व—मेवात्र पश्य

चोद्यां मां चोदयस्वैतद् भृशं वै चोदयामि ते ॥ २१

अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ॥ २२

पुत्रः—

अकोशस्यासहायस्य [1]कुतो वा विजयो मम ।
इत्यवस्थां विदित्वैनाम् आत्मनाऽऽत्मनि दारुणाम् ॥ २३

राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ॥ २३॥

[2]कीदृशं भवती कञ्चिद् उपायमनुपश्यति ।
तं मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ॥ २४॥

करिष्यामीह तत् सर्वं यथावदनुशासनम् ॥ २५

माता—

पुत्र नात्माऽवमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥ २६

अमर्षेणैव [3]चाप्यर्था आरब्धव्यास्त्वबालिशैः ।
सर्वेषां कर्मणां तात फले नित्यमनित्यता ॥ २७

अनित्यमिति जानन्तो भवन्ति न भवन्ति च ।

---

1. ग—कुतश्शत्रुजयो भवेत् । ङ-म-मा—कुतस्विद् ।
2. अ-क-ख-ग—ईदृशं ।
3. अ-क-ख—चप्यर्थां नारब्धव्यास्सुबालिशैः ।
   ग-घ-ङ-म—चाप्यर्थां आरब्धव्यास्त्व ।

[1]अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ॥　२८

ऐकगुण्यमनीहायाम् अभावः कर्मणां फलम् ।
अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥　२९

यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।
नुदेद्वृद्धिसमृद्धी च प्रतिकूले नृपात्मज ॥　३०

उत्थातव्यं [2]जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथः ॥　३१

मङ्गलानि पुरस्कृत्य [3]ब्राह्मणांश्चेश्वरैस्सह ।
प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ॥　३२

अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥　३२॥

निदर्शनान्युपायांश्च बहू [4]न्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुलपौरुषम् ॥　३३॥

पुरुषार्थमभिप्रेतं ममाहर्तुमिहार्हसि ॥　३४

क्रुद्धाँल्लुब्धान् परिक्षीणान् अवलिप्तान् विमानितान् ।
स्पर्धिनश्चैव ये केचित् तान् युक्त उपधारय ॥　३५

एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ।

---

1. अ-क-ख-ग-घ—उदये नैव ।
2. ख-ग-घ-ङ—च गन्तव्यं ।　　मा—जागर्तव्यं ।
3. ङ—ब्राह्मणैश्चेतरैस्सह ।　　म-मा—ब्राह्मणैश्चेश्वरैस्सह ।
4. ग-घ-ङ-मा—न्युद्धरणानि ।

महावेग इवोद्धूतो मातरिश्वा वलाहकान् ॥ ३६

येषामग्रप्रदायी स्याः काल्योत्थायी प्रियंवदः ।
ते त्वा प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ॥ ३७

यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥ ३८

तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनम् अन्ततस्तद्भविष्यति ॥ ३९

निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ॥ ४०

स्खलितार्थं पुनस्तात सन्त्यजन्ति च बान्धवाः ।
न ह्यस्मिन्नाश्रयन्ते च जुगुप्सन्ते च तादृशम् ॥ ४१

शत्रुं कृत्वा यस्सहायं विश्वासमुपगच्छति ।
स न सम्भाव्यमेवैतद् यद्राज्यं प्राप्नुयान्महत् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

॥ ५४ ॥ भगवद्यानपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[अस्मिन्नध्याये ४२ श्लोकाः]

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

विदुलोपाख्यानोपसंहारः ॥ १ ॥ विदुलोपाख्यानश्रवणफलकथनम् ॥ २ ॥

---

माता—

नैव राज्ञाऽऽदरः कार्यो जातु कस्यांश्चिदापदि ।
अथ चेदपि दीर्णस्स्यान्नैव वर्तेत दीर्णवत् ॥ १

दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक् कुर्वन्ति ते मतिम् ॥ २

शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ३

य एवात्यन्तसुहृदस् त एनं पर्युपासते ॥ ३॥
[1]अशक्ता ये स्वस्तिकामा बद्धवत्सा इला इव ।
शोचन्तमनुशोचन्ति प्रमीतानिव बान्धवान् ॥ ४॥

अपि ते पूजिताः पूर्वम् अपि ते सुहृदो मताः ।
ये राष्ट्रमभिपद्यन्ते राज्ञि व्यसनमीयुषि ॥ ५॥

मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ६

प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।

---

1. अ-क—इदमर्धं नास्ति

[1]विदधत्या समाश्वासम् उक्तं तेजोविवृद्धये ॥ ७
यद्येतत् संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वा सौम्यमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥ ८
अस्ति नः कोशनिचयो महानविदितस्तव ।
तदहं वेद नान्यस्तम् उपसम्पादयामि ते ॥ ९
सन्ति नैकशता भूयस् सुहृदस्तव सञ्जय ।
सुखदुःख[2]सहा वीर प्रियार्हा ह्यनिवर्तिनः ॥ १०
तादृशा हि सहायाश्चेत् पुरुषस्य बुभूषतः ।
[3]इष्टं न दुष्करं किञ्चित् सचिवैश्शत्रुकर्शन ॥ ११

पुत्रः—

[4]कस्य त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमो न व्यपहन्येत विचित्रार्थपदाक्षरम् ॥ १२
[5]वचनं तु मया धार्यं स्मर्तव्यं च रणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ॥ १३
अहं हि वचनं त्वत्तश् शुश्रूषुरपरापरम् ।

---

1. ख-ग-घ-ङ-म-मा—उल्लपन्त्या समाश्वासं बलवानिव दुर्बलम् । [ पाठान्तरम् ]

2. ङ—समाश्शूराः ।

3 ग-घ—ईषदुज्जीहतः । ङ—ईषदुज्जीविता । म-मा—ईषदुज्जीहतः ।

4. अ-क—कुन्ती—
तस्यास्त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमस्त्वपागमत् तस्य विचित्रार्थपदाक्षरम् ॥

5. ख-ग-घ-ङ-म-मा—उदके धूरियं धार्या सर्तव्या प्रवणे मया । [पाठान्तरम्]

किञ्चित् किञ्चित् प्रतिवदंस् तूष्णीमासं मुहुर्मुहुः ॥ १४

अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमार्थं जयाय च ॥ १५

कुन्ती—

सदश्व इव स क्षिप्रं प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ १६

इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥ १७

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रून् प्रमर्दति ॥ १८

इदं पुंसवनं चैव वीरसञ्जननं तथा ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ १९

विद्याशूरं तपश्शूरं दमशूरं तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन सम्मतम् ॥ २०

स्वर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ २१

नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
[1]ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. ङ-म—तदर्थं । मा – यदर्थं ।

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

कुन्त्या श्रीकृष्णे अर्जुनादीन् प्रति वक्तव्यसन्देशकथनम् ॥ १ ॥ श्रीकृष्णस्य स्वरथमारोपितेन कर्णेन सह सम्भाषणपूर्वकमुपप्लाव्यं प्रत्यागमनम् ॥ २ ॥

कुन्ती—

अर्जुनं केशव ब्रूयास् त्वयि जाते स्म सूतके ।
उपोपविष्टा नारीभिर् आश्रमे परिवारिता ॥ १
अथान्तरिक्षे वागासीद् दिव्यरूपा मनोरमा ॥ १॥

आकाशवाणी—

सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ॥ २
एष जेष्यति सङ्ग्रामे कुरून् सर्वान् समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ ३
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ॥ ३॥
हत्वा कुरूंश्च सङ्ग्रामे वासुदेवसहायवान् ।
पित्र्यमंशं प्रनष्टं च पुनरभ्युद्धरिष्यति ॥ ४॥
भ्रातृभिस्सहितश्श्रीमांस् त्रीन् मेधानाहरिष्यति ॥ ५

कुन्ती—

[1]तथा चरेस्त्वं श्वेताश्व यथा वागभ्यभाषत ॥ ५॥
[2-3]तं सत्यसन्धं बीभत्सुं सव्यसाचिनमच्युत ।

1. अ-क-ख-म-मा—नास्तीदमर्धम्
2. ब—इतः सार्धः श्लोको नास्ति
3. अ-क-ख-ग-ब—स सत्यसन्धो बीभत्सुस् सव्यसाची यथाऽच्युत ।

[1]यथाऽहमेवं जानामि बलवन्तं दुरासदम् ॥ ६॥

तथा वदस्व दाशार्ह यथा वागभ्यभाषत ॥ ७

धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ।
त्वं चापि तत् तथा कृष्ण सर्वं सम्पादयिष्यसि ॥ ८

[2]नाहं तदभ्यसूयामि यथा वागभ्यभाषत ॥ ८॥

नमो धर्माय महते धर्मो धारयते प्रजाः ।
एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ॥ ९॥

यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
न हि [3]वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ १०॥

विदिता मे सदा बुद्धिर् भीमस्य न हि शाम्यति ॥ ११

यावदन्तं न कुरुते शत्रूणां शत्रुकर्शनः ।
[4]तावदेव महाबाहुर् निशासु न सुखं लभेत् ॥ १२

सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम् ॥ १३

युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत् त्वमवर्तिथाः ॥ १४

---

1. अ-क-ख-ग-घ—तथा त्वमेव जानासि
2. अ-क—इदमर्धं न दृश्यते
3. ग-ङ—भारं ।　म-मा—भारं समासज्य ।
4. अ-क—इदमर्धं नास्ति

माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।
विक्रमेणार्जितान् भोगान् [1]वृणीतं जीविताद्पि ॥ १५

विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ १६

यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनी ।
पाञ्चाली परुषाण्युक्ता को नु तत् क्षन्तुमर्हति ॥ १७

न राज्यहरणं दुःखं द्यूते वाऽपि पराजयः ।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ १८

यत्त सा बृहती श्यामा सभायां रुदती तदा ।
अश्रौषीत् परुषा वाचस् तन्मे दुःखतरं [2]महत् ॥ १९

स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत् तदा नाथं कृष्णा नाथवती सती ॥ २०

तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पुरुष[3]व्याघ्रं द्रौपद्याः पदवीं चर ॥ २१

विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि पराभवम् ॥ २२

तयोश्चैतदवज्ञानं यत् सा कृष्णा सभागता ।
दुश्शासनश्च यद्भीमं कटुकान्यभ्यभाषत ॥ २३

---

1. ङ-म-मा—वृणीध्वं ।　　2. ङ-म—मतम्
3. म-मा—श्रेष्ठं ।

पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ॥ २३॥

पाण्डवान् कुशलं पृच्छेस् सपुत्रान् सह कृष्णया ।
मां वै कुशलिनीं ब्रूयास् तेषु भूयो जनार्दन ॥ २४॥

अरिष्टं गच्छ पन्थानं पुत्रान् मे प्रतिपालय ॥ २५

वैशम्पायनः—

अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् ।
निश्चक्राम महाबाहुस् सिंहखेलगतिस्ततः ॥ २६

ततो विसर्जयामास भीष्मादीन् कुरुपुङ्गवान् ।
आरोप्याथ रथे कर्णं प्रायात् सात्यकिना सह ॥ २७

ततः प्रयाते दाशार्हे कुरवस्सङ्गता मिथः ।
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् ॥ २८

प्रमूढा पृथिवी सर्वा मृत्युपाश[1]वशीकृता ।
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥ २९

ततो निर्याय नगरात् प्रययौ पुरुषोत्तमः ।
मन्त्रयामास स तदा कर्णेन सुचिरं सह ॥ ३०

विसर्जयित्वा राधेयं सर्वयादवनन्दनः ॥ ३०॥

अश्वत्थामानमाहूय मन्त्रयित्वा पुनः पुनः ।
ततो जवेन महता तूर्णमश्वानचोदयत् ॥ ३१॥

1. ङ-म-मा—सिता कृता ।

ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः ।
हया जग्मुर्महावेगा मनोमारुतरंहसः ॥ ३२॥

ते व्यतीत्य [1]महाध्वानं क्षिप्रं श्येना इवाशुगाः ।
उच्चै[2]र्जग्मुरुपप्लाव्यं शार्ङ्गधन्वानमावहन् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ ५४ ॥ भगवद्यानपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

भीष्मद्रोणाभ्यां कुन्तीवाक्यं श्रुत्वा समीपस्थं दुर्योधनं प्रति पाण्डवानां कुन्तीनिदेशानतिलङ्घित्वकथनपूर्वकं पाण्डवैस्सह सन्धिविधानम् ॥ १ ॥

---

वैशम्पायनः—

कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ ।
दुर्योधनमिदं वाक्यम् ऊचतुश्शासनातिगम् ॥ १

भीष्मद्रोणौ—

श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य सन्निधौ ।
वाक्यमर्थव[3]दत्युग्रम् उक्तं धर्म्यमनुत्तमम् ॥ २

1. ङ-म-मा—तमध्वानं । 2. ङ-म-मा—स्सूर्यमुप ।
3. म-मा—दव्यग्रम् ।

तत् करिष्यन्ति कौन्तेया वासुदेवस्य सम्मतम् ।
न हि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ३

क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा ।
सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ॥ ४

कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्चयम् ।
[1]रौद्रमस्त्रं च गाण्डीवं रथं च ध्वजमेव च ॥ ५

[2]नकुलं सहदेवं च बलवीर्यमदोद्धतौ ।
सहायं वासुदेवं च न क्षाम्यति युधिष्ठिरः ॥ ६

प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता ।
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ॥ ७

दानवा घोरकर्माणो निवातकवचा युधि ।
रौद्रमस्त्रं समादाय दग्धा वानरकेतुना ॥ ८

कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी ।
मोक्षितो घोषयात्रायां पर्याप्तं तन्निदर्शनम् ॥ ९

प्रशाम्य भरतश्रेष्ठ भ्रातृभिस्सह पाण्डवैः ।
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरस्थिताम् ॥ १०

ज्येष्ठो भ्राता धर्मशीलो वत्सलश्श्लक्ष्णवाक् शुचिः ।
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् ॥ ११

---

1. ब-क—इदमर्धं न दृश्यते　　2. ङ-म-मा—इदमर्धं नोपलभ्यते

[1]दृष्टश्चेत् त्वं पाण्डवेन व्यपनीतशरासनः ।
प्रसन्नो भ्रातृभिश्शीघ्रं कृता शांन्तिः कुलस्य च ॥ १२

तमभ्येत्य सहामात्यं परिष्वज्य नृपात्मजम् ।
अभिवादय राजानं यथापूर्वमरिन्दम ॥ १३

अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः ।
प्रतिगृह्णातु सौहार्दात् कुन्तीपुत्रो युधिष्ठिरः ॥ १४

सिंहस्कन्धोरुबाहुभ्यां वृत्तायतमहाभुजः ।
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ॥ १५

कम्बुग्रीवो गुडाकेशस् ततस्त्वां पुष्करेक्षणः ।
अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ॥ १६

आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि ।
तौ च त्वां गुरुवत् प्रेम्णा पूजया प्रत्युदीयताम् ॥ १७

मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः ।
सङ्गच्छ भ्रातृभिस्सार्धं मानं सन्त्यज्य पार्थिव ॥ १८

प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिस्सह ।
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥ १९

अलं युद्धेन राजेन्द्र सुहृदां शृणु भारत ।
ध्रुवो विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥ २०

---

1. अ-क—अर्धद्वयं नास्ति

ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः ।
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥ २१

विशेषत इहास्माकं निमित्तानि [1]निवेशने ।
उल्काभिर्हि प्रदीप्ताभिर् वध्यते पृतना तव ॥ २२

वाहनान्यप्रहृष्टानि रुदन्ति च विशाम्पते ।
गृध्राश्च पर्युपासन्ते सैन्यानि च समन्ततः ॥ २३

नगरं न यथापूर्वं तथा राजनिवेशनम् ।
शिवाश्चाशिवनिर्घोषा दीप्तास्सेवन्ति वै दिशम् ॥ २४

कुरु वाक्यं पितुर्मातुर् अस्माकं च हितैषिणाम् ।
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥ २५

न चेत् करिष्यसि वचस् सुहृदामरिसूदन ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥ २६

भीमस्य च महानादं नदतश्शुष्मिणो रणे ।
श्रुत्वा स्मर्तासि मे वाक्यं गाण्डीवस्य च निस्स्वनम् ॥ २७
यद्येतदपसव्यं ते वचो मम भविष्यति ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ ५४ ॥ भगवद्यानपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. ङ-म—विनाशने ।

## ॥ अथ षड्विंशत्यधिकशततमोऽध्यायः ॥

दुर्योधनेन स्वमतानभिनन्दने भीष्मद्रोणाभ्यां पार्थेन सह युद्धकरणे परिशोचनम् ॥ १ ॥ द्रोणेन दुर्योधनं प्रति पाण्डवानां साधनसमृद्धिमत्तया दुर्जयत्वाभिधानपूर्वकं पुनश्शमविधानम् ॥ २ ॥

वैशम्पायनः—

एवमुक्तस्तु विमनास् तिर्यग्दृष्टिरधोमुखः ।
संहत्य च भ्रुवोर्मध्यं न किञ्चिद्व्याजहार ह ॥ १

तं वै विमनसं दृष्ट्वा सम्प्रेक्ष्यान्योन्यमन्तिकात् ।
पुनरेवोचतुर्वाक्यम् उक्तवन्तौ नरर्षभौ ॥ २

भीष्मः—

शुश्रूषुमनसूयुं च ब्रह्मण्यं सत्यसङ्गरम् ।
प्रतियोत्स्यामहे पार्थम् अतो दुःखतरं नु किम् ॥ ३

द्रोणः—

अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये ।
[1]बहुमानः परो राजन् सन्नतिश्च कपिध्वजे ॥ ४

तं चेत् पुत्रात् प्रियतरं प्रतियोत्स्ये धनञ्जयम् ।
क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ॥ ५

यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः ।

1. अ-क—अर्धचतुष्टयं नोपलभ्यते

मत्प्रसादात् स बीभत्सुश् श्रेयानन्यैर्धनुर्धरैः ॥ ६

मित्रध्रुग् दुष्टभावश्च नास्तिकोऽथानृजुश्शठः ।
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ७

वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ।
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥ ८

मिथ्योपचरिता ह्येते वर्तमाना अपि प्रिये ।
अहितत्वाय कल्पन्ते [1]दोपाद् भरतसत्तम ॥ ९

त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च ।
वासुदेवेन च तथा श्रेयो नैवाभि[2]मन्यसे ॥ १०

अस्ति मे बलमित्येवं सहसा त्वं तितीर्षसि ।
सग्राहनक्रमकरं गङ्गाजलमिवोष्णगे ॥ ११

वाससैव यथा हि त्वं प्रावृण्वानोऽद्य मन्यसे ।
स्रजं त्यक्तामिव प्राप्य लोभाद् यौधिष्ठिरीं श्रियम् ॥ १२

द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम् ।
वनस्थमपि राज्यस्थः पाण्डवं को विजेष्यति ॥ १३

निदेशे यस्य राजानस् सर्वे तिष्ठन्ति किङ्कराः ।
तमैलबिलमासाद्य धर्मराजो [3]व्यराजत ॥ १४

---

1. अ-क-ख-ग-घ-म—दोषा ।
2. ङ-मा—पद्यसे । म—पद्यते ।
3. ख-ग-घ-म—व्यरोचत । ङ-मा—ऽभ्यरोचत ।

कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च ।
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः ॥ १५
दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः ।
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ ॥ १६
त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च ।
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ १७
द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी ।
तपोघोरव्रता देवी न त्वं जेष्यसि पाण्डवम् ॥ १८
मन्त्री जनार्दनो यस्य भ्राता यस्य धनञ्जयः ।
सर्वधर्मभृतां श्रेष्ठं न त्वं जेष्यसि पाण्डवम् ॥ १९
सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः ।
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ २०
पुनरुक्तं च वक्ष्यामि यत् कार्यं भूतिमिच्छता ।
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ २१
अलं युद्धेन तैर्वीरैश् शाम्य त्वं कुरुवृद्धये ।
मा गमस्ससुतामात्यस् सामित्रश्च यमक्षयम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

॥ ५४ ॥ भगवद्यानपर्वणि द्वाषष्टितमोऽध्यायः ॥ ६२ ॥

[ अस्मिन्नध्याये २२ श्लोकाः ]

[ भगवद्यानपर्व समाप्तम् ]

## ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥

[ विवादपर्व ]*

कृष्णेन कर्णः किमुक्त इति जनमेजयप्रश्नः ॥ १ ॥ कृष्णेन कर्णं प्रति तस्य कुन्तीसुतत्वरूपरहस्यकथनपूर्वकं पाण्डवपक्षप्रवेशचोदना ॥ २ ॥

जनमेजयः—

राजपुत्रैः परिवृतस् तथाऽमात्यैश्च सत्तम ।
उपारोप्य रथे कर्णं निर्ययौ मधुसूदनः ॥ १

किमब्रवीद्रथोपस्थे राधेयं परवीरहा ।
कानि सान्त्वानि गोविन्दस् सूतपुत्रे प्रयुक्तवान् ॥ २

ओघमेघस्वनः काले यत् कृष्णः कर्णमब्रवीत् ।
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व सर्वशः ॥ ३

वैशम्पायनः—

आनुपूर्व्येण वाक्यानि तीक्ष्णानि च मृदूनि च ।
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ॥ ४

हृदयग्रहणीयानि राधेयं मधुसूदनः ।
यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ॥ ५

* १२७ अध्यायादारभ्य १३७ अध्यायान्तपर्यन्तो भागः भगवद्यानपर्वान्तर्गततया इतः पूर्वं मुद्रितेषु सर्वेषु कोशेषु विद्यते. परन्तु पर्वसङ्ग्रहपर्वानुक्रमानुरोधेन विवादपर्व इति भवितव्यम् ॥

श्रीभगवान्—

उपासितास्ते राधेय ब्राह्मणा वेदपारगाः ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयता ॥ ६

त्वमेव कर्ण जानासि वेदं वेदाङ्गसंहितम् ।
त्वमेव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ७

कानीनश्च सहोढश्च कन्यायां यश्च जायते ।
वोढारं पितरं तस्य प्राहुश्शास्त्रविदो जनाः ॥ ८

सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्मतः।
निश्चयाद्धर्मशास्त्राणाम् एहि राजा भविष्यसि ॥ ९

पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ १०

मया सार्धमितो यातम् अद्य त्वां तात पाण्डवाः ।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥ ११

पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः ।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ १२

[1]राजानो राजपुत्राश्च पाण्डवार्थे समागताः ।
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः ॥ १३

हिरण्मयांश्च ते कुम्भान् राजतान् पार्थिवांस्तथा ।

1. अ—अर्धपञ्चकं नास्ति

ओषध्यस्सर्वरत्नानि सर्वबीजानि वीरुधः ॥　१४

राजानो राजकन्याश्च ह्यानयन्त्वभिषेचनम् ॥　१४॥

षष्ठे त्वां च तथा काले द्रौपद्युपगमिष्यति ॥　१५

[1]अग्नीन् जुहोतु वै धौम्यस् संशितात्मा द्विजोत्तमः ।
पुरोहितः पाण्डवानां [2]ब्रह्मकर्मण्यवस्थितः ॥　१६

अद्य त्वामभिषिञ्चन्तु विद्वांसश्च द्विजातयः ।
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ॥　१७

द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा ॥　१७॥

अहं [3]चाप्यभिषेक्ष्यामि राजानं पृथिवीपतिम् ॥　१८

युवराजोऽस्तु ते राजा धर्मपुत्रो युधिष्ठिरः ॥　१८॥

गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः ।
[4]उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः ॥　१९॥

छत्रं च ते महाश्वेतं भीमसेनो महाबलः ।
अभिषिक्तस्य कौन्तेयो धारयिष्यति मूर्धनि ॥　२०॥

किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणम् ।
रथं श्वेतहयैर्युक्तम् अर्जुनो वाहयिष्यति ॥　२१॥

---

1. ख-घ-ङ-म-मा—नास्तीदमर्धम् ।
2. ख-ग-घ-ङ-म—व्याघ्रचर्मण्य ।
3. ख-घ-म—च त्वाऽभिषेक्ष्यामि ।
4. ङ-म—आरोहतु रथं तेऽद्य ।　मा—आरोह रथं तेऽद्य ।

अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति ॥ २२

नकुलस्सहदेवश्च द्रौपदेयाश्च पञ्च ये ।
पाञ्चालाश्चानुयास्यन्ति शिखण्डी च महारथः ॥ २३

अहं च त्वाऽनुयास्यामि सर्वे चान्धकवृष्णयः ।
दाशार्हाः परिवारास्ते दाशार्णाश्च विशाम्पते ॥ २४

भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिस्सह पाण्डवैः ।
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ २५

पुरोगमाश्च ते सन्तु द्रमिडास्सह कुन्तलैः ।
आन्ध्रास्तालवराश्चैव [1]चुञ्चुपा वेणुपास्तथा ॥ २६

स्तुवन्तु त्वां च बहुभिस् स्तुतिभिस्सूतमागधाः ।
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः ॥ २७

स त्वं परिवृतः पार्थैर् नक्षत्रैरिव चन्द्रमाः ।
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय ॥ २८

मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिस्सह पाण्डवैः ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥१२७॥*
॥ ५५ ॥ विवादपर्वणि प्रथमोऽध्यायः॥ १ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

---

1. ङ—चूचुपा वैणवास्तथा । म-मा—चूचुपा वेणुपास्तथा ।
*मा—इत्युद्योगे कर्णोपजापे भगवद्वाक्यं नामाऽध्यायः ।

## ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

कर्णेन कृष्णं प्रति स्वस्य कुन्त्यां कन्यायां सत्यां सूर्याज्जातत्वेऽपि धर्मशास्त्ररीत्या पाण्डोः पुत्रत्वेऽपि पाण्डवपक्षप्रवेशे सयुक्तिकं बाधकान् निरूप्य स्वरहस्यगोपनप्रार्थनादि ॥ १ ॥

कर्णः—

असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ १

सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः ।
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ २

कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ३

सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुलजस्तथा ॥ ४

सूतो हि मामधिरथो दृष्ट्वैवाम्भसि वा प्लुतम् ।
राधायै स च मां प्रादात् सौहार्दान्मधुसूदन ॥ ५

मत्स्नेहाच्चैव राधायास् सद्यः क्षीरमवापतत् ।
सा मे मूत्रं पुरीषं च प्रतिजग्राह केशव ॥ ६

तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ७

[1]तथा मामभिजानाति सूतश्चाधिरथस्सुतम् ।
पितरं चाभिजानामि तमहं सौहृदात् सदा ॥ ८

स हि मे जातकर्मादि कारयामास धर्मतः ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ९

नाम वै वसुषेणेति कारयामास वै द्विजैः ।
भार्याश्चोढा मम प्राप्ते यौवने [2]तत्परिग्रहात् ॥ १०

तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।
तासु मे हृदयं कृष्ण सञ्जातं कामबन्धनम् ॥ ११

न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
हर्षाद्भयाद्वा गोविन्द [3]मिथ्या कर्तुं तदुत्सहे ॥ १२

धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ॥ १३

इष्टं च बहुभिर्यज्ञैस्तु सह सूतैर्मयाऽसकृत् ।
आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः ॥ १४

मां च कृष्ण समासाद्य कृतश्शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥ १५

---

1. घ—अर्धत्रयं नास्ति
2. ग-घ-ङ-म-मा—तेन केशव ।
3. ख-ग-ब—नानृतं वक्तुमु । ङ-म-मा—अनृतं वक्तुमु ।

तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत ।
[1]धृतवान् परमं कृष्ण प्रतिघं सव्यसाचिनः ॥ १६

वधाद्बन्धाद्भयाद्वाऽपि लोभाद्वाऽपि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥ १७

यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना ।
अकीर्तिस्स्याद्धृषीकेश मम पार्थस्य चोभयोः ॥ १८

असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन ।
सर्वं च पाण्डवाः कुर्युस् त्वद्वशा ह्यद्य पाण्डवाः ॥ १९

मन्त्रस्य नियमं कुर्यास् त्वमत्र मधुसूदन ।
एतदत्र हितं मन्ये सर्वयादवनन्दन ॥ २०

यदि जानाति मां राजा धर्मात्मा संशितव्रतः ।
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥ २१

प्राप्य चापि महद्राज्यं तदहं मधुसूदन ।
स्फीतं दुर्योधनायैव सम्प्रदद्यामरिन्दम ॥ २२

स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेशो योद्धा यस्य धनञ्जयः ॥ २३

पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः ।

---

1. ग—धृतवान् समरे कृष्ण प्रतीपं ।
घ-ङ—धृतवान् धार्तराष्ट्रोऽसौ प्रतीपं ।
ख-म-मा—धृतवान् समरे हृष्टः प्रतीपं ।

नकुलस्सहदेवश्च द्रौपदेयाश्च माधव ॥ २४

धृष्टद्युम्नश्च पाञ्चाल्यस् सात्यकिंश्च महारथः ।
उत्तमौजा युधामन्युस् [1]सत्यधर्मा च सौमकिः ॥ २५

चैद्यश्च चेकितानश्च शिखण्डी चापराजितः ।
इन्द्रगोपकवर्णाश्चाः केकया भ्रातरस्तथा ॥ २६

इन्द्रायुधसवर्णाश्वः कुन्तिभोजो महामनाः ॥ २६॥

मातुलो भीमसेनस्य श्येनजिच्च महारथः ।
शङ्खः पुत्रो विराटस्य [2]निधिस्त्वं च जनार्दन ॥ २७॥

महानयं कृष्ण कृतः क्षत्रस्य समुदागमः ।
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु ॥ २८॥

धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन ॥ २९॥

आध्वर्यवं च ते कृष्ण क्रतावस्मिन् भविष्यति ।
होता चैवात्र बीभत्सुस् सन्नद्धस्स कपिध्वजः ॥ ३०॥

गाण्डीवं स्रुक् तथा चाज्यं वीर्यं पुंसां भविष्यति ॥ ३१

ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्तास्सव्यसाचिना ॥ ३२

---

1. घ-ङ—अभिमन्युश्च सोमकाः।
2. घ-ङ—हैडिम्बश्च। म—विद्धि त्वं च। मा—विद्धि तं च।

अनुजातश्च पितरम् अधिको वा पराक्रमे ।
[1]ग्रावस्तोत्रं स सौभद्रस् सम्यक् तत्र करिष्यति ॥ ३३

[2]उद्गाताऽत्र पुनर्भीमः प्रस्तोता च महाबलः ।
[3]विनदन् स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ३४

स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः ।
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ३५

शङ्खशब्दास्समुरजा भेर्यश्च मधुसूदन ।
उत्कृष्टस्सिंहनादश्च सुब्रह्मण्यो भविष्यति ॥ ३६

नकुलस्सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
[4]शामित्रं तौ महावीर्यौ सम्यक् तत्र करिष्यतः ॥ ३७
[5]मैत्रावरुण आग्नीध्रो महावीर्यौ भविष्यतः ॥ ३७॥

कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः ।
यूपास्समुपकल्पन्ताम् अस्मिन् यज्ञे जनार्दन ॥ ३८॥

कर्णिनालीकनाराचा वत्सदन्ताश्च बर्हिणः ।
तोमरास्सोमकलशाः पवित्राणि धनूंषि च ॥ ३९॥

असयोऽत्र कपालानि पुरोडाशाश्शिरांसि च ।

---

1. ग—गाथा ।  अ-क-ख-ब—गाता ।
2. म-मा—उद्गातृत्वं ।
3. ङ—विमर्दन् ।  मा—निर्दहन् ।
4. मा—नास्तीदमर्धम्  5. अ-क—इदमर्धं नास्ति

हविस्तु रुधिरं कृष्ण तस्मिन् यज्ञे भविष्यति ॥ ४०॥

इध्माः परिधयश्चैव शक्तयो विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः* ॥ ४१॥

इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ४२॥

प्रतिप्रास्थानिकं कर्म सात्यकिस्स करिष्यति ।
दीक्षितो धार्तराष्ट्रश्च पत्नी चास्य महाचमूः ॥ ४३॥

घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ४४॥

दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैताने कर्मणि तते जातो यः कृष्ण पावकात् ॥ ४५॥

यदब्रवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्स्येऽद्य कर्मणा ॥ ४६॥

यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥ ४७॥

दुश्शासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दन्[1] नन्दतस्सम्यक् तदा सुत्या भविष्यति ॥ ४८॥

---

* ख—अत्रैव त्रिचत्वारिंशदधिकशततमोऽध्यायः परिसमाप्यते. मूले अध्यायपरिसमाप्तिपर्यन्तं विद्यमानाः श्लोका अस्मिन् न सन्ति ।

1. ङ—न्नुद्यत । म-मा—न्नदत ।

यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।
तदा यज्ञावसानं तद् भविष्यति जनार्दन ॥ ४९॥

दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्यते यज्ञो धार्तराष्ट्रस्य माधव ॥ ५०॥

स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः ।
हतेश्वरा हतसुता हतपौत्राश्च केशव ॥ ५१॥

गान्धार्या सह रोदन्त्या श्वगृध्रशकुनाकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ॥ ५२॥

विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ ।
वृथा मृत्युं न कुर्वीरंस् त्वत्कृते मधुसूदन ॥ ५३॥

शस्त्रेण निधनं गच्छेत् समग्रं क्षत्रमण्डलम् ।
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ५४॥

तदत्र पुण्डरीकाक्ष विधत्स्व यदनन्तरम् ।
यदा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गं[1]मवाप्नुयात् ॥ ५५॥

यावत् स्थास्यन्ति गिरयस् सरितश्च जनार्दन ।
तावत् कीर्तिभवश्शब्दश् शाश्वतोऽयं भविष्यति ॥ ५६॥

ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् ।
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधनम् ॥ ५७॥

---

1. ङ—मवुत्तमम् ।

समुपानय कौन्तेयं युद्धाय मम केशव ।
मन्त्रसंवरणं कुर्वन् नित्यमेव परन्तप॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ ५५ ॥ विवादपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ५८॥ श्लोकाः]

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

कृष्णेन कर्णं प्रति पाण्डवजयनिर्धारणकथनपूर्वकं भीष्मादिषु युद्धसन्नाहसन्देशकथनचोदना ॥ १ ॥

वैशम्पायनः—

कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन् वाक्यं स्मितपूर्वमिदं तदा ॥ १

श्रीभगवान्—

अपि [1]त्वां लभते कर्ण राज्यलाभोपपादना ।
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ २

ध्रुवो जयः पाण्डवानामितीदं
न संशयः कश्चन विद्यतेऽत्र ।

1. ख-ब-ङ-म—त्वा न तपेत् कर्ण । मा—त्वा न पतेत् कर्ण ।

जयध्वजो दृश्यते पाण्डवस्य
समुच्छ्रितो वानरराज उग्रः ॥ ३
दिव्या माया विहिता भौमनेन
समुच्छ्रिता इन्द्रकेतुप्रकाशा ।
दिव्यानि भूतानि [1]जयावहानि
दृश्यन्ति चैवात्र भयानकानि ॥ ४
[2]स सज्जते शैलवनस्पतिभ्य
ऊर्ध्वं तिर्यग्योजनमात्ररूपः ।
श्रीमान् ध्वजः कर्ण धनञ्जयस्य
समुत्थितः पावकतुल्यरूपः ॥ ५
यदा द्रक्ष्यसि सङ्ग्रामे श्वेताश्वं कृष्णसारथिम् ।
ऐन्द्रमस्त्रं प्रकुर्वाणम् उभौ चाप्यग्निमारुतौ ॥ ६
गाण्डीवस्य च निर्घोषं विष्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ७
यदा द्रक्ष्यसि सङ्ग्रामे कुन्तीपुत्रं युधिष्ठिरम् ।
जपहोमसमायुक्तं रक्षन्तं च महाचमूम् ॥ ८
आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम् ।
[3]न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ९

1. ख-ग-घ-ङ-मा—भया। 2. क-ख-घ-ङ—न सज्जते ।
3. अ-क-ख-ग-घ-ङ—इदमर्धं नास्ति

यदा द्रक्ष्यसि सङ्ग्रामे भीमसेनं महाबलम् ।
दुश्शासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ १०

प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ११

यदा द्रक्ष्यसि सङ्ग्रामे द्रोणं शान्तनवं कृपम् ।
सुयोधनं च राजानं सैन्धवं च जयद्रथम् ॥ १२

युद्धायापततस्तूर्णं वारितान् सव्यसाचिना ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ १३

यदा द्रक्ष्यसि सङ्ग्रामे माद्रीपुत्रौ महाबलौ ।
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥ १४

[1]विगाढे शस्त्रसम्बाधे परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ १५

ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम् ।
सौम्योऽयं वर्तते मासस् सुप्रापयवसेन्धनः ॥ १६

पक्वौषधिवनस्फीतः फलवानल्पमाक्षिकः ।
तिलको द्रवसम्पन्नो नात्युष्णशिशिरस्सुखः ॥ १७

सप्तमाच्चापि दिवसाद् अमावास्या भविष्यति ।
सङ्ग्रामो युज्यतां तस्यां तामाहुश्शक्रदेवताम् ॥ १८

---

1. अ—विगाधे । ख—विवसे ।

तथा राज्ञो वदेस्सर्वान् ये युद्धायाभ्युपागताः ।
यद्वो मनीषितं तद्वै सर्वं सम्पादयाम्यहम् ॥ १९

राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

॥ ५५ ॥ विवादपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥

कर्णेन कृष्णं प्रति पृथिवीविनाशे शकुनिदुश्शासनयोः स्वस्य च मूलत्वकथनम् ॥ १ ॥ तथा पार्थधार्तराष्ट्राणां जयपराजयसूचकनिमित्तोपवर्णनपूर्वकं कृष्णमालिङ्गय प्रतिनिवर्तनम् ॥ २ ॥ सात्यकिना सह कृष्णस्य उपप्लाव्यागमनम् ॥ ३ ॥

---

वैशम्पायनः—

केशवस्य तु तद्वाक्यं कर्णश्श्रुत्वा हितं शुभम् ।
अब्रवीदभिसम्पूज्य कृष्णं तं मधुसूदनम् ॥ १

कर्णः—

जानन् मां किं महाबाहो सम्मोहयितुमिच्छसि ।
योऽयं पृथिव्याः कार्त्स्न्येन विनाशस्समुपस्थितः ॥ २

निमित्तं तत्र शकुनिर् अहं दुश्शासनस्तथा ।

दुर्योधनश्च नृपतिर् धृतराष्ट्रसुतोऽभवत् ॥ ३

असंशयमिदं कृष्ण महद्युद्धमुपस्थितम् ।
पाण्डवानां कुरूणां च [1]घोरं रुधिरकर्दमम् ॥ ४

राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
[2]रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम् ॥ ५

स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पातास्सुदारुणाः ॥ ६

पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
शंसन्त इव वार्ष्णेय विविधा रोमहर्षणाः ॥ ७

प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।
शनैश्चरः पीडयति पीडयन् प्राणिनोऽधिकम् ॥ ८

कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन ।
अनूराधां प्रार्थयते मैत्रं संशमयन्निव ॥ ९

नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम् ।
विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ॥ १०

सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेष्यति ।
दिवश्चोल्काः पतन्त्येतास् सनिर्घातास्सकम्पनाः ॥ ११

निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।

---

1. ङ-म-मा—महद् । 2. अ-क—इदमर्धं नास्ति

पानीयं यवसं चापि नाभिनन्दन्ति माधव ॥ १२

प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितम् ।
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम् ॥ १३

अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ।
वाजिनां वारणानां च मनुष्याणां च केशव ॥ १४

धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन ।
पराभवस्य तल्लिङ्गम् इति प्राहुर्मनीषिणः ॥ १५

प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते ।
प्रदक्षिणा मृगाश्चैव तत् तेषां जयलक्षणम् ॥ १६

अपसव्या मृगाश्चैव धार्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस् तत् पराभवलक्षणम् ॥ १७

मयूराः पुण्यशकुना हंससारसचातकाः ।
जीवञ्जीवकसङ्घाश्चाप्यनुगच्छन्ति पाण्डवान् ॥ १८

गृध्राः [1]कङ्का बकाश्श्येना यातुधानास्तथा वृकाः ।
मक्षिकाणां च सङ्घाता अनुधावन्ति कौरवान् ॥ १९

धार्तराष्ट्रस्य सैन्येषु [2]भेरीणां नास्ति निस्वनः ।
अनाहताः पाण्डवानां नदन्ति पटहाः किल ॥ २०

---

1. ङ-म-मा—श्येना बका काका यातुधानास्सलावृकाः ।
2. ग—तद् पराभवलक्षणम् । ङ-म-मा—तूर्याणां ।

उदपानाश्च नर्दन्ति यथा गोवृषभा इव ।
धार्तराष्ट्रस्य सैन्येषु तत् पराभवलक्षणम् ॥ २१

मांसशोणितवर्षं च वृष्टं देवेन माधव ।
तथा गन्धर्वनगरं भानुमत् समुपस्थितम् ॥ २२

सप्राकारं सपरिघं सवप्रं [1]चारुतोरणम् ।
कृष्णश्च परिधिस्तत्र भानुमावृत्य तिष्ठति ॥ २३

उदयास्तमये सन्ध्ये वेदयाने महद्भयम् ॥ २३॥

[2]एकपादाक्षिचरणा नर्दन्तो घोरदर्शनाः ।
वाश्यन्ते पक्षिणो घोरं तत् पराभवलक्षणम् ॥ २४॥

[3]शिवा च वाशते घोरं तत् पराभवलक्षणम् ॥ २५

कृष्णग्रीवाश्च शकुना रक्तपादा भयानकाः ।
सन्ध्यामभिमुखा यान्ति तत् पराभवलक्षणम् ॥ २६

ब्राह्मणान् प्रथमं द्वेष्टि गुरूंश्च मधुसूदन ।
भृत्यान् भक्तिमतश्चापि तत् पराभवलक्षणम् ॥ २७

पूर्वा दिग् लोहिताकारा शस्त्रवर्णा च दक्षिणा ।
[4]*आम्रपत्रप्रतीकाशा पश्चिमा मधुसूदन ॥ २८

---

1. अ-क-ख-ग-घ—चारु । 2. अ-क—अर्धद्वयं नास्ति
3. ख-घ-ङ—नास्तीदमर्धम् 4. ख—धूमवर्णप्रतीकाशा
* ङ-म—इदमर्धं नास्ति

[1]उत्तरा शङ्खवर्णाभा दिशो वर्णा उदाहृताः ॥ २८॥

प्रदीप्ताश्च दिशस्सर्वा धार्तराष्ट्रस्य माधव ।
महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे ॥ २९॥

सहस्रपादं प्रासादं स्वप्नान्ते तु युधिष्ठिरः ।
अधिरोहन् मया दृष्टस् सह भ्रातृभिरच्युत ॥ ३०॥

श्वेतोष्णीषाश्च दृश्यन्ते सर्वे च मधुसूदन ।
आसनानि च शुभ्राणि सर्वे ते शुक्लवाससः ॥ ३१॥

तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला ।
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥ ३२॥

अस्थिसञ्चयमारूढश् चामितौजा युधिष्ठिरः ।
सुवर्णपात्र्यां संहृष्टो भुक्तवान् घृतपायसम् ॥ ३३॥

युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धराम् ।
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुन्धराम् ॥ ३४॥

उच्चपर्वतमारूढो भीमकर्मा वृकोदरः ।
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ॥ ३५॥

क्षपयिष्यति नस्सर्वान् स सुव्यक्तं महारणे ॥ ३६

विदितं मे हृषीकेश यतो धर्मस्ततो जयः ॥ ३६॥

पाण्डरं गजमारूढो गाण्डीवी स धनञ्जयः ।

---

1. ङ—इदमर्धं नास्ति

त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥ ३७॥

यूयं सर्वे वधिष्यध्वं तत्र मे नास्ति संशयः ।
पार्थिवान् समरे कृष्ण दुर्योधनवशानुगान् ॥ ३८॥

नकुलस्सहदेवश्च सात्यकिश्च महारथः ।
शुद्धकेयूरकण्ठास्तु शुक्लमाल्याम्बरावृताः ॥ ३९॥
अधिरूढा नरव्याघ्र नरवाहनमुत्तमम् ॥ ४०

त्रय एते महामात्राः पाण्डरच्छत्रवाससः ।
श्वेतोष्णीषाश्च दृश्यन्ते सर्वे माधव पाण्डवाः ॥ ४१

[1]धार्तराष्ट्रेषु सैन्येषु तान् विजानीहि केशव ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ४२

रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव कौरवाः ॥ ४२॥
उष्ट्रप्रयुक्तमारूढौ भीष्मद्रोणौ जनार्दन ॥ ४३
मया सार्धं महाबाहो धार्तराष्ट्रेण वै विभो ।
अगस्त्यकान्तां च दिशं प्रयातास्स्म जनार्दन ॥ ४४
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ।
अहं चान्ये च राजानो यच्च तत् क्षत्रमण्डलम् ॥ ४५
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नात्र संशयः ॥ ४५॥

श्रीभगवान्—
उपस्थितविनाशेयं नूनमद्य वसुन्धरा ।

1. म—अर्धचतुष्टयं नास्ति

यथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ४६॥

सर्वेषां तात भूतानां विनाशे समुपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ४७॥

**कर्णः —**

अपि त्वां कृष्ण पश्यामो जीवन्तोऽस्मान्महारणात् ।
समुत्तीर्णा महाबाहो वीरक्षयमहाह्रदात् ॥ ४८॥

अथवा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम् ।
तत्रेदानीं समेष्यामः पुनस्सार्धं त्वयाऽनघ ॥ ४९॥

**वैशम्पायनः—**

इत्युक्त्वा माधवं कर्णः परिष्वज्य [1]निपीड्य तम् ।
विसर्जितः केशवेन रथोपस्थादवातरत् ॥ ५०॥

ततस्स्वरथमास्थाय जाम्बूनदविभूषितम् ।
महात्मा वै निववृते राधेयो दीनमानसः ॥ ५१॥

ततश्शीघ्रतरं प्रायात् केशवस्सहसात्यकिः ।
पुनरुच्चारयन् वाणीं याहि याहीति सात्यकिम्* ॥ ५२॥

**इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥**

**॥ ५५ ॥ विवादपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥**

**[ अस्मिन्नध्याये ५२॥ श्लोकाः ]**

---

1. अ-क-ख-ग-घ-म-मा — च पीडितम्। * मा — कर्णोपजापः समाप्तः।

## ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥

विदुरेण कुन्तीसमीपे युद्धे बहुवीरविनाशानुचिन्तनेन शोचनम् ॥ १ ॥ कर्णपराक्रमभीतया कुन्त्या पाण्डवान् प्रति तन्मनःप्रसादनेच्छया गङ्गातीरे कर्णसमीपगमनम् ॥ २ ॥

वैशम्पायनः—

असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान् गते ।
अभिगम्य पृथां क्षत्ता शनैश्शोचन्निवाब्रवीत् ॥ १

विदुरः—

जानासि मे जीवपुत्रि भावं नित्यमविग्रहे ।
क्रोशतो न च गृह्णाति वचनं मे सुयोधनः ॥ २

उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः ।
भीमार्जुनाभ्यां कृष्णेन युयुधानयमैरपि ॥ ३

उपप्लाव्ये निविष्टोऽपि धर्मराजो युधिष्ठिरः ।
काङ्क्षते ज्ञातिभिस्सन्धिं बलवान् दुर्बलो यथा ॥ ४

राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति ।
मत्तः पुत्रमदेनैव विधर्मे पथि वर्तते ॥ ५

जयद्रथस्य कर्णस्य तथा दुश्शासनस्य च ।
सौबलस्य च दुर्बुद्ध्या मिथो भेदः प्रवर्तते ॥ ६

अधर्मेण हि धर्मिष्ठं ह्रियते राज्यमीदृशम् ।

येषां तेषामयं धर्मस् सानुबन्धो भविष्यति ॥ ७
ह्रियमाणे बलाद्धर्मे कुरुभिः को न सञ्ज्वरेत् ।
असाम्ना केशवे याते समुद्देष्यन्ति पाण्डवाः ॥ ८
ततः कुरूणामनयो भविता वीरनाशनः ।
चिन्तयन् न लभे निद्राम् अहस्सु च निशासु च ॥ ९

वैशम्पायनः—

श्रुत्वा तु कुन्ती तद्वाक्यम् अर्थकामेन भाषितम् ।
[1]सा निश्श्वसन्ती दुःखार्ता मनसा विममर्श ह ॥ १०

कुन्ती—

धिगस्त्वर्थं यत्कृतेऽयं सुमहान् ज्ञातिसङ्क्षयः ।
वर्तते सुहृदां चैव युद्धेऽस्मिन् वै पराभवः ॥ ११
पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः ।
[2]भारतैस्सह योत्स्यन्ति किं नु दुःखमतः परम् ॥ १२
पश्ये दोषं ध्रुवं युद्धे तथाऽयुद्धे पराभवम् ।
अधनस्य मृतं श्रेयो न हि ज्ञातिक्षयो जयः ॥ १३
[3]इति मे चिन्तयन्त्या वै हृदि दुःखं प्रवर्तते ॥ १३॥
पितामहश्शान्तनव आचार्यश्च युधां पतिः ।
कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति भयं मम ॥ १४॥
नाचार्यः कामवान् शिष्यैर् द्रोणो युद्ध्येत जातुचित् ।

---

1. ङ-म-मा—अनिष्टनन्ती ।
2. ख—इतः सार्धश्लोकद्वयं नास्ति	3. ङ—इदमर्धं नास्ति

पाण्डवेषु कथं हार्दं कुर्यान्न च पितामहः ॥ १५॥
अयं त्वेको वृथादृष्टिर् धार्तराष्ट्रस्य दुर्मतेः ।
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान् ॥ १६॥
[1]महत्यनर्थे निर्बन्धी वलवांश्च विशेषतः ।
कर्णस्सदा [2]पाण्डवद्विट् तन्मे दहति सम्प्रति ॥ १७॥
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान् प्रति ।
प्रसादयितुमासाद्य दर्शयन्ती यथातथम् ॥ १८॥
तोषितो भगवान् यत्र दुर्वासा मे वरं ददौ ।
आह्वानं मन्त्रसंयुक्तं वसन्त्याः पितृवेश्मनि ॥ १९॥
साऽहमन्तः पुरे राज्ञः कुन्तिभोजपुरस्कृता ।
चिन्तयन्ती बहुविधं हृदयेन विदूयता ॥ २०॥
बलाबलं च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ।
स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनः पुनः ॥ २१॥
धात्र्या विस्रब्धया गुप्ता सखीजनवृता तदा ।
दोषं परिहरन्ती च पितुश्चारित्ररक्षिणी ॥ २२॥
कथं नु सुकृतं मे स्यान्नापराधवती कथम् ।
भवेयामिति सञ्चिन्त्य ब्राह्मणं तं नमस्य च ॥ २३॥

1. अ-क-ग—इदमर्धं नास्ति
2. ख-ग-ब-ङ-म-मा—पाण्डवानां ।
मा—पाण्डवानां तन्मे दहति साम्प्रतम् ।

कौतूहलात् सुतं लब्ध्वा बालिश्यादाचरं तदा ॥ २४

कन्या सती देवमर्कम् [1]आसादयमहं ततः ।
योऽसौ कानीनगर्भो मे पुत्रवत् परिरक्षितः ॥ २५

कस्मान्न कुर्या[2]द्वचनं पथ्यं भ्रातृहितं तथा ॥ २५॥

वैशम्पायनः—

इति कुन्ती विनिश्चित्य कार्यनिश्चयमुत्तमम् ।
कार्यार्थनाभिनिर्याय ययौ भागीरथीं प्रति ॥ २६॥

आत्मजस्य ततस्तस्य [3]घृणिनस्सत्यसङ्गिनः ।
गङ्गातीरे पृथाऽश्रौषीत् तदाऽध्ययननिस्वनम् ॥ २७॥

प्राङ्मुखस्योर्ध्वबाहोस्सा पर्यतिष्ठत पृष्ठतः ।
जप्यावसाने कार्यार्थं प्रतीक्षन्ती तपस्विनी ॥ २८॥

अतिष्ठत् सूर्यतापार्ता कर्णस्योत्तरवासिनी ।
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यति ॥ २९॥

आपृष्ठतापाज्जप्त्वाऽसौ परिवृत्य यतव्रतः ।
दृष्ट्वा कुन्तीमुपातिष्ठद् अभिवाद्य कृताञ्जलिः ॥ ३०॥

यथान्यायं महातेजा मानी धर्मभृतां वरः ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ ५५ ॥ विवादपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

---

1. ख-ग-घ-ङ-म-मा—आसाद्याहं पितुर्गृहे ।
2. ख-ग-घ-ङ-म-मा—न्मतिमान् पश्यन् भ्रातृहितं वचः ।
3. ख-ग-घ-ङ-म-मा—घृणिनो धर्मे ।

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

कुन्त्या कर्णं प्रति तस्य सूर्यात् स्वस्मिन् जननकथनपूर्वकं पाण्डवैस्सह सङ्गमचोदनम् ॥ १ ॥

कर्णः—

[1]राधेयोऽहमातिरथः कर्णस्त्वामभिवादये ।
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ १

कुन्ती—

कौन्तेयस्त्वं न राधेयो न तवातिरथः पिता ।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ २

कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः ।
कुन्तिभोजस्य भवने पार्थस्त्वमसि पुत्रक ॥ ३

प्रकाशकर्मा तपनो योऽयं देवो विरोचनः ।
अजीजनत् त्वां [2]मय्येव कर्ण शस्त्रभृतां वरम् ॥ ४

कुण्डली बद्धकवचो देवगर्भश्रिया वृतः ।
जातस्त्वमसि दुर्धर्ष मया पुत्र पितुर्गृहे ॥ ५

स त्वं भ्रातॄन[3]सम्बुद्ध्वा मोहाद्यदुपसेवसे ।

---

1. ङ-मा—राधेयनामाऽऽतिरथिः ।
2. ख-ङ—मय्येष ।
3. ङ—सम्बुध्य ।

धार्तराष्ट्रान् न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ६

एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये ।
यत् तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ॥ ७

भ्रातृभिर्निर्जितां पूर्वं भीमार्जुनयमादिभिः ।
आच्छिद्य धार्तराष्ट्रेभ्यो भुङ्क्ष्व यौधिष्ठिरीं श्रियम् ॥ ८

अद्य पश्यन्तु कुरवः कर्णार्जुनसमागमम् ।
सौभ्रात्रमेतदालक्ष्य सन्नमन्तामसाधवः ॥ ९

कर्णार्जुनौ वै भवतां यथा रामजनार्दनौ ।
[1]असाध्यं किं नु लोके स्याद् युवयोस्संहतात्मनोः ॥ १०

कर्ण शोभिष्यसे नूनं पञ्चभिर्भ्रातृभिर्वृतः ।
वेदैः परिवृतो ब्रह्मा यथा वेदाङ्गपञ्चमैः ॥ ११

उपपन्नो गुणैस्सर्वैर् ज्येष्ठश्श्रेष्ठेषु बन्धुषु ।
सूतपुत्रेति [2]मा शब्दः पार्थस्त्वमसि वीर्यवान् ॥ १२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

॥ ५५ ॥ विवादपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ अस्मिन्नध्याये १२ श्लोकाः ]

---

1. ख-ग-घ-ङ-म — असह्यं ।  मा — नासह्यं ।
2. ख-ग-घ-ङ-म-मा — मा शब्दः कर्ण क्षत्रिय ईदृशः ।

## ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

सूर्येण कर्णं प्रति कुन्तीवचनस्वीकरणविधानम् ॥ १ ॥ कर्णेन कुन्तीं प्रति सोपालम्भं दुर्योधनपरित्यागस्य सयुक्तिकमनौचित्यकथनपूर्वकं अर्जुनवर्जं पाण्डवासंहरणप्रतिज्ञानम् ॥ २ ॥

---

**वैशम्पायनः—**

ततस्सूर्यान्निस्सरन्तीं कर्णश्शुश्राव भारतीम् ।
दुरत्ययां प्रणयिनीं पितृवद्भास्करेरिताम् ॥ १

**सूर्यः—**

सत्यमाह पृथा वाक्यं कर्ण मातृवचश्शृणु ।
श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा ॥ २

**वैशम्पायनः—**

एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना ।
चचाल नैव कर्णस्य मतिस्सत्यधृतेस्तदा ॥ ३

**कर्णः—**

न चैतच्छ्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया ।
धर्मद्वारं ममैतत् स्यान्नियोगकरणं तव ॥ ४

अकरोन्मयि यत् पापं भवती सुमहात्ययम् ।
अवकीर्णोऽस्मि [1]ते तेन तद्यशःकीर्तिनाशनम् ॥ ५

---

1. अ-क-मा—यन्मातः ।

अहं च क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम् ।
त्वद्दृते किं तु पापीयश् शत्रुः कुर्यान्ममाहितम् ॥ ६

क्रियाकाले त्वनुक्रोशम् अकृत्वा त्वमिमं मम ।
[1]हीनसंस्कारसमयम् अद्य मां समचूचुदः ॥ ७

न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया ।
[2]सा मां सम्बोधयस्यद्य केवलात्महितैषिणी ॥ ८

कृष्णेन सहितात् को वै न व्यथेत धनञ्जयात् ।
कोऽद्य भीतं न मां विद्यात् पार्थानां समितिं गतम् ॥ ९

अभ्राता विदितः पूर्वं युद्धकाले [3]प्रकाशितः ।
पाण्डवान् यदि गच्छामि किं मां क्षत्रं वदिष्यति ॥ १०

सर्वकामैस्संविभक्तः पूजितश्च [4]यथासुखम् ।
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम् ॥ ११

उपनह्य परैर्वैरं ये मां नित्यमुपासते ।
नमस्कुर्वन्ति च सदा वसवो वासवं यथा ॥ १२

मम प्राणेन ये शत्रून् शक्ताः प्रतिसमासितुम् ।
मन्यन्ते ते कथं तेषाम् अहं छिन्द्यां मनोरथम् ॥ १३

---

1. ख-ग-व-ङ-म-मा—सुसङ्गृहीत ।
2. ख-ङ-म-मा—सोऽहं संबोधयाम्य ।
3. ख-ङ—प्रदर्शितः ।
4. ग-व—यथा भृशम् । ख-ङ-म-मा—सदा भृशम् ।

मया प्लवेन सङ्ग्रामं तितीर्षन्ति दुरत्ययम् ।
अपारे पारकामा ये त्यजेयं तानहं कथम् ॥ १४

अयं हि कालस्सम्प्राप्तो धार्तराष्ट्रोपजीविनाम् ।
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ॥ १५

कृतार्था[1]स्सुभृता ये हि कृत्यकाले ह्युपस्थिते ।
अनवेक्ष्य कृतं पापाः कुर्वन्ति प्रियमात्मनः ॥ १६

राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम् ।
नैवायं न परो लोको विद्यते पापकर्मणाम् ॥ १७

धृतराष्ट्रस्य पुत्राणाम् अर्थे योत्स्यामि ते सुतैः ।
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे ॥ १८

आनृशंस्यमथो वृत्तं रक्षन् सत्पुरुषोचितम् ।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ १९

न च तेऽयं समारम्भो मयि मोघो भविष्यति ॥ १९॥
वध्यान् विषह्यान् सङ्ग्रामे न हनिष्यामि ते सुतान् ।
युधिष्ठिरं च भीमं च यमौ तावर्जुनादृते ॥ २०॥
अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले ॥ २१

अर्जुनं विनिहत्याजौ सम्प्राप्तं स्यात् फलं मया ।
यशसा वा न मुच्येयं निहतस्सव्यसाचिना ॥ २२

---

1. ख-ङ—स्सुहृदा । म-मा—स्सुकृता ।

न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि ।
निरर्जुनास्सकर्णा वा सार्जुना वा हते मयि ॥ २३

**वैशम्पायनः—**

इति कर्णवचश्श्रुत्वा कुन्ती दुःखात् प्रवेपती ।
उवाच [1]पुत्रमाश्लिष्य कर्णं धैर्यादकम्पनम् ॥ २४

**कुन्ती—**

एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः ।
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् ॥ २५

त्वया चतुर्णां भ्रातॄणाम् अभयं शत्रुकर्शन ।
[2]दत्तं तत् प्रतिजानिहि सङ्गरप्रतिमोचनम् ॥ २६

**वैशम्पायनः—**

अनामयं स्वस्ति चेति पृथाऽथो कर्णमब्रवीत् ।
तां कर्णोऽभ्यवदत् प्रीतस् ततस्तौ जग्मतुस्सुखम् ॥ २७

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्**
**उद्योगपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥**

**॥ ५१ ॥ विवादपर्वणि सप्तमोऽध्यायः ॥ ७ ॥**

**[ अस्मिन्नध्याये २७ श्लोकाः ]**

---

1. ख-ङ-म-मा—कर्णमाश्लिष्य परं धैर्यादकम्पितम् ।
2. ख-ङ-म-मा—उक्तं ।

## ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

कृष्णेन पाण्डवान् प्रति सङ्क्षेपेण हास्तिननगरवृत्तान्तकथनम् ॥ १ ॥ पाण्डवैः कृष्णं प्रति विस्तरेण भीष्मादिवचनकथनप्रार्थना ॥ २ ॥ कृष्णेन शमविधायकभीष्मवचनानुवादः ॥ ३ ॥

---

वैशम्पायनः—

आगम्य हास्तिनपुराद् उपप्लाव्यमरिन्दमः ।
पाण्डवानां यथावृत्तं केशवः पूर्वमुक्तवान् ॥ १

सम्भाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः ।
[1]स्वमेव भवनं शौरिर् विश्रमार्थं जगाम ह ॥ २

विसृज्य सर्वान् नृपतीन् विराटप्रमुखांस्तदा ।
पाण्डवा भ्रातरः पञ्च भानावस्तं गते सति ॥ ३

सन्ध्यामुपास्य ध्यायन्तस् तमेव गतमानसाः ।
आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ॥ ४

युधिष्ठिरः—

त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
किमुक्तः पुण्डरीकाक्ष तं नश्शंसितुमर्हसि ॥ ५

श्रीभगवान्—

मया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।

---

1. म-मा—स्वमेवावसथं ।

तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः ॥ ६

युधिष्ठिरः—

तस्मिन्नुत्पथमापन्ने [1]कुरुवृद्धः पितामहः ।
किमुक्तवान् हृषीकेश दुर्योधनममर्षणम् ॥ ७

आचार्यो वा महाबाहो भारद्वाजः किमब्रवीत् ।
[2]पिता वा धृतराष्ट्रस्तं गान्धारी वा किमब्रवीत् ॥ ८

पिता यवीया[3]नस्माकं क्षत्ता धर्मविदां वरः ।
पुत्रशोकाभिसन्तप्तः किमाह धृतराष्ट्रजम् ॥ ९

किञ्च सर्वे नृपतयस् सभायां ये [4]समासते ।
उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ॥ १०

उक्तवान् हि भवान् सर्वं वचनं कुरुमुख्ययोः ।
[5]प्रतिकूलमयुक्तं च हृदयान्नापसर्पति ॥ ११

[6]धार्तराष्ट्रस्य तेषां हि वचनं कुरुसंसदि ।
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः ॥ १२

अप्रियं हृदये तस्य किं नु तिष्ठति केशव ॥ १२॥

तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो ।
यथा च नातिपद्येत कालस्तात तथा कुरु ॥ १३॥

---

1. ङ-म-मा—कुल ।
2. ख—नास्तीदमर्धम
3. ङ—ननवमः ।
4. ङ—समागताः ।
5. अ-क—इदमर्धं नास्ति
6. ख-ङ-म—नास्तीदमर्धम्

भवान् हि नो बलं कृष्ण भवान् नाथो भवान् गतिः ॥ १४

श्रीभगवान्—

[1]शृणु राजन् यथा वाक्यम् उक्तो राजा सुयोधनः ।

मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥ १५

मया विश्राविते वाक्ये जहास धृतराष्ट्रजः ।

अथ भीष्मस्सुसङ्क्रुद्ध इदं वचनमब्रवीत् ॥ १६

भीष्मः—

दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते ।

तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ॥ १७

मम तात पिता राजन् शन्तनुर्लोकविश्रुतः ।

तस्याहमेक एवासं पुत्रः पुत्रवतां वर ॥ १८

तस्य बुद्धिस्समुत्पन्ना द्वितीयस्स्यात् कथं सुतः ।

एकं पुत्रमपुत्रं वै प्रवदन्ति मनीषिणः ॥ १९

न चोच्छेदं कुलं यायाद् विस्तीर्येत कथं यशः ॥ १९॥

तस्याहमीप्सितं बुध्वा कालीं मातरमावहम् ॥ २०

प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च ।

अराजा चोर्ध्वरेताश्च यथा सुविदितं तव ॥ २१

प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् ॥ २१॥

तस्यां जज्ञे महाबाहुश् श्रीमान् कुरुकुलोद्वहः ।

---

1. ख—इतः सार्धश्लोको नास्ति

विचित्रवीर्यो धर्मात्मा कनीयान् मम पार्थिवः ॥ २२॥

स्वर्यातेऽहं पितरि तं स्वराज्ये सन्निवेशयम् ।
विचित्रवीर्यं राजानं भृत्यो भूत्वा ह्यधश्चरः ॥ २३॥

तस्याहं सदृशान् दारान् राजेन्द्र समुदावहम् ।
जित्वा पार्थिवसङ्घातम् अपि ते बहुशश्श्रुतम् ॥ २४॥

ततो रामेण समरे द्वन्द्वयुद्धमुपागमम् ।
स हि रामभयादेभिर् नागरैर्विप्रवासितः ॥ २५॥

दारेष्वप्यतिसक्तश्च यक्ष्माणं समपद्यत ॥ २६

यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वरः ।
तदाऽभ्यधावन् मामेव प्रजाः क्षुद्भयपीडिताः ॥ २७

प्रजाः—

उपक्षीणाः प्रजास्सर्वा राजा भव भवाय नः ।
ईतयो नुद भद्रं ते शन्तनोः कुलवर्धन ॥ २८

पीड्यन्ते ते प्रजास्सर्वा व्याधिभिर्भृशदारुणैः ।
अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि ॥ २९

व्याधीन् प्रणुद्य वीर त्वं प्रजा धर्मेण पालय ।
त्वयि जीवति मा राष्ट्रं विनाशमुपगच्छतु ॥ ३०

भीष्मः—

प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः ।

प्रतिज्ञां रक्षमाणस्य सद्वृत्तं स्मरतस्तथा ॥ ३१

ततः पौरा महाराज माता काली च मे शुभा ।

भृत्याः पुरोहिताचार्या ब्राह्मणाश्च बहुश्रुताः ॥ ३२

मामूचुर्भृशसन्तप्ता भव राजेति सन्ततम् ॥ ३२॥

प्रतीपरक्षितं राज्यं त्वां प्राप्य [1]विनशिष्यति ।

स त्वमस्मद्धितार्थं वै राजा भव महामते ॥ ३३॥

इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः ।

तेभ्यो न्यवेदयं तत्र प्रतिज्ञां पितृगौरवात् ॥ ३४॥

ऊर्ध्वरेता ह्यराजा च कुलस्यार्थे पुनः पुनः ॥ ३५

ततोऽहं प्राञ्जलिर्भूत्वा मातरं सम्प्रसादयम् ॥ ३५॥

नाम्ब शन्तनुना जातः कौरवं वंशमुद्वहन् ।

प्रतिज्ञां वितथां कुर्याम् इति राजन् पुनः पुनः ॥ ३६॥

विशेषतस्त्वदर्थं च [2]प्रतिज्ञां कृतवानहम् ।

अहं प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ॥ ३७॥

एवं तामनुनीयाहं मातरं [3]जनमेव च ।

अहं च भ्रातृदारेषु तदा व्यासं महामुनिम् ॥ ३८॥

सह मात्रा महाराज प्रसाद्य तमृषिं तदा ।

1. मा—न विनश्यतु । 2. ङ-म-मा—धुरि मां त्वं नियोजय ।
3. ङ—जनसंसदि ।

अपत्यार्थमयाचं वै प्रसादं कृतवांश्च सः ॥ ३९॥
[1]त्रीन पुत्रानजनयद्व्यासस् तदा भरतसत्तम ॥ ४०

अन्धः करणहीनत्वान्न वै राजा पिता तव ।
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः ॥ ४१

स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः ।
मा तात [2]कलहं कार्षी राज्यस्यार्धं प्रदीयताम् ॥ ४२

मयि जीवति राज्यं कम् सम्प्रशासेत् पुमानिह ।
माऽवमंस्था वचो मह्यं शममिच्छामि वस्सदा ॥ ४३

न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव ।
मतमेतत् पितुस्तुभ्यं गान्धार्या विदुरस्य च ॥ ४४

श्रोतव्यं खलु वृद्धानां मा विशङ्कीर्वचो मम ।
नाशयिष्यासि मा सर्वम् आत्मानं पृथिवीपते ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

॥ ५५ ॥ विवादपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ४५ श्लोकाः]

---

1. ङ-म — स त्रीन् पुत्रानजनयत् तदा भरतसत्तम ।
   मा—त्रीन् पुत्रानजनयत् तदा भरतसत्तम ? ।
2. ख-ङ-म-मा — साहसं ।

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

कृष्णेन पाण्डवान् प्रति द्रोणवाक्यानुवादः ॥ १ ॥ तथा भीष्मं प्रत्युक्तविदुरवचनानुवादः ॥ २ ॥ तथा गान्धारीवचनानुवादः ॥ ३ ॥

श्रीभगवान्—

भीष्मेणोक्ते ततो द्रोणो दुर्योधनमभाषत ।
मध्ये नृपाणां भद्रं ते वचनं वचनक्षमम् ॥ १

द्रोणः—

प्रातीपश्शन्तनुस्तात कुलस्यार्थे यथोत्थितः ।
तथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् ॥ २

तथा पाण्डुर्नरपतिस् सत्यसन्धो जितेन्द्रियः ।
राजा कुरूणां [1]धर्मात्मा सुव्रतस्सुसमाहितः ॥ ३

ज्येष्ठाय राज्यमददाद् धृतराष्ट्राय धीमते ।
[2]यवीयसस्तथा क्षत्तुः कुरुवंशविवर्धनः[3] ॥ ४

---

1. ख-ङ-म-मा—भद्रं ते 2. अ-क—इदमर्धं नास्ति
3. अ-क-ख-ग-म-मा—ततस्सिंहासने राजा स्थापयित्वैनमच्युतम् ।
वनं जगाम कौरव्यो भार्याभ्यां सहितो नृपः ॥
नीचैस्स्थित्वा तु विदुर उपास्ते तु विनीतवत् ।
प्रेष्यवत् पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ।
[ अधिकः पाठः ]

ततस्सर्वाः प्रजास्तात धृतराष्ट्रं जनाधिपम् ।
अन्वपद्यन्त विधिवद् यथा पाण्डुं नराधिपम् ॥　५

सन्धिविग्रह[1]तत्वज्ञो राज्ञो वैवाहिकक्रियाम् ।
अवैक्षत महातेजा भीष्मः कुरुपितामहः ॥　६

सिंहासनस्थो नृपतिर् धृतराष्ट्रो महामनाः ।
अन्वास्यमानस्सततं विदुरेण महात्मना ॥　७

नीचैस्स्थित्वा तु विदुर उपास्ते स्म विनीतवत् ।
प्रेष्यवत् पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ॥　८

कोशसंयमने दाने भृत्यानामन्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरस्सत्यसङ्गरः ॥　९

विसृज्य धृतराष्ट्राय राज्यं स विदुराय च ।
चचार पृथिवीं पाण्डुस् सर्वां परपुरञ्जयः ॥　१०

ततस्सिंहासने राजा स्थापयित्वैवमच्युतम् ।

---

1. ख-ग-घ — तत्त्वज्ञो राज्ञां वैवाहिकक्रियाम् ।
ङ-म — संयुक्तो राज्ञो वैवाहिकक्रियाम् ।
मा — संयुक्तो राज्ञो वैवाहिकीः क्रियाः ।

वनं जगाम कौरव्यो भार्याभ्यां सहितोऽनघ ॥ ११

कथं तस्य कुले जातः कुले भेदं करिष्यसि ।
सम्भूय भ्रातृभिस्सार्धं भुङ्क्ष्व भोगाञ्जनाधिप ॥ १२

[1]ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथञ्चन ।
भीष्मेण दत्त[2]मश्नामि न त्वया राजसत्तम ॥ १३

नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप ।
यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत् कुरु ॥ १४

दीयतां पाण्डुपुत्रेभ्यो राज्यार्धमरिकर्शन ।
सममाचार्यकं तात तव तेषां च मे सदा ॥ १५

अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ १६

श्रीभगवान्—

एवमुक्ते महाराज द्रोणेनामिततेजसा ।
व्याजहार ततो वाक्यं विदुरस्सत्यसङ्गरः ॥ १७

[3]पितुर्वचनमन्वीक्ष्य परिवृत्य च धर्मवित् ॥ १७॥

1. मा—अर्धत्रयं नास्ति 2. अ-क-ख-ग-घ-मा—मिच्छामि।
3. अ-क-म-मा—इदमर्धं नास्ति

विदुरः—

देवव्रत निबोधेदं वचनं मम भाषतः ॥ १८

प्रनष्टः कौरवो वंशश् त्वयाऽयं पुनरुद्धृतः ।
[1]त्वं मे विलपमानस्य वचनं समुपेक्षसे ॥ १९

कोऽयं दुर्योधनो नाम कुलेऽस्मिन् कुलपांसनः ।
[2]यस्य लोभाभिभूतस्य मतिं समनुवर्तसे ॥ २०

अनार्यस्याकृतज्ञस्य लोभेन हृतचेतसः ॥ २०॥

अतिक्रामति यश्शास्त्रं पितुर्धर्मार्थदर्शिनः ॥ २१

एते नश्यन्ति कुरवो दुर्योधनकृतेन वै ।
यथा ते न प्रणश्येयुर् महाराज तथा कुरु ॥ २२

मा चैव धृतराष्ट्रं च सर्वांश्चैव महाद्युते ।
चित्रकार इवालेख्यं कृत्वा राजन् विनाशय ॥ २३

प्रजापतिः प्रजास्सृष्ट्वा यथा संहरते प्रजाः ॥ २३॥

नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयम् ॥ २४

अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते ।
वनं गच्छ मया सार्धं धृतराष्ट्रेण चैव ह ॥ २५

बद्ध्वा वा निकृतिप्रज्ञं धार्तराष्ट्रं सुदुर्मतिम् ।

---

1. ख—त्वन्मे । अ-क-ग-ब—तन्मे ।
2. ख—इतः सार्धश्लोको नास्ति

[1]शाधीदं राज्य[2]मद्याशु पाण्डवैरभि[3]रक्षितम् ॥ २६

प्रसीद राजशार्दूल विनाशो दृश्यते महान् ।
पाण्डवानां कुरूणां च राज्ञाममिततेजसाम् ॥ २७

श्रीभगवान्—

विररामैवमुक्त्वा तु विदुरो दीनमानसः ।
प्रध्यायमानस्स तदा निश्वसंश्च पुनः पुनः ॥ २८

ततोऽस्य राज्ञस्सुबलस्य पुत्री
धर्मार्थयुक्तं कुलनाशभीता ।
दुर्योधनं पापमतिं नृशंसं
राज्ञां समक्षं सुतमाह कोपात् ॥ २९

गान्धारी—

ये पार्थिवा राजसभां प्रविष्टा
ब्रह्मर्षयो ये च सभासदोऽन्ये ।
शृण्वन्तु वक्ष्यामि तथाऽपराधं
पापस्य सामात्यपरिच्छदस्य ॥ ३०

राज्यं कुरूणामनुभूतभोग्यं
क्रमागतो नः कुलधर्म एषः ।

---

1. ख—साध्वीदम् । ङ-म—साध्विदम्
2. ख-ग-घ-ङ—माच्छिद्य । म-मा—मासाद्य ।
3. म-मा—रक्ष्यताम् ।

त्वं पापबुद्धे सुनृशंसकर्मा
राज्यं कुरूणामनयाद्धि हंसि ॥ ३१

राज्ये स्थितो धृतराष्ट्रो मनीषी
तस्यानुजो विदुरो दीर्घदर्शी ।
एतावतिक्रम्य कथं नृपत्वं
दुर्योधन प्रार्थयसेऽद्य मोहात् ॥ ३२

राजा च क्षत्ता च महानुभावौ
भीष्मे स्थिते परवन्तौ भवेताम् ।
अयं तु धर्मज्ञतया महात्मा
न राज्यकामो नृवरो नदीजः ॥ ३३

राज्यं तु पाण्डोरिदमप्रधृष्यं
तस्याद्य पुत्राः प्रभवन्ति नान्ये ।
राज्यं तदेतन्निखिलं पाण्डवानां
पैतामहं पुत्रपौत्रानुगामि ॥ ३४

यद्वै ब्रूते कुरुमुख्यो महात्मा
देवव्रतस्सत्यसन्धो मनस्वी ।
सर्वं तदस्माभिरधीत्य धर्मं
ग्राह्यं स्वधर्मान् परिपालयद्भिः ॥ ३५

अनुज्ञया चाथ महाव्रतस्य
ब्रूयान्नृपोऽयं विदुरस्तथैव ।

कार्यं भवेत् तत् सुहृद्भिर्नियोज्यं
धर्मं पुरस्कृत्य सुदीर्घकालम् ॥ ३६

न्यायागतं राज्यमिदं कुरूणां
युधिष्ठिरश्शास्तु वै धर्मपुत्रः ।
प्रचोदितो धृतराष्ट्रेण राज्ञा
पुरस्कृतश्शान्तनवेन चैव ॥ ३७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चविंशदधिकशततमोऽध्यायः ॥ १२५ ॥
॥ ५५ ॥ विवादपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ३७ श्लोकः ]

---

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

---

कृष्णेन पाण्डवान् प्रति धृतराष्ट्रेण दुर्योधनं प्रत्युक्तवचनानुवादः ॥१॥

---

श्रीभगवान्—

एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः ।
दुर्योधनमुवाचेदं राजमध्ये जनाधिप ॥ १

धृतराष्ट्रः—

दुर्योधन निबोधेदं यत् त्वां वक्ष्यामि पुत्रक ।
तथा तत् कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ २

सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः ।
सोमाद्बभूव षष्ठोऽयं ययातिर्नहुषात्मजः ॥　　३

तस्य पुत्रा बभूवुर्हि पञ्च राजर्षिसत्तमाः ।
तेषां यदुर्महातेजा ज्येष्ठस्समभवत् प्रभुः ॥　　४

पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः ।
शर्मिष्ठया सम्प्रसूतो दुहित्रा वृषपर्वणः ॥　　५

यदुश्च भरतश्रेष्ठ देवयान्यास्सुतोऽभवत् ।
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥　　६

यादवानां कुलकरो बलवान् वीर्यसम्मतः ।
अवमेने स तु क्षत्रं दर्पपूर्णस्सुमन्दधीः ॥　　७

न चातिष्ठत् पितुश्शास्त्रे बलदर्पविमोहितः ।
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥　　८

पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली ।
वशे कृत्वा स नृपतीन् न्यवसन्नागसाह्वये ॥　　९

तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः ।
शशाप पुत्रं गान्धारे राज्याच्च व्यवरोपयत् ॥　　१०

ये चैनमन्ववर्तन्त भ्रातरो बलदर्पितम् ।
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥　　११

यवीयांसं ततः पूरुं पुत्रं तं वंशवर्धनम् ।

राज्ये निवेशयामास विधेयं नृपसत्तमः ॥ १२

एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिपद्यते ।
यवीयांसः प्रपद्यन्ते राज्यं वृद्धोपसेवया ॥ १३

तथैव सर्वधर्मज्ञः पितुर्मम पितामहः ।
प्रतीपः पृथिवीपालस् त्रिषु लोकेषु विश्रुतः ॥ १४

तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ।
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥ १५

देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम् ।
तृतीयश्शन्तनुस्तात धृतिमान्मे पितामहः ॥ १६

देवापिस्तु महातेजास् त्वग्दोषी राजसत्तमः ।
धार्मिकस्सत्यवादी च पितृशुश्रूषणे रतः ॥ १७

पौरजानपदानां च सम्मतस्साधुसत्कृतः ।
सर्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः ॥ १८

प्राज्ञश्च सत्यसन्धश्च सर्वभूतहिते रतः ।
वर्तमानः पितुश्शास्त्रे ब्राह्मणानां तथैव च ॥ १९

बाह्लीकस्य प्रियो भ्राता शन्तनोश्च महात्मनः ।
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ॥ २०

अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः ।
सम्भारानभिषेकार्थं मङ्गलार्थानि च प्रभुः ॥ २१

मङ्गलानि च सर्वाणि कारयामास चाभिभूः ॥　२१॥

तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैस्सह ।
सर्वे निवारयामासुर् देवापेरभिषेचनम् ॥　२२॥

स तच्छ्रुत्वा तु नृपतिर् अभिषेकनिवारणम् ।
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् ॥　२३॥

एवं वदान्यो धर्मज्ञस् सत्यसन्धश्च सोऽभिभूः ।
प्रियः प्रजानामपि संस् त्वग्दोषेण प्रदूषितः ॥　२४॥

हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।
इति कृत्वा नृपश्रेष्ठ प्रत्यषेधन् द्विजर्षभाः ॥　२५॥

ततः प्रव्यथि[1]ताङ्गोऽसौ पुत्रशोकसमन्वितः ।
ममार तं मृतं दृष्ट्वा देवापिस्संश्रितो वनम् ॥　२६॥

बाह्लीको मातुलकुलं त्यक्त्वा राज्यं समाश्रितः ।
पितॄन् भ्रातॄन् परित्यज्य प्राप्तवान् परमर्धिमन् ॥　२७॥

बाह्लीकेन त्वनुज्ञातश् शन्तनुर्लोकविश्रुतः ।
पितर्युपरते राजन् राजा राज्यमकारयत् ॥　२८॥

तथैवाहं मतिमता परिचिन्त्येह पाण्डुना ।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥　२९॥

पाण्डुस्तु राज्यं सम्प्राप्तः कनीयानपि सन् नृपः ॥　३०

---

1. म-मा—तात्माऽसौ ।

विनाशे तस्य पुत्राणाम् इदं राज्यमरिन्दम ।
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ॥ ३१

अराजपुत्रो ह्यस्वामी परस्वं हर्तुमिच्छसि ॥ ३१॥

युधिष्ठिरो राजपुत्रो महात्मा
न्यायागतं राज्यमिदं च तस्य ।
स कौरवस्यास्य कुलस्य भर्ता
प्रशासिता चैव महानुभावः ॥ ३२॥

स सत्यसन्धस्सततात्रमत्तश्
शास्त्रे स्थितो बन्धुजनस्य साधुः ।
प्रियः प्रजानां सुकृतानुकम्पी
जितेन्द्रियस्साधुजनस्य भर्ता ॥ ३३॥

क्षमा तितिक्षा दम आर्जवं च
सत्यव्रतत्वं श्रुतमप्रमादः ।
भूतानुकम्पा ह्यनुशासनं च
युधिष्ठिरे राजगुणास्समस्ताः ॥ ३४॥

स राजपुत्रस्त्वमनार्यवृत्तो
लुब्धस्सदा बन्धुषु पापबुद्धिः ।
क्रमागतं राज्यमिदं परेषां
हर्तुं कथं शक्ष्यसि दुर्विनीत ॥ ३५॥

प्रयच्छ राज्यार्धमपेतमोहम्
सवाहनं त्वं सपरिच्छदं च ।
ततोऽवशेषं तव जीवितस्य
सहानुजस्यैव भवेन्नरेन्द्र ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
॥ ५५ ॥ विवादपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ३६॥ श्लोकाः]

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

कृष्णेन पाण्डवान् प्रति भीष्मादिवचनमवधूय समुत्थितेन दुर्योधनेन चोदितानां राज्ञां भीष्मं पुरस्कृत्य सेनाभिस्सह कुरुक्षेत्रप्रस्थानकथनम् ॥ १ ॥ तथा स्वेन सामादित्रयप्रयोगेऽप्यवशीभूते दुर्योधने दण्डस्यैव प्रयोक्तव्यत्वकथनम् ॥ २ ॥

श्रीभगवान्—

एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण न वै मन्दोऽन्वबुध्यत ॥ १

अवधूयोत्थि[1]तो मन्दः क्रोधसंरक्तलोचनः ॥ १॥
अन्वद्रवन्त तं पश्चाद् राजानस्त्यक्तजीविताः ॥ २

1. ख-ग-घ-ङ-म-मा—तः क्रुद्धो रोषात् सङ्क्रुद्ध ।

आज्ञापयच्च राज्ञस्तान् [1]पार्थिवान् नष्टचेतनः ।
[2]प्रयान्तु वै कुरुक्षेत्रं अद्यैवेति पुनः पुनः ॥ ३

ततस्ते पृथिवीपालाः प्रययुस्सहसैनिकाः ।
भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ॥ ४

अक्षौहिण्यो दशैका च पार्थिवानां समागताः ।
तासां प्रमुखतो भीष्मस् तालकेतुर्व्यरोचत ॥ ५

यदत्र युक्तं प्राप्तं च तद्विधत्स्व विशाम्पते ॥ ५॥

उक्तं भीष्मेण यद्वाक्यं द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण समक्षं मम भारत ॥ ६॥

एतत् ते कथितं राजन् यद्वृत्तं कुरुसंसदि ॥ ७

साम चादौ प्रयुक्तं मे राजन् सौभ्रात्रमिच्छता ।
अभेदात् कुरुवंशस्य प्रजानां च विवृद्धये ॥ ८

पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते ।
कर्मानुकीर्तनं चैव देवमानुषसंहितम् ॥ ९

यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः ।
तदा मया समानीय भेदितास्सर्वपार्थिवाः ॥ १०

---

1. ङ—पार्थिवो दुष्टचेतनः । म-मा—पार्थिवान् दुष्टचेतसः ।
ख—पार्थिवान् नष्टचेतसः ।
2. ख—प्रयात । म—प्रयाध्वं ।
मा—प्रयास्यध्वं कुरुक्षेत्रं ।

अद्भुतानि च घोराणि दारुणानि च भारत ।
अमानुषाणि कर्माणि दर्शितानि मया विभो ॥  ११

निर्भर्त्सयित्वा राज्ञस्तांस् तृणीकृत्य सुयोधनम् ।
राधेयं भीषयित्वा च सौबलं च पुनः पुनः ॥  १२

न्यूनतां धार्तराष्ट्राणां निन्दां कृत्वा पुनः पुनः ।
भेदयित्वा नृपान् सर्वान् वाग्भिर्मन्त्रेण चासकृत् ॥  १३

पुनस्सामाभिसंयुक्तं सम्प्रदानमथाब्रवम् ।
अभेदात् कुरुवंशस्य कार्ययोगात् तथैव च ॥  १४

ते शूरा धृतराष्ट्रस्य भीष्मस्य विदुरस्य च ।
तिष्ठेयुः पाण्डवास्सर्वे हित्वा मानमधश्चराः ॥  १५

प्रयच्छन्तु च ते राज्यम् अनीशास्ते भवन्तु च ।
यथाऽऽह राजा गाङ्गेयो विदुरश्च तथाऽस्तु ते ॥  १६

सर्वं भवतु ते राज्यं पञ्च ग्रामान् विसर्जय ।
अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥  १७

एवमुक्तोऽपि दुष्टात्मा नैव भागं व्यमुञ्चत ।
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥  १८

निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ।
एतत् ते कथितं राजन् यद्वृत्तं कुरुसंसदि ॥  १९

न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव ।
विनाशहेतवस्सर्वे प्रत्युपस्थितमृत्यवः ॥ २०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ ५५ ॥ विवादपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[ अस्मिन्नध्याये २० श्लोकाः ]

[ विवादपर्व समाप्तम् ]

---

## ॥ अष्टात्रिंशदधिकशततमोऽध्यायः ॥

(अथ सैन्यनिर्याणपर्व)

युधिष्ठिरेण भ्रातॄन् प्रति कस्यचित् सेनापतित्वकल्पने स्वस्वाभिप्रायनिवेदनचोदना ॥ १ ॥ तैः स्वस्वाभिप्रायनिवेदनानन्तरं युधिष्ठिरेण श्रीकृष्णं प्रति तदभिप्रायनिवेदनप्रार्थना ॥ २ ॥ श्रीकृष्णेन धृष्टद्युम्नस्य सेनापतित्वेन वरणस्य स्वाशिमतत्वकथने राज्ञां हर्षात् समुद्घोषः ॥ ३ ॥ युधिष्ठिरादीनां सर्वेषां कुरुक्षेत्रप्रवेशः ॥ ४ ॥

---

वैशम्पायनः—

जनार्दनवचश्श्रुत्वा धर्मराजो युधिष्ठिरः ।
भ्रातॄनुवाच धर्मात्मा समक्षं केशवस्य ह ॥ १

युधिष्ठिरः—

श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि ।
केशवस्यापि यद्वाक्यं तत् सर्वमवधारितम् ॥ २

तस्मात् सेनाविभागं मे कुरुध्वं नरसत्तमाः ॥		२॥

अक्षौहिण्यस्तु सप्तैतास् समेता विजयाय वै ।
तासां ये पतयस्सप्त विख्यातास्तान् निबोधत ॥		३॥

द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ ।
सात्यकिश्चेकितानश्च भीमसेनश्च वीर्यवान् ॥		४॥
एते सेनाप्रणेतारो वीरास्सर्वे तनुत्यजः ॥		५

सर्वे वेदविदश्शूरास् सर्वे सुचरितव्रताः ।
ह्रीमन्तो नीतिमन्तश्च सर्वे [1]युद्धविशारदाः ॥		६

इष्वस्त्रकुशलाश्चैव तथा सर्वास्त्रयोधिनः ॥		६॥

सप्तानामपि यो नेता सेनानां प्रविभागवित् ।
यस्सहेत रणे भीष्मं शरार्चिःपावकोपमम् ॥		७॥

त्वं तावत् सहदेवात्र प्रब्रूहि कुरुनन्दनं ।
स्वमतं पुरुषव्याघ्र को नस्सेनापतिः क्षमः ॥		८॥

सहदेवः—

[2]संयुक्त एव पुत्रैश्च कोशवांश्च महीपतिः ॥		९

यं समाश्रित्य धर्मज्ञं स्वमंशमनुयुञ्ज्महे ।
मात्स्यो विराटो बलवान् कृतास्त्री युद्धदुर्मदः ॥		१०
प्रसहिष्यति सङ्ग्रामे भीष्मं तांश्च महारथान् ॥		१०॥

1. म-मा—शास्त्र		2. अ-क-मा—संयुक्त एकदुःखश्च

वैशम्पायनः—

तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः ।
नकुलोऽनन्तरं तस्माद् इदं वचनमाददे ॥ ११॥

नकुलः—

वयसा शास्त्रतो धैर्यात् कुलेनाभिजनेन च ।
ह्रीमान् [1]बलान्वितश्श्रीमान् सर्वशस्त्रभृतां वरः ॥ १२॥

वेद चास्त्रं भरद्वाजाद् दुर्धर्षस्सत्यसङ्गरः ॥ १३

यो नित्यं स्पर्धते द्रोणं भीष्मं चैव महाबलः ।
श्लाघ्यः पार्थिवसङ्घस्य प्रमुखे वाहिनीपतिः ॥ १४

पुत्रपौत्रैः परिवृतश् शतशाख इव द्रुमः ।
यस्तताप तपो घोरं सदारः पृथिवीपतिः ॥ १५

रोषाद्द्रोणविनाशाय वीरस्समितिशोभनः ।
पितेवास्मान् समाधत्त यस्सदा पार्थिवर्षभः ॥ १६

श्वशुरो द्रुपदोऽस्माकं सेनामग्रे प्रकर्षतु ।
स द्रोणभीष्मावायातौ सहेदिति मतिर्मम ॥ १७

स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ॥ १७॥

वैशम्पायनः—

माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः ।
वासविर्वासवसमस् सव्यसाच्यब्रवीदिदम् ॥ १८॥

---

1. ख-ब-ङ-म—कुलान्वित

अर्जुनः—

योऽयं तपःप्रभावेन ऋषिसन्तोषणेन च ।
दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाबलः ॥ १९॥
धनुष्मान् कवची खड्गी रथमारुह्य दंशितः ।
दिव्यैर्हयवरैर्युक्तम् अग्निकुण्डात् समुत्थितः ॥ २०॥
गर्जन्निव महामेघो रथघोषेण वीर्यवान् ।
सिंहसंहननो वीरस् सिंहविक्रान्तविक्रमः ॥ २१॥
सिंहोरस्को महाबाहुस् सिंहवक्षा महाबलः ।
[1]सिंहवद्गर्जितो वीरस् सिंहस्कन्धो महाद्युतिः ॥ २२॥
सुभ्रूस्सुदंष्ट्रस्सुतनुस् सुनसस्सुमुखोऽकृशः ।
सुजत्रुस्सुविशालाक्षस् सुपादस्सुप्रतिष्ठितः ॥ २३॥
अभेद्यस्सर्वशस्त्राणां प्रभिन्न इव वारणः ।
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ॥ २४॥
धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान् ॥ २५
वज्राशनिसमस्पर्शान् दीप्तास्यानुरगानिव ।
यमदूतसमान् वेगे निपाते पावकोपमान् ॥ २६
[2]रामेणाजौ विषहितान् वज्रनिष्पेषगौरवान् ॥ २६॥
पुरुषं तं न पश्यामि यस्सहेत महाव्रतम् ।

1. अ-क—इदमर्धं नास्ति  2. अ-क—नास्तीदमर्धम्

धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः ॥ २७॥

क्षिप्रहस्तः [1]क्षिप्रयोधी मतस्सेनापतिर्मम ।

अभेद्यकवचश्श्रीमान् मातङ्ग इव यूथपः ॥ २८॥

वैशम्पायनः—

[2]अर्जुनेनैवमुक्ते तु भीमो वाक्यं समाददे ॥ २९

भीमः—

वधार्थं यस्समुत्पन्नश् शिखण्डी द्रुपदात्मजः ॥ २९॥

वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः ।

यस्य सङ्ग्राममध्येषु दिव्यमस्त्रं प्रकुर्वतः ॥ ३०॥

रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः ॥ ३१

न तं युद्धे प्रपश्यामि यो [3]युद्ध्येत्तु शिखण्डिना ॥ ३१॥

शस्त्रेण समरे राजन् सन्नद्धं स्यन्दने स्थितम् ।

द्वैरथे विषहेतासौ भीष्मं राजन् महाव्रतम् ॥ ३२॥

शिखण्डिनमृते राजन् न मे सेनापतिर्मतः ॥ ३३

युधिष्ठिरः—

सर्वस्य जगतस्तात सारासारं बलाबलम् ।

सर्वं जानाति धर्मात्मा [4]मतमेषां च केशवः ॥ ३४

---

1. मा—चित्रयोधी 2. अ-क-ख-म-मा—इदमर्धं नास्ति

3. ख-ग-ङ-म-मा—विभिन्द्याच्छिखण्डिनम्

1. ख-ग-ङ-मा—गतमेष्यञ्च

यमाह कृष्णो दाशार्हस् सोऽस्तु [1]सेनापतिर्मम ।
कृतास्त्रोऽप्यकृतास्त्रो वा वृद्धो वा यदि वा युवा ॥ ३५

एष मे विजये मूलम् एष तात विपर्यये ।
अत्र प्राणाश्च राज्यं च [2]लाभालाभौ सुखासुखे ॥ ३६

एष धाता विधाता च सिद्धिरत्र प्रतिष्ठिता ॥ ३६॥

[3]यमाह कृष्णो दाशार्हस् स नस्सेनापतिः क्षमः ।
ब्रवीतु वदतां श्रेष्ठो निशा समभिवर्तते ॥ ३७॥

ततस्सेनापतिं कृत्वा कृष्णस्य वशवर्तिनम् ।
रात्रिशेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम् ॥ ३८॥

अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः ॥ ३९

**वैशम्पायनः—**

तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः ।
अब्रवीत् पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ॥ ४०

**श्रीभगवान्—**

ममाप्येते महाराज भवद्भिर्य उदाहृताः ।
नेतारस्तव सेनायाश् शूरा विक्रान्तयोधिनः ॥ ४१

सर्व एते समर्था हि तव शत्रून् विमर्दितुम् ॥ ४१॥

---

1. घ-ङ-म-मा—नो वाहिनीपतिः ।
2. ख-घ-ङ-म-मा—भावाभावौ
3. अ-क—इदमर्धं नास्ति

इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे ।
[1]किं पुनर्धार्तराष्ट्राणां क्रुद्धानां पापचेतसाम् ॥ ४२॥

मयाऽपि हि महाबाहो त्वत्प्रियार्थमरिन्दम ।
कृतो यत्नो महांस्तत्र शमस्स्यादिति भारत ॥ ४३॥

धर्मस्य [2]गतमानृण्यं न स्म वाच्यो विवक्षताम् ॥ ४४

कृतार्थं मन्यते बालस् सो त्मानमविचक्षणः ।
धार्तराष्ट्रो बलस्थं च [3]पश्यत्यात्मानमातुरः ॥ ४५

युज्यतां वाहिनी साधु वधसाध्या हि मे मताः ।
न धार्तराष्ट्राश्शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयम् ॥ ४६

भीमसेनं च सङ्क्रुद्धं यमौ चापि यमोपमौ ।
युयुधानद्वितीयं च धृष्टद्युम्नममर्षणम् ॥ ४७

अभिमन्युं द्रौपदेयान् विराटद्रुपदावपि ।
अक्षौहिणीपतींश्चान्यान् नरेन्द्रान् दृढविक्रमान् ॥ ४८

सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ।
[4]धार्तराष्ट्रबलं सङ्ख्ये हनिष्यति न संशयः ॥ ४९

धृष्टद्युम्नमहं मन्ये सेनापतिमरिन्दम ॥ ४९॥

वैशम्पायनः—

एवमुक्ते तु कृष्णेन सम्प्राहृष्यन् नरोत्तमाः ॥ ५०

---

1. अ-क—अर्धद्वयं नास्ति
2. घ-ङ—कृत
3. ख-घ-ङ-म-मा—मन्यतेत्मान
4. अ-क—अर्धद्वयं नास्ति

तेषां प्रहृष्टमनसां नादस्समभवन्महान् ।
[1]योजयित्वाऽथ सैन्यानां त्वरतां सम्प्रधावताम् ॥ ५१

हयवारणशब्दाश्च नेमिघोषाश्च सर्वशः ।
शङ्खदुन्दुभिघोषाश्च तुमुलास्सर्वतोऽभवन् ॥ ५२

प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः ।
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ॥ ५३

अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ ।
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः ॥ ५४

प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः ॥ ५४॥

ततश्शब्दस्समभवत् समुद्रस्येव पर्वणि ।
हृष्टानां सम्प्रयातानां घोषो दिवमिवास्पृशत् ॥ ५५॥

प्रहृष्टा दंशिता योधाः परानीकविदारणाः ।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ५६॥

शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
कोशं यन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः ॥ ५७॥

फल्गु यच्च बलं किञ्चित् तथैव कृशदुर्बलम् ।
तत् सङ्गृह्य ययौ राजा ये चापि परिचारकाः ॥ ५८॥

उपप्लाव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।

---

1. अ-क-ख-म-मा—योग इत्यथ सैन्यानां चरतां सम्प्रबाधताम् ।

सह स्त्रीभिर्निववृते दासीदाससमावृता ॥ ५९॥

कृत्वा मूलप्रतीकारं गुल्मैस्स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥ ६०॥

ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः ।
स्तूयमाना ययू राजन् रथैर्मणिविभूषणैः ॥ ६१॥

केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः ।
श्रेणिमान् वसुदानश्च शिखण्डी चापराजितः ॥ ६२॥

हृष्टास्तुष्टाः कवचिनस् सशस्त्रास्समलङ्कृताः ।
राजानमन्वयुस्सर्वे परिवार्य युधिष्ठिरम् ॥ ६३॥

जघनार्धे विराटश्च याज्ञसेनश्च सौमकिः ।
[1]सुशर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ॥ ६४॥

रथायुतानि चत्वारि हयाः पञ्चगुणास्तथा ।
पत्तिसैन्यं दशगुणं सादिनामयुतानि षट् ॥ ६५॥

अनाधृष्टिश्चेकितानो [2]धृष्टकेतुश्च सात्यकिः ।
परिवार्य ययुस्सर्वे वासुदेवधनञ्जयौ ॥ ६६॥

आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।
पाण्डवास्समदृश्यन्त नर्दन्तो वृषभा इव ॥ ६७॥

---

1. अ-क-ख-ग-घ-ङ—सुधर्मा । मा—सुवर्मा
2. ग-घ-ङ-म—युयुधानोऽथ । मा—चेदिराजोऽथ

ते विगाह्य कुरुक्षेत्रं शङ्खान् दध्मुररिन्दमाः ।
तथैव दध्मतुश्शङ्खौ वासुदेवधनञ्जयौ ॥ ६८॥

पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ॥ ६९॥

शङ्खदुन्दुभि[1]संसृष्टस् सिंहनादस्तरास्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ॥ ७०॥

ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास ततस् सेनां राजा युधिष्ठिरः ॥ ७१॥

परिहृत्य श्मशानानि देवतायतनानि च ।
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ ७२॥

मधुरेऽनूषरे देशे शिवे पुण्ये महीपतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ७३॥

ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः ।
प्रययौ पृथिवीपालैर् वृतश्शतसहस्रशः ॥ ७४॥

विद्राव्य शतशो गुल्मान् धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत् समन्ताच्च पार्थेन सह केशवः ॥ ७५॥

शिबिरं [2]मापयामास धृष्टद्युम्नश्च पार्षतः ।

---

1. ख—निर्घोषस् ।　ग-घ-ङ—निर्घुष्टस् ।　म—संहृष्टस् ।
मा—सङ्घुष्टस् ।　2. ग—स्थापयामास

सात्यकिश्च रथोदारो युयुधानः प्रतापवान् ॥ ७६॥

आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ॥ ७७॥

खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ७८॥

विधिर्यश्शिबिरस्यासीत् पाण्डवानां महात्मनाम् ।
तद्विधानं नरेन्द्राणां कारयामास केशवः ॥ ७९॥

प्रभूतजलकाष्ठानि सुदुर्धर्षतराणि च ।
[1]भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ॥ ८०॥

शिबिराणि महार्हाणि राज्ञां तत्र पृथक् पृथक् ।
विमानानीव राजेन्द्र निविष्टानि महीतले ॥ ८१॥

तत्रासन् शिल्पिनः प्राज्ञा बहुशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याश्शास्त्रविशारदाः ॥ ८२॥

ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।
ससर्जरसपांसूनां राशयः पर्वतोपमाः ॥ ८३॥

बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ॥ ८४॥

महायन्त्राणि नाराचास् तोमराणि परश्वथाः ।

1. ख—इतः श्लोकद्वयं नास्ति ।

धनूंषि कवचादीनि सम्बभूवुर्नृणां तदा ॥ ८५॥

गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः ।
दृश्यन्ते तत्र गिर्याभास्[1]सहस्रशतयोधिनः ॥ ८६॥

निविष्टान् पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत ।
अभिजग्मुर्यथोद्देशं सबलास्सपदानुगाः ॥ ८७॥

चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः ।
जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ ८८॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
॥ ५६ ॥ सैन्यनिर्याणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ८८॥ श्लोकाः ]

---

## ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

कर्णादीन् प्रति दुर्योधनेन साङ्ग्रामिकसामग्रीसम्पादनचोदनम् ॥१॥
तच्चोदनया राज्ञां सेनाभिस्सह कुरुक्षेत्रप्रस्थानम् ॥ २ ॥

---

जनमेजयः—

युधिष्ठिरं सहानीकम् उपायान्तं युयुत्सया ।
सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ १

विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम् ।

---

1. घ-ङ—शतशोऽथ सहस्रशः

केकयैर्वृष्णिभिश्चैव पार्थिवैश्शतशो वृतम् ॥ २

महेन्द्रमिव चादित्यैर् अभिगुप्तं महारथैः ।
श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत ॥ ३

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
सम्भ्रमे तुमुले तस्मिन् यदासीत् कुरुजाङ्गले ॥ ४

व्यथयेयुरिमे देवान् सेन्द्रानपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५

धृष्टद्युम्नश्च पाञ्चाल्यश् शिखण्डी च महारथः ।
युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ॥ ६

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ७

वैशम्पायनः—

प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुश्शासनं चैव शकुनिं चाब्रवीदिदम् ॥ ८

दुर्योधनः—

अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
[1]स एनान् मन्युनाऽऽविष्टो ध्रुवं धक्ष्यत्यसंशयम् ॥ ९

इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ १०

---

1. ख-घ-ङ-म-मा—अदानान्मन्युना ।

अजातशत्रुरत्यर्थं भीमार्जुनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैस्सहोदरैः ॥	११

विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥	१२

भाविता विग्रहस्सोऽयं तुमुलो रोमहर्षणः ।
तस्मात् साङ्ग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥	१३

शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
सुपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥	१४

आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः ।
अच्छेद्याहारमार्गाणि [1]रत्नोच्छ्रयचितानि च ॥	१५

विविधायुधपूर्णानि पताकाध्वजवन्ति च ।
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ॥	१६
प्रयाणं घुष्यतामद्य श्वोभूत इति मा चिरम् ॥	१६॥

वैशम्पायनः—
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ।
हृष्टरूपा महात्मानो [2]निवासाय महीक्षिताम् ॥	१७॥

ततस्ते पार्थिवास्सर्वे तच्छ्रुत्वा राजशासनम् ।
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः ॥	१८॥

बाहून् परिघसङ्काशान् संस्पृशन्तश्शनैस्ततः ।

---
1. ङ-म-मा—रत्नोच्चययुतानि च। 2. ख-घ-ङ-म-मा—विनाशाय।

काञ्चनाङ्गददीप्तांश्च चन्दनागरु[1]भूषितान् ॥ १९॥

उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
[2]अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ २०॥

ते रथान् रथिनश्श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षा[3]स्वनुष्ठिताः ॥ २१॥

अथ वर्माणि शस्त्राणि कवचानि बहूनि च ।
विविधानि च तीक्ष्णानि चक्रुस्सज्जानि सर्वशः ॥ २२॥

पदातयश्च पुरुषाश् शस्त्राणि विविधानि च ।
उपाजह्रुश्शरीरेषु हेमचित्राण्यनेकशः ॥ २३॥

तदुत्सव इवोदग्रं सम्प्रहृष्टनराघृतम् ।
नगरं धार्तराष्ट्रस्य भारतासीत् समाकुलम् ॥ २४॥

जनौघसलिलावर्तो रथनागाश्वमीनवान् ।
शङ्खदुन्दुभिनिर्घोषः कोशसञ्चयरत्नवान् ॥ २५॥

चित्राभरणवर्मोर्मिश् शस्त्रनिर्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाग्रहः ॥ २६॥

योगचन्द्रोदयोद्भूतः कुरुराजबलार्णवः ।
व्यदृश्यत तदा राजंश् चन्द्रोदय इवार्णवः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
॥ ५६ ॥ सैन्यनिर्याणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. मा—रूषितान् ।
2. अ-क—इदमर्धं नास्ति 3. मा—सु निष्ठिताः ।

## ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥

कर्तव्यमौढ्यमुपगतेन युधिष्ठिरेण कर्तव्यनिर्धारणप्रार्थना ॥ १ ॥ कृष्णेन युद्धकरणनिर्धारणम् ॥ २ ॥ गुरुवधभयात् पुनर्युधिष्ठिरस्य शङ्कायामर्जुनेन कुन्ती विदुरवचनानुस्मारणेन तत्परिहरणम् ॥ ३ ॥

---

**वैशम्पायनः—**

वासुदेवस्य तद्वाक्यम् अनुस्मृत्य युधिष्ठिरः ।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ १

अस्मिन्नभ्यागते काले किञ्च नः क्षममच्युत ।
कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ २

दुर्योधनस्य कर्णस्य शकुनेस्सौबलस्य च ॥
[1]वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ३

विदुरस्यापि तद्वाक्यं श्रुतं भीष्मस्य चोभयोः ।
कुन्त्याश्च विपुलप्रज्ञा प्रज्ञा कात्स्न्र्येन ते श्रुता ॥ ४

सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः ।
यन्नः क्षमं महाबाहो तद्ब्रवीह्यविचारयन् ॥ ५

श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः ।

---

1. म—अर्धचतुष्टयं नास्ति

मेघदुन्दुभिनिर्घोषः कृष्णो वाक्यमथाब्रवीत् ॥ ६

श्रीभगवान्—

उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम् ।
न तु तं निकृतिप्रज्ञे [1]कौरव्ये प्रतितिष्ठति ॥ ७

न च भीष्मस्य दुर्मेधाश्शृणोति विदुरस्य वा ।
मम वा भाषितं किञ्चित् सर्वमेतन्निरर्थकम् ॥ ८

नैष कामयते धर्मं नैष कामयते यशः ।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ॥ ९

बन्धमाज्ञापयामास मम चापि सुयोधनः ।
न च तं लब्धवान् कामं दुरात्मा शासनातिगः ॥ १०

न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः ।
सर्वे [2]तमनुवर्तन्ते ऋते विदुरमच्युत ॥ ११

शकुनिस्सौबलश्चैव कर्णदुश्शासनावपि ।
त्वय्ययुक्तान्यभाषन्त [3]मूढाः पण्डितमानिनः ॥ १२

किञ्चैतेन मयोक्तेन यान्यभाष[4]त कौरवः ।
सङ्क्षेपेण दुरात्माऽसौ न युक्तं त्वयि वर्तते ॥ १३

1. मा—कौरवे । 2. घ-ङ-म-मा—तमन्ववर्तन्त ।
3. ग—मन्दा दृढममर्षिणम् । घ-ङ—मूढा दृढममर्षिणः ।
म—मूढा मूढममर्षिणः । मा—मूढा मूढमनुव्रताः ।
4. ङ-मा—न्त कौरवाः ।

पार्थिवेषु न सर्वेषु य इमे तव सैनिकाः ।
यत् पापं यन्न कल्याणं सर्वं तस्मिन् प्रतिष्ठितम् ॥ १४

न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैश्शममिच्छामस् तुव युद्धमनन्तरम् ॥ १५

वैशम्पायनः—
तच्छ्रुत्वा पार्थिवास्सर्वे वासुदेवेन भाषितम् ।
अब्रुवन्तो मुखं राज्ञस् समुदैक्षन्त भारत ॥ १६

युधिष्ठिरस्त्वभिप्रायम् [1]अभिलक्ष्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैस्सह ॥ १७

ततः किलकिलाभूतम् अनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ १८

अवध्यानां वधं पश्यन् धर्मराजो युधिष्ठिरः ।
निश्श्वसन् भीमसेनं च विजयं चेदमब्रवीत् ॥ १९

युधिष्ठिरः—
यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोऽयमस्मा[2]नुपैत्येव परोऽनर्थः प्रयत्नतः ॥ २०

[3]यस्मिन् यत्नः कृतोऽस्माभिस् स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मान् उपावृत्तः कलिर्महान् ॥ २१

---

1. ङ-म-मा—मुपलभ्य ।
2. अ-क-ख—नुपेक्ष्यैव कृतानर्थप्रयत्नवान् ॥
3. ध—नास्तीदमर्धम्

कथं ह्यवध्यैस्सङ्ग्रामः कार्यस्सह भविष्यति ।
कथं हत्वा गुरून् वृद्धान् विजयो नो भविष्यति ॥ २२

वैशम्पायनः—
तच्छ्रुत्वा धर्म[1]राजस्य सव्यसाची परन्तपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ २३

अर्जुनः—
उक्तवान् देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत् त्वया राजन् निखिलेनावधारितम् ॥ २४
न च तौ वक्ष्यतोऽधर्मम् इति मे नैष्ठिकी मतिः ।
[2]नापि युक्तं च कौन्तेय निवर्तितुमयुद्धतः ॥ २५

वैशम्पायनः—
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीद्वाक्यं पार्थमेवमिति ब्रुवन् ॥ २६
ततस्ते धृतसङ्कल्पा युद्धाय सह सैनिकाः ।
पाण्डवेयां महाराज तां रात्रिं सुखमावसन् ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ ५६ ॥ सैन्यनिर्याणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २७ श्लोकाः]
[ सैन्यनिर्याणपर्व समाप्तम् ]

---

1. ख—राज्ञेन चिन्ताविष्टेन भाषितम् ।
2. ख—न चापि युद्धाच्छ्रेयोऽस्ति क्षत्रियस्य कदाचन ।
[ इति पाठान्तरम् ]

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

[ भीष्माभिषेचनपर्व ]

दुर्योधनेन स्वसेनानां अग्र्यमध्यमपाश्चात्यभेदेन त्रेधा विभजनम् ॥ १ ॥ तासां साङ्ग्रामिकोपकरणसमृद्धिवर्णनम् ॥ २ ॥ दुर्योधनेन कृपादीनामेकादशानां पृथक्पृथगक्षौहिण्यधिपतित्वेऽभिषेचनम् ॥ ३ ॥

वैशम्पायनः—

व्युषितायां रजन्यां तु राजा दुर्योधनस्ततः ।
व्यभजत् तान्यनीकानि दश चैकं च भारत ॥ १

नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु सन्दिदेश [1]नराधिपः ॥ २

सानुकर्षास्सतूणीरास् सवरूथास्सहर्ष्टयः ।
[2]सोपासङ्गास्सशक्तीकास् सनिषङ्गास्ससायकाः ॥ ३

सध्वजास्सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिस् सपाशास्सपरिस्तराः ॥ ४

सकचग्रहविक्षेपास् सतैलगुडवालुकाः ।
साशीविषघटास्सर्वे ससर्जरसपांसवः ॥ ५

सघण्टफलकास्सर्वे [3]सायोगुडवलोपलाः ।

---

1. ग-ब-ङ-म—महीपतिः । 2. अ-क—इदमर्धं नास्ति
3. ग—वासीवृक्षादनीयताः । ख—वासीवृक्षादनावृकाः ।
म—वासिवृक्षादनीघ्रताः । ङ-मा—वासिवृक्षादनीवृताः ।

[1]कङ्कालभिण्डिपालाश्च समधूच्छिष्टमुद्गराः ॥ ६
सकाण्डदण्डकास्सर्वे ससीरविषतोमराः ।
सऋष्टिपिटकास्सर्वे सदात्राङ्कुशतोमराः ॥ ७
सकीलक्रकचास्सर्वे वासीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा वृता गोद्वीपिचर्मभिः ॥ ८
[2]सवस्तयस्सश्शृङ्गाश्च सप्रासविविधायुधाः ।
सकुठारास्सकुद्दालास् सतैलक्षौद्रसर्पिषः ॥ ९
रुक्मजालप्रतिच्छन्ना नानामणिविभूषिताः ।
चित्रानीकास्सुवपुषो ज्वलिता इव पावकाः ॥ १०
तथा कवचिनश्शूराश् शस्त्रेषु कृतनिश्रमाः ।
कुलीना हययोनिज्ञास् सारथ्ये विनिवेशिताः ॥ ११
बद्धारिष्टा बद्धकक्ष्या बद्धध्वजपताकिनः ।
[3]बद्धाभरणनिर्यूहा बद्धवर्मासिपट्टसाः ॥ १२
चतुर्युजो रथास्सर्वे सर्वे चोत्तमवाससः ।
संहृष्टवाहनास्सर्वे सर्वे शस्त्रसमायुताः ॥ १३
धुर्ययोर्हययोरेकस् तथाऽन्यः पार्ष्णिसारथिः ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित् तथा ॥ १४

1. ख-ङ-म-मा—अर्धचतुष्टयं नास्ति
2. अ-क—इदमर्धं नास्ति
3. ङ-मा—इदमर्धं नास्ति

नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः ।
आसन् रथसहस्राणि हेममालीनि सर्वशः ॥ १५

यथा रथास्तथा नागा बद्धकक्ष्यास्स्वलङ्कृताः ।
बभूवुस्सप्तपुरुषा रत्नवन्त इवाद्रयः ॥ १६

द्वावङ्कुशधरौ तत्र द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकश्छत्रपताकधृत् ॥ १७

गजैर्मत्तैस्समाकीर्णं सर्वमायुध[1]कोशकैः ।
तद्बभूव बलं राजन् कौरव्यस्य सहस्रशः ॥ १८

विचित्रकवचैर्युक्तैस् सपताकैस्स्वलङ्कृतैः ।
सादिभिश्चोपपन्नास्तु आसन्नयुतशो हयाः ॥ १९

सुसङ्ग्राहास्सुसन्तोषा हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्रास् सर्वे सादिवशे स्थिताः ॥ २०

नानारूपविकाराश्च नानाकवचशस्त्रिणः ।
पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ २१

रथस्यासन् दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन् पादरक्षास्समन्ततः ॥ २२

रथस्य नागाः पञ्चाशन्नागस्यासन् शतं हयाः ।
हयस्य पुरुषास्सप्त भिन्नसन्धानकारिणः ॥ २३

---

1. अ-क-ख-ग-घ — कौशलैः ।

[1]पञ्चाशच्च शतञ्चाश्वा नराः पञ्चगुणास्ततः ।
सेना पञ्चशतं नागा रथास्तावन्त एव च ॥ २४

दश सेना च पृतना पृतना दश वाहिनी ॥ २४॥

[2]सेना तु वाहिनी चैव पृतना ध्वजिनी चमूः ।
अक्षौहिणीति पर्यायैर् निरुक्ता च वरूथिनी ॥ २५॥

एवं व्यूढान्यनीकानि कौरवेयेण धीमता ।
अक्षौहिण्यो दशैका च [3]सङ्ख्यातास्सप्त चैव ह ॥ २६॥

अक्षौहिण्यस्तु सप्तैव पाण्डवानां महद्बलम् ।
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ २७॥

नराणां पञ्चपञ्चाशद् एषा पत्तिर्विधीयते ।
सेनामुखं तु तिस्रस्ता गुल्म इत्यभिसंज्ञिताः ॥ २८॥

[4]दश गुल्मा गणस्त्वासीद् गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ २९॥

तत्र दुर्योधनो राजा शूरान् बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश् चक्रे सेनापतींस्तथा ॥ ३०॥

पृथगक्षौहिणीनां च प्रणेतॄन् नरसत्तमान् ।

---

1. अ-क-ख-म-मा—इदमर्धं नास्ति
2. ख-म-मा—वाहिनी पृतना सेना ध्वजिनी वाहिनी चमूः ।
[इति पाठान्तरम्]
3. अ-क-ख-ग-घ-ङ—सङ्ख्याते । 4. अ-क-ख-ग-घ-ङ—त्रयो

[1]विधिवत् पूर्वमानीय पार्थिवानभ्य[2]षेचयत् ॥ ३१॥
कृपं द्रोणं च शल्यं च सैन्धवं च [3]जयद्रथम् ।
सुदक्षिणं च काम्भोजं कृतवर्माणमेव च ॥ ३२॥
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महारथम् ॥ ३३॥
दिवसे दिवसे तेषाम् [4]प्रतिवेलं च भारत ।
चक्रे स विविधास्संज्ञाः प्रत्यक्षं च पुनः पुनः ॥ ३४॥
तथैव नियतास्सर्वे ये च तेषां पदानुगाः ।
बभूवुस्सैनिका राज्ञः प्रियं राजंश्चिकीर्षवः ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ ५७ ॥ भीष्माभिषेचनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ३५॥ श्लोकाः ]

## ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

दुर्योधनेन भीष्मं प्रति सैनापत्यस्वीकारप्रार्थना ॥ १॥ भीष्मेण समयप्रतिज्ञाकरणपूर्वकं सैनापत्याङ्गीकारः ॥ २ ॥ दुर्योधनेन भीष्मस्य सैनापत्येऽभिषेचनपूर्वकं सेनाभिस्सह कुरुक्षेत्रगमनम् ॥ ३ ॥

वैशम्पायनः—

ततश्शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैर् इदं वचनमब्रवीत् ॥ १

1 म-मा—विधिपूर्वं समानीय ।    2. अ-क-घ-ङ—भाषत
3. ख-ग-ङ-म—महारथम् ।    4. अ-क-ख-ग-घ-ङ—अनुवेलं

दुर्योधनः—

ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिक[1]गणो यथा ॥ २

न हि जातु द्वयोर्बुद्धिस् समा भवति कर्हिचित् ।
शौर्यं च जायते नृणां स्पर्धते च परस्परम् ॥ ३

श्रूयते च महाप्राज्ञ हेहयानमितौजसः ।
अभ्ययुर्ब्राह्मणास्सर्वे समुच्छ्रितकुशध्वजाः ॥ ४

तानन्वयुस्तदा वैश्याश् शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ५

ते स्म युद्धे प्रभज्यन्ते त्रयो वर्णाः पुनः पुनः ।
क्षत्रियाश्च जयन्त्येव बहुलं चैकतो बलम् ॥ ६

ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः ।
तेभ्यश्शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ७

वयमेकस्य शृणुमो महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक् सर्वे स्वबुद्धिवशवर्तिनः ॥ ८

ततस्ते ब्राह्मणाश्चक्रुर् एकं सेनापतिं द्विजम् ।
नयेषु कुशलं शूरम् अजयन् क्षत्रियांस्ततः ॥ ९

एवं ये कुशलं शूरं हिते स्थितमकल्मषम् ।

1. अ-क-ख-ग-म-मा—पुटं ।

सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ १०

भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्यस्स्थितो धर्मे स नस्सेनापतिर्भव ॥ ११

रश्मीवतामिवादित्यो [1]वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां देवानामिव वासवः ॥ १२

पर्वतानां यथा मेरुस् सुपर्णः पततामिव ।
कुमार इव भूतानां वसूनामिव हव्यवाट् ॥ १३

भवता हि वयं गुप्ताश् शक्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस् त्रिदशैरपि यद् ध्रुवम् ॥ १४

प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामस् सौरभेया इवर्षभम् ॥ १५

भीष्मः—

एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ १६

अपि चैव मया श्रेयो वाच्यं तेषां नराधिप ।
सुयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ १७

न तु पश्यामि योद्धारम् आत्मनस्सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात् कुन्तीपुत्राद्धनञ्जयात् ॥ १८

---

1. ङ-म-मा—मरुतामिव ।

स हि वेद महा[1]बुद्धिर् दिव्यान्यस्त्राण्यनेकशः ।
न तु मां विघृतो युद्धे जातु युध्येत पाण्डवः ॥ १९

अहं स च क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यावास्त्रबलेनैव ससुरासुरराक्षसम् ॥ २०

न त्वेवोत्सादनीया मे पाण्डोः पुत्रा जनाधिप ।
तस्माद्योधान् हनिष्यामि प्रयोगेणायुतं सदा ॥ २१

एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत् ते मां हनिष्यन्ति पूर्वमेव समागमे ॥ २२

सेनापतिस्त्वहं राजन् समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ २३

कर्णो वा युध्यतां पूर्वम् अहं वा पृथिवीपते ।
स्पर्धते हि सदाऽत्यर्थं सूतपुत्रो मया रणे ॥ २४

कर्णः—

नाहं जीवति गाङ्गेये राजन् योत्स्ये कथञ्चन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ २५

वैशम्पायनः—

ततस्सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥ २६

1. ख-ङ-म-मा—बाहुः ।

ततो भेरीश्च शङ्खांश्च [1]शतशश्चैव पुष्करान् ।
वादयामासुरव्यग्रा [2]वादका राजशासनात् ॥ २७

सिंहनादाश्च विविधा वाहनानां च निस्स्वनाः ।
निर्घाताः पृथिवीकम्पो गजबृंहितनिस्स्वनाः ॥ २८

आसंश्च सर्वयोधानां पीडयन्तो मनांस्युत ॥ २८॥

वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
प्रादुरासीदनभ्रे च वर्षं रुधिरकर्दमम् ॥ २९॥

शिवाश्च भयवेदिन्यो नेदुर्दीप्ततरा भृशम् ॥ ३०

सैनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि बभूवुश्शतशो नृप ॥ ३१

ततस्सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
[3]वाचयित्वा द्विजश्रेष्ठान् गोभिर्निष्कैश्च भूरिशः ॥ ३२

पूज्यमानो जयाशीर्भिर् निर्ययौ सैनिकैर्वृतः ॥ ३२॥

आपगेयं पुरस्कृत्य भ्रातृभिस्सहितस्तदा ।
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥ ३३॥

परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।
शिबिरं मापयामास समे देशे जनाधिपः ॥ ३४॥

---

1. अ-क-ख-घ-म—शतशोऽथ सहस्रशः । 2. ङ-मा—:पुरुषा ।
3. ङ—वाचितान्युग्ररूपाणि अभवन्शतशो नृप । [पाठान्तरम् ]

मधुरा[1]नूपके देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं शिबिरं तत् तथाऽभवत् ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ ५७ ॥ भीष्माभिषेचनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३५॥ श्लोकाः ]

## ॥ त्रयश्चत्वारिंशदधिकशततमोऽध्यायः ॥

युधिष्ठिरेण श्रीकृष्णानुमत्या द्रुपदादीनां सप्तानां पृथगक्षौहिण्याधिपत्येऽभिषेचनपूर्वकं धृष्टद्युम्नस्य सर्वसैन्याधिपत्येऽभिषेचनम् ॥ १ ॥ बलरामस्याक्रूरादिभिस्सह पाण्डवदिदृक्षया कुरुक्षेत्रागमनम् ॥ २ ॥ युधिष्ठिरादिपूजितस्य तस्य बन्धुनिधनावलोकनासहिष्णुतया तीर्थनिषेवणार्थं गमनम् ॥ ३ ॥

जनमेजयः—

आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥ १

बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थितम् ॥ २

प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥ ३

1. म-मा—नूपरे ।

रणयज्ञे [1]प्रवितते सुभीमे रोमहर्षणे ।
दीक्षितं चिररात्राय श्रुत्वा राजा युधिष्ठिरः ॥ ४
किमब्रवीन्महाबाहुस् सर्वधर्मविशारदः ।
भीमसेनार्जुनौ वाऽपि कृष्णो वा [2]प्रत्यभाषत ॥ ५

वैशम्पायनः—
आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान् भ्रातॄन् समानीय वासुदेवं च शाश्वतम् ॥ ६
उवाच वदतां श्रेष्ठस् सान्त्वपूर्वमिदं वचः ॥ ६॥

युधिष्ठिरः—
पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ।
पितामहेन वो युद्धं पूर्वमेव भविष्यति ॥ ७॥
तस्मात् सप्तसु सेनासु प्रणेतॄन् मम पश्यत ॥ ८

श्रीभगवान्—
यथाऽर्हति भवान् वक्तुम् अस्मिन् काले ह्युपस्थिते ।
तदेतदर्थवद्वाक्यम् उक्तं ते भरतर्षभ ॥ ९
रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव [3]सैन्यानां क्रियन्तामिह सप्त वै ॥ १०

---

1. ग—प्रतिभये सभीते ।　ख-घ-मा—प्रतिभये स्वाभीले ।
ङ—प्रतिभये विपुले ।　म—प्रतिभये स्वाभिले ।
2. ग—प्रतिपद्यताम् ।　व-ङ-मा—प्रतिपद्यत ।
म—प्रत्यपद्यत ।　ख—किं प्रपद्यत ।
3. ख-ग-घ-ङ—सेनायामभिषिञ्चन्तु ।
म-मा—सेनाया अभिषिच्यन्तु ।

वैशम्पायनः—

ततो द्रुपदमानीय विराटं शिनिपुङ्गवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम् ॥ ११

शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ।
एतान् सप्त महेष्वासान् वीरान् युद्धाभिनन्दिनः ॥ १२
सेनाप्रणेतॄन् विधिवद् अभ्यषिञ्चद्युधिष्ठिरः ॥ १२॥

सर्वसेनापतिं चात्र धृष्टद्युम्नमथादिशत् ।
द्रोणान्तहेतो[1]रुत्पन्नो य इद्धाज्जातवेदसः ॥ १३॥

[2]सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
[3]सेनापतिपतिं चक्रे गुडाकेशं धनञ्जयम् ॥ १४॥

अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
सङ्कर्षणानुजश्श्रीमान् महाबुद्धिर्जनार्दनः ॥ १५॥

तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ।
प्राविशद्भवनं राज्ञः पाण्डवस्य हलायुधः ॥ १६॥

सहाक्रूरप्रभृतिभिर् गदसाम्बोद्धवादिभिः ।
रौक्मिणेयाहुकयुतैश् चारुदेष्णपुरोगमैः ॥ १७॥

वृष्णिमुख्यैरुपगतैर् व्याघ्रैरिव मदोत्कटैः ।
अभिगुप्तो महाबाहुर् मरुद्भिरिव वासवः ॥ १८॥

---

1. ख-ग-घ—रुत्पन्नं समिद्धा । ङ-मा—रुत्पन्नो य इद्धा
2. अ-क-म—इदमर्धं नास्ति 3. म—अर्धद्वयं नास्ति

नीलकौशेयवसनः कैलासशिखरोपमः ।
सिंहखेलगतिश्श्रीमान् मदरक्तान्तलोचनः ॥ १९॥

तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ।
उदतिष्ठत् ततः पार्थो भीमकर्मा वृकोदरः ॥ २०॥

गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ।
पूजयाञ्चक्रुरभ्येत्य ते स्म सर्वे हलायुधम् ॥ २१॥

ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ।
वासुदेवपुरोगास्तं सर्व एवाभ्य[1]वादयन् ॥ २२॥

विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ।
युधिष्ठिरेण सहित उपाविशदरिन्दमः ॥ २३॥

ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ २४॥

बलरामः—

भविताऽयं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ २५॥

तस्माद्युद्धात् समुत्तीर्णान् अपि वस्ससुहृद्गणान् ।
अरोगानक्षतैर्देहैर् [2]द्रष्टास्मीति मतिर्मम ॥ २६॥

समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ।
विमर्दस्सुमहान् भावी मांसशोणितकर्दमः ॥ २७॥

---

1. ख-ग-म-मा—पूजयन्। 2. मा—पश्येयमिति मे मतिः।

उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
सम्बन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ २८॥
पाण्डवा हि यथाऽस्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां [1]साह्यं स पर्येति पुनः पुनः ॥ २९॥
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निविष्टस्सर्वभावेन धनञ्जयमवेक्ष्य ह ॥ ३०॥
ध्रुवो जयः पाण्डवानाम् इति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ३१॥
न चाहमुत्सहे कृष्णम् ऋते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ॥ ३२॥
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ॥ ३३॥
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
न हि शक्ष्यामि कौरव्यान् नश्यमानानवेक्षितुम् ॥ ३४॥

**वैशम्पायनः—**

एवमुक्त्वा महाबाहुर् अनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निमन्त्र्य मधुसूदनम् ॥ ३५॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्**
**उद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥१४२॥**
**॥ ५७ ॥ भीष्माभिषेचनपर्वणि तृतीयोऽध्यायः॥ ३ ॥**
**[ अस्मिन्नध्याये ३५॥ श्लोकाः ]**

---

1. ख-घ-ङ—युक्ता सपर्येति ।

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

श्रीकृष्णस्यालस्य रुक्मिणः पाण्डवानुपेत्य अर्जुनं प्रति तस्य भयविकल्पपूर्वकं दर्पात् स्वेन साहाय्यकरणोक्तिः ॥ १ ॥ अर्जुनेन तस्य प्रत्याख्यानम् ॥ २ ॥ दुर्योधनमेत्य तथाभाषिणस्तस्य तेनापि प्रत्याख्यानम् ॥ ३ ॥

वैशम्पायनः—

एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः ।
हिरण्यरोम्णो नृपतेस् साक्षादिन्द्रसखस्य वै ॥ १

आहृतीनामधिपतेर् भोजस्यातियशस्विनः ।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः ॥ २

यः किम्पुरुषसिंहस्य गन्धमादनवासिनः ।
कृत्स्नं शिष्यो धनुर्वेदं चतुष्पादमवाप्तवान् ॥ ३

यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा ।
शार्ङ्गेण च महाबाहुस् सम्मितं दिव्यमक्षयम् ॥ ४

त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम् ॥ ४॥

वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ।
शार्ङ्गं तु वैष्णवं प्राहुर् दिव्यं तेजोमयं धनुः ॥ ५॥

धारयामास तत् कृष्णः परसेनाभयावहम् ।
गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः ॥ ६॥

E—53

द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ॥ ७
सञ्छिद्य मौरवान् पाशान् निहत्य मुरमोजसा ।
निर्जित्य नरकं भौमम् आहृत्य मणिकुण्डले ॥ ८
षोडश स्त्रीसहस्राणि रत्नानि विविधानि च ।
प्रतिपेदे हृषीकेशश् शार्ङ्गं च धनुरुत्तमम् ॥ ९
रुक्मी तु विजयं लब्ध्वा धनुर्मेघनिभस्वनम् ।
विभीषयन्निव जगत् पाण्डवानभ्यवर्तत ॥ १०
नामृष्यत पुरा योऽसौ स्वबाहुबलदर्पितः ।
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ॥ ११
कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्ये जनार्दनम् ।
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरः ॥ १२
[1]सेनया चतुरङ्गिण्या महत्या दूरपातया ।
विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया ॥ १३
स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम् ।
व्यंसितो व्रीडितो राजा नाजगाम स कुण्डिनम् ॥ १४
यत्रैव कृष्णेन रणे निर्जितः परवीरहा ।
तत्र भोजकटं नाम कृतं नगरमुत्तमम् ॥ १५
सैन्येन महता तेन प्रभूतगजवाजिना ।

1. म—अर्धद्वयं नोपलभ्यते।

[1]पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ॥ १६

स भोजराजस्सैन्येन महता परिवारितः ।
अक्षौहिण्या महावीर्यः पाण्डवं क्षिप्रमागमत् ॥ १७

ततस्स कवची खड्गी तली धन्वी शरी रथी ।
रथेनादित्यवर्णेन प्रविवेश महाचमूम् ॥ १८

विदितः पाण्डवेयानां वासुदेवप्रियेप्सया ॥ १८॥

युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् ॥ १९

स पूजितः पाण्डुसुतैर् यथान्यायं सुसत्कृतः ।
प्रतिपूज्य च तान् सर्वान् विश्रान्तस्सहसैनिकः ॥ २०

उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम् ॥ २०॥

रुक्मी—

साहाय्येऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव ।
करिष्यामि रणे साह्यम् असह्यं तव शत्रुभिः ॥ २१॥

न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
[2]हरिष्यामि रणे भागं यन्मे दास्यसि पाण्डव ॥ २२॥

अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ।
अथवा सर्व एवैते तिष्ठन्तु वसुधाधिपाः ॥ २३॥

निहत्य समरे शत्रूंस् तव दास्यामि फल्गुन ॥ २४

1. अ-क—इदमर्धं नास्ति　2. ख-ब-ङ-म-मा—अर्धद्वयं न दृश्यते

वैशम्पायनः—

इत्युक्तो धर्मराजस्य केशवस्य च सन्निधौ ।
शृण्वतां पार्थिवेन्द्राणाम् अन्येषां चैव सर्वतः ॥ २५

वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम् ।
उवाच धीमान् कौन्तेयः प्रहस्य सखिपूर्वकम् ॥ २६

1अर्जुनः—

युध्यमानस्य मे वीर गन्धर्वैस्सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदाऽऽसीत् सखा मम ॥ २७

तदा प्रतिभये तस्मिन् देवदानवसङ्कुले ।
खाण्डवे युध्यमानस्य कस्सहायस्तदाऽभवत् ॥ २८

निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कस्सहायस्तदाऽभवत् ॥ २९

तथा विराटनगरे कुरुभिस्सह संयुगे ।
युध्यतो बहुभिस्तत्र कस्सहायस्तदाऽभवत् ॥ ३०

उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ॥ ३१

धारयन् गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ।

---

1. अ-क-ग—कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ।
द्रोणं व्यपदिशन् शिष्यो वासुदेवसहायवान् ॥
भीतोऽस्मीति कथं ब्रूयां वृथा नो गाण्डिवं धनुः ॥
[अधिकः पाठः]

अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ॥ ३२

[1]कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ।
द्रोणं व्यपदिशञ्छिष्यो वासुदेवसहायवान् ॥ ३३

कथमस्मद्विधो ब्रूयाद् भीतोऽस्मीत्ययशस्करम् ।
वचनं नरशार्दूल वज्रायुधमपि स्वयम् ॥ ३४

नास्ति भीतो महाबाहो सहायार्थं च नास्ति मे ।
यथाकामं यथायोगं गच्छ वाऽन्यत्र तिष्ठ वा ॥ ३५

वैशम्पायनः—

तच्छ्रुत्वा वचनं तस्य विजयस्य हि धीमतः ॥ ३५॥

विनिवृत्य ततो रुक्मी सेनां सागरसन्निभाम् ।
दुर्योधनमुपागच्छत् तथैव भरतर्षभ ॥ ३६॥

तथैव चाभिगम्यैनम् उवाच वसुधाधिपः ।
[2]प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ३७॥

द्वावेव तु महाराज तस्माद्युद्धादपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च स नराधिपः ॥ ३८॥

गते रामे तीर्थयात्रां भीष्मकस्य सुते तदा ।
उपाविशन् पाण्डवेया मन्त्राय पुनरेव च ॥ ३९॥

---

1. अ-क—अर्धद्वयं नात्रास्ति स्थलान्तरे वर्तते।
तत् पूर्वमेवाधिकपाठतया प्रदर्शितम्।

2. म—अर्धत्रयं न दृश्यते।

समितिर्धर्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकाचित्रा द्यौस्सचन्द्रेव भारत ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
॥ ५७ ॥ भीष्माभिषेचनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

धृतराष्ट्रेण सञ्जयं प्रति कुरुपाण्डवसेनयोर्वृत्तवृत्तान्तकथनचोदना ॥ १॥ सञ्जयेन धृतराष्ट्रं प्रति पुरुषस्याकर्तृत्वकथनपूर्वकं स्वेन वक्ष्यमाणबन्धुनिधनश्रवणेन शोकानधिगमोपदेशः ॥ २ ॥

---

जनमेजयः—

तथा व्यूढेष्वनीकेषु युद्धार्थे भरतर्षभ ।
किमकुर्वन्त कौरव्याः कालेनाभिप्रचोदिताः ॥ १

वैशम्पायनः—

तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ ।
धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् ॥ २

धृतराष्ट्रः—

एहि सञ्जय सर्वं मे आचक्ष्वानवशेषतः ।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ३

दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम् ॥ ३॥
यदहं जानमानोऽपि युद्धदोषान् क्षयोदयान् ॥ ४
तथाऽपि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम् ।
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ॥ ५
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी ।
दुर्योधनं समासाद्य पुनस्सा परिवर्तते ॥ ६
एवं गते वै यद्भावि तद्भविष्यति सञ्जय ।
क्षत्रधर्मः किल रणे तनुत्यागो हि पूजितः ॥ ७

सञ्जयः—

त्वद्युक्तोऽयमनुप्रश्नो महाराज यथेच्छसि ।
न तु दुर्योधने दोषम् इममासक्तुमर्हसि ॥ ८
शृणुष्वानवशेषेण वदतः पार्थिवर्षभ ॥ ८॥
य आत्मनो दुश्चरिताद् अशुभं प्राप्नुयान्नरः ।
एनसा न स दैवं वा कालं वा गन्तुमर्हसि ॥ ९॥
महाराज मनुष्येषु निन्द्यं यस्सर्वमाचरेत् ।
स वध्यस्सर्वलोकस्य निन्दितानि समाचरन् ॥ १०॥
निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूता महाराज निकृतैस्सहदैवतैः ॥ ११॥
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः ॥ १२॥
स्थिरो भूत्वा महाप्राज्ञ सर्वलोकक्षयोदयम् ।

यथाभूतं महायुद्धे श्रुत्वा मा विमना भव ॥ १३॥
न ह्येव कर्ता पुरुषः कर्मणोऽशुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् ॥ १४॥
केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ।
पूर्वकर्मभिरप्यन्ये त्रैधमेतद्धि भाष्यते ॥ १५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ ५७ ॥ भीष्माभिषेचनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये १५॥ श्लोकाः ]
[ भीष्माभिषेचनपर्वं समाप्तम् ]

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

[ अथ उलूकदूतागमनपर्व ]

दुर्योधनेन युधिष्ठिरादीन् प्रति वक्तव्यसन्देशकथनपूर्वकमुलूकस्य पाण्डवान् प्रति दौत्येन प्रेषणम् ॥ १ ॥

सञ्जयः—
हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु । [1]

1. अ-क-ग-न्यविशन्त महाराज कौरवेया यथाविधि ॥ ॥
तत्र दुर्योधनो राजा निवेश्य बलमोजसा ।
सम्मानयित्वा नृपतीन् न्यस्य गुल्मांस्तथैव च ॥ १॥
आरक्षस्य विधिं कृत्वा योधानां तत्र भारत ।
कर्णं दुश्शासनं चैव शकुनिं चापि सौबलम् ॥ २॥
आनाय्य नृपतींस्तत्र मन्त्रयामास भारत ॥ ३
[अधिकः पाठः]

दुर्योधनो महाराज कर्णेन सह भारत ॥ १

[1]सम्भाषित्वा च कर्णेन भ्राता दुश्शासनेन च ।

सौबलेन च राजेन्द्र [2]मन्त्रयित्वा नरर्षभ ॥ २

आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् ॥ २॥

दुर्योधनः—

उलूक गच्छ कैतव्य पाण्डवान् सहसोमकान् ।

गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः ॥ ३॥

इदं तत् समनुप्राप्तं वर्षपूगाभिचिन्ततम् ।

पाण्डवानां कुरूणां च युद्धं लोकभयङ्करम् ॥ ४॥

[3]यदेतत् कथ्यते वाक्यं सञ्जयो मां यदब्रवीत् ॥ ५

[4]वासुदेवसहायस्य गर्जतस्सानुजस्य च ।

मध्ये कुरूणां कौन्तेय तस्य [5]कालस्समागतः ॥ ६

यथा वस्सम्प्रतिज्ञातं तत् सर्वं क्रियतामिति ॥[6] ६॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

॥ ५८ ॥ उलूकदूतागमनपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ६॥ श्लोकाः ]

---

1. ङ-म-मा—इदमर्धं नास्ति।  2. ङ-म-मा—तथा दुश्शासनेन च।
3. अ-क—इदमर्धं नास्ति  4. ङ-म-मा—इदमर्धं न दृश्यते।
5. घ-म-मा—कालोऽयमागतः। ॥
6. अ-क-ग—ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम॥
भ्रातृभिस्सहितस्सर्वैस् सोमकैश्च सकेकयैः।

पूर्वतोऽनुवृत्तम्—

कथं वा धार्मिको भूत्वा त्वमधर्मे मनः कृथाः ॥ १॥
यदिच्छसि जगत् सर्वं नश्यमानं नृशंसवत् ।
अभयं सर्वभूतेभ्यो दाता त्वमिति मे मतिः ॥ २॥
श्रूयते हि पुरा गीतश्श्लोकोऽयं भरतर्षभ ।
प्रह्लादेनाथ भद्रं ते हृते राज्ये तु दैवतैः ॥ ३॥
यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् ॥ ४॥
अत्र ते वर्तयिष्यामि आख्यानमिदमुत्तमम् ।
कथितं नारदेनेह पितुर्मम नराधिप ॥ ५॥
मार्जारः किल दुष्टात्मा निश्चेष्टस्सर्वकर्मसु ।
ऊर्ध्वबाहुस्स्थितो राजन् गङ्गातीरे कदाचन ॥ ६॥
स वै कृत्वा मनश्शुद्धिं प्रत्ययार्थं शरीरिणाम् ।
करोमि धर्ममित्याह सर्वानेव शरीरिणः ॥ ७॥
तस्य कालेन महता विस्रम्भं जग्मुरण्डजाः ।
समेत्य च प्रशंसन्ति मार्जारं तं विशाम्पते ॥ ८॥
पूज्यमानस्तु तैस्सर्वैः पक्षिभिः पक्षिभोजनः ।
आत्मकार्यं कृतं मेने चर्यायाश्च कृतं फलम् ॥ ९॥
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः ।
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम् ॥ १०॥
कार्येण महता युक्तं दम्भयुक्तेन भारत ।
तेषां मतिरियं राजन्नासीत् तत्र विनिश्चये ॥ ११॥

मूषिकाः—

बहुमित्रा वयं सर्वे तेषां नो मातुलो ह्ययम् ।
रक्षां करोतु सततं वृद्धबालस्य सर्वतः ॥ १२॥

दुर्योधनः—

उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ॥ १३

मूषिकाः—

भवत्प्रसादादिच्छामश्चर्तुं चैव यथासुखम् ।

पूर्वतोऽनुवृत्तम्—

भवान् नो गतिरव्यग्रा भवान् नः परमस्सुहृत् ॥ १४

तं वयं सहितास्सर्वे भवन्तं शरणं गताः ।

भवान् धर्मपरो नित्यं भवान् धर्मे व्यवस्थितः ॥ १५

तद्रक्ष नो महाप्राज्ञ त्रिदशानिव वज्रभृत् ॥ १५॥

दुर्योधनः—

एवमुक्तस्तु तैस्सर्वैर् मूषिकैस्स विशाम्पते ।

प्रत्युवाच ततस्सर्वान् मूषिकान् मूषिकान्तकृत् ॥ १६॥

मार्जारः—

द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ।

अवश्यं तु मया कार्यं वचनं भवतां हितम् ॥ १७॥

युष्माभिरपि कर्तव्यं वचनं मम नित्यशः ।

तपसाऽस्मि परिश्रान्तो दृढं नियममास्थितः ॥ १८॥

न चापि गमने शक्तिं काञ्चित् पश्यामि चिन्तयन् ।

सोऽस्मि नेयस्सदा ताता नदीकूलमितस्सुखम् ॥ १९॥

दुर्योधनः—

तथेति तत् प्रतिज्ञाय मूषिका भरतर्षभ ।

वृद्धबालमथो सर्वे मार्जाराय न्यवेदयन् ॥ २०॥

ततस्स पापो दुष्टात्मा मूषिकानथ भक्षयन् ।

पीवरश्च सुवर्णश्च दृढबन्धो व्यजायत ॥ २१॥

मूषिकाणां गणश्चात्र भृशं संक्षीयतेऽथ सः ।

मार्जारो वर्धते चापि तेजोबलसमन्वितः ॥ २२॥

ततस्ते मूषिकास्सर्वे समेत्यान्योन्यमब्रुवन् ।

मातुलो वर्धते नित्यं वयं क्षीयामहे भृशम् ॥ २३॥

तत्र प्राज्ञतमः कश्चिड्डिण्डिको नाम मूषिकः ।

अब्रवीद्वचनं राजन् मूषिकाणां महागणम् ॥ २४॥

डिण्डिकः—

गच्छतां वो नदीतीरं सहितानां विशेषतः ।

पृष्ठतोऽहं गमिष्यामि मातुलेन सहैव तु ॥ २५॥

पूर्वतोऽनुवृत्तम्—

दुर्योधनः—

साधु साध्विति ते सर्वे पूजयाञ्चक्रिरे तदा ।
चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ॥ २६॥
अविज्ञानात् ततस्सोऽथ डिण्डिकं ह्युपभुक्तवान् ।
ततस्ते सहितास्सर्वे मन्त्रयामासुरञ्जसा ॥ २७॥
तत्र वृद्धतमः कश्चित् कोलिको नाम मूषिकः ।
अब्रवीद्वचनं राजन् ज्ञातिमध्ये यथातथम् ॥ २८॥

कोलिकः—

न मातुलो धर्मकामश् छद्ममात्रं कृता शिखा ।
न मूलफलभक्षस्य विष्ठा भवति लोमशा ॥ २९॥
अस्य गात्राणि वर्धन्ते गणश्च परिहीयते ।
अद्य सप्ताष्टदिवसान् डिण्डिकोऽपि न दृश्यते ॥ ३०॥

दुर्योधनः—

एतच्छ्रुत्वा वचस्सर्वे मूषिका विप्रदुद्रुवुः ।
बिडालोऽपि स दुष्टात्मा जगामैव यथागतम् ॥ ३१॥
तथा त्वमपि दुष्टात्मन् बैडालव्रतमास्थितः ।
चरसि ज्ञातिषु सदा बिडालो मूषिकेष्विव ॥ ३२॥
अन्यथा किल ते वाक्यम् अन्यथा कर्म दृश्यते ।
दम्भनार्थाय लोकस्य वेदाश्चोपशमश्च ते ॥ ३३॥
त्यक्त्वा छद्म त्विदं राजन् क्षत्रधर्मं समास्थितः ।
कुरु कार्याणि सर्वाणि धर्मिष्ठोऽसि नरर्षभ ॥ ३४॥
बाहुवीर्येण पृथिवीं लब्ध्वा भरतसत्तम ।
देहि दानं द्विजातिभ्यः पितृभ्यश्च यथोचितम् ॥ ३५॥
क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थितः ।
प्रमृज्याश्रु रणे जित्वा सम्मानं परमावह ॥ ३६॥
पञ्च ग्रामा वृता यत्नान्नास्माभिरपवर्जिताः ।
युध्यामहे कथं सङ्ख्ये कोपयेम च पाण्डवान् ॥ ३७॥
त्वत्कृते दुष्टभावस्य सन्त्यागो विदुरस्य च ।

पूर्वतोऽनुवृत्तम्—

जातुषे च गृहे दाहं स्मर तं पुरुषो भव ॥ ३८॥

यच्च कृष्णमवोचस्त्वम् आयान्तं कुरुसंसदि ।
अयमस्मि स्थितो राजन् शमाय समराय च ॥ ३९॥

तस्यायमागतः कालस् समरस्य नराधिप ॥ ४०

एतदर्थं मया सार्धं कृतमेतद्युधिष्ठिर ।
किं नु युद्धात् परं लाभं क्षत्रियो बहु मन्यते ॥ ४१

किं च त्वं क्षत्रियकुले जातस्सम्प्राथितो भुवि ।
द्रोणादस्त्राणि सम्प्राप्य कृपाच्च भरतर्षभ ॥ ४२

तुल्ययोनौ समबले वासुदेवं समाश्रितः ॥ ४२॥

ब्रूयास्त्वं वासुदेवं च पाण्डवानां समीपतः ।
आत्मार्थे पाण्डवार्थं च यत्तो मां प्रतियोधय ॥ ४३॥

सभामध्ये च यद्रूपं मायया कृतवानसि ।
तत् तथैव पुनः कृत्वा सार्जुनो मामभिद्रव ॥ ४४॥

इन्द्रजालं न माया वै कुहका वा विभीषणा ।
आत्तशस्त्रस्य सङ्ग्रामे वहन्ति प्रतिगर्जनाः ॥ ४५॥

वयमप्युत्सहेम द्यां खं च गच्छेम मायया ।
रसातलं विशामोऽपि ऐन्द्रं वा पुरमेव तु ॥ ४६॥

दर्शयेम च रूपाणि स्वशरीरे बहून्यपि ।
न तु पर्यायतस्सिद्धिर् बुद्धिमाप्नोति मानुषीम् ॥ ४७॥

मनसैव हि भूतानि धातैव कुरुते वशे ॥ ४८

यद्ब्रवीषि च वार्ष्णेय धार्तराष्ट्रानहं रणे ।
घातयित्वा प्रदास्यामि पार्थेभ्यो राज्यमुत्तमम् ॥ ४९

आचचक्षे च मे सर्वं सञ्जयस्तव भाषितम् ।
मद्द्वितीयेन पार्थेन वैरं वस्सव्यसाचिना ॥ ५०

स सत्यसङ्गरो भूत्वा पाण्डवार्थे पराक्रमी ।
युध्यस्वाद्य रणे यत्तः पश्यामः पुरुषो भव ॥ ५१

यस्तु शत्रुमभिज्ञाय शुद्धं पौरुषमाश्रितः ।

पूर्वतोऽनुवृत्तम्—

करोति द्विषतां शोकं स जीवति सुजीवितम् ॥ ५२
अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः ।
अद्येदानीं विजानीमस् सन्ति षण्डास्सशृङ्गकाः ॥ ५३

मद्विधेनापि नृपतिस् त्वयि युक्तः कथञ्चन ।
सन्नाहं संयुगे कर्तुं कंसभृत्ये विशेषतः ॥ ५४
तं च तूबरकं बालं बह्वाशिनमविद्यकम् ।
उलूक मद्वचो ब्रूहि असकृद्भीमसेनकम् ॥ ५५
विराटनगरे पार्थ त्वं सूदो ह्यभवः पुरा ।
वल्लो नाम विख्यातस् तन्ममैव हि पौरुषम् ॥ ५६
प्रतिज्ञातं सभामध्ये न तन्मिथ्या त्वया पुरा ।
दुश्शासनस्य रुधिरं पीयतां यदि शक्यते ॥ ५७
यद्ब्रवीषि च कौन्तेय धार्तराष्ट्रानहं रणे ।
निहनिष्यामि तरसा तस्य कालोऽयमागतः ॥ ५८
त्वं हि भोज्ये पुरस्कार्यो भक्ष्ये पेये च भारत ।
क्व युद्धं क्व च भोक्तव्यं युध्यस्व पुरुषो भव ॥ ५९
शयिष्यसे हतो भूमौ गदामालिङ्ग्य भारत ।
तत् तथा च सभामध्ये वल्गितं ते वृकोदर ॥ ६०
उलूक नकुलं ब्रूहि वचनान्मम भारत ।
युध्यस्वाद्य स्थिरो भूत्वा पश्यामस्तव पौरुषम् ॥ ६१
युधिष्ठिरानुरागं च द्वेषं च मयि भारत ।
कृष्णायाश्च परिक्लेशं स्मरेदानीं यथातथम् ॥ ६२
ब्रूयास्त्वं सहदेवंच राजमध्ये वचो मम ।
युध्येदानीं रणे यत्तः क्लेशान् स्मर च पाण्डव ॥ ६३
विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचनान्मम ॥ ६३॥

न दृष्टपूर्वा भर्तारो भृत्यैरपि महागुणैः ।
तथाऽर्थपतिभिर्भृत्या यतस्सृष्टाः प्रजास्ततः ॥ ६४॥
अश्लाघ्योऽयं नरपतिर् युवयोरिति चागतम् ॥ ६५
ते यूयं सहिता भूत्वा तद्वधार्थं ममापि च ।

पूर्वतोऽनुवृत्तम्—

आत्मार्थं पाण्डवार्थं च प्रयुध्यध्वं मया सह ॥ ६६
धृष्टद्युम्नं च पाञ्चाल्यं ब्रूयास्त्वं वचनान्मम ।
एष ते समयो लब्धो लब्धव्यश्च त्वयाऽपि सः ॥ ६७
द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमम् ।
युध्यस्व ससुहृद्वर्गः कुरु कर्म सुदुष्करम् ॥ ६८
शिखण्डिनमथो ब्रूहि उलूक वचनान्मम ।
स्त्रीति मत्वा महाबाहुर् न हनिष्यति कौरवः ॥ ६९
गाङ्गेयं युध्यतां श्रेष्ठं युध्यस्वेह सुनिर्भयः ।
कुरु कर्म रणे यत्तः पश्यामः पौरुषं तव ॥ ७०

वैशम्पायनः—

एवमुक्त्वा ततो राजा प्रहस्योलूकमब्रवीत् ॥ ७०॥

दुर्योधनः—

धनञ्जयं पुनर्ब्रूहि वासुदेवस्य शृण्वतः ॥ ७१
अस्मान् वाऽपि पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निर्जितोऽस्माभी रणे वीर शयिष्यसि ॥ ७२
*राष्ट्रान्निर्वासनात् क्लेशं वनवासं च पाण्डव ।
कृष्णायाश्च परिक्लेशं संस्मरन् पुरुषो भव ॥ ७३
यदर्थं क्षत्रिया सूते सर्वं तदिदमागतम् ॥ ७३॥
बलं वीर्यं च शौर्यं च परं चाप्यस्त्रलाघवम् ।
पौरुषं दर्शयन् युद्धे कोपस्य कुरु निष्कृतिम् ॥ ७४॥
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च ।
हृदयं न स्फुटेत् कस्य ऐश्वर्याद्भ्रंशितस्य च ॥ ७५॥
कुले जातस्य शूरस्य परवित्तेषु गृध्यतः ।
अच्छिन्नं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ॥ ७६॥
यत्तदुक्तं महद्वाक्यं कर्मणा तद्विधीयताम् ।
अकर्मणा कत्थितेन सन्तः कुपुरुषं विदुः ॥ ७७॥

* इत आरभ्य द्वादशश्लोकाः ख-घ-ङ-म-मा—कोशेषु विक्षिप्ता उपलभ्यन्ते ॥

पूर्वतोऽनुवृत्तम्—

अमित्राणां वशे स्थानं राज्यं च पुनरुद्धर ।
द्वावर्थौ युद्धकामस्य तस्मात् कुरुत पौरुषम् ॥ ७८॥
पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम् ।
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ॥ ७९॥
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासितः ।
संवत्सरं विराटस्य दास्यमास्थाय चोषितः ॥ ८०॥
अप्रियाणां च वचनं प्रब्रुवंश्च पुनः पुनः ।
अमर्षं दर्शयस्व त्वम् अमर्षो ह्येव पौरुषम् ॥ ८१॥
क्रोधो बलं तथा वीर्यं ज्ञानयोगोऽस्त्रलाघवम् ।
इह ते दृश्यतां पार्थ युध्यस्व पुरुषो भव ॥ ८२॥
मोहाभिभूतो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
पुष्टास्ते स्युर्भृता योधाश् श्वो युध्यस्व सकेशवः ॥* ८३॥
असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ॥ ८४॥
एवं कत्थसि कौन्तेय अकत्थन् पुरुषो भव ॥ ८५
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ।
द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि ॥ ८६
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ ८६॥
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमविक्षोभ्यम् अनीकचरमच्युतम् ॥ ८७॥
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ॥ ८८
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ।
अनिलो वा वहेन्मेरुं द्यौर्वाऽपि निपतेन्महीम् ॥ ८९
युगं वा परिवर्तेत यद्येवं स्याद्यथाऽऽत्थ माम् ॥ ८९॥
को ह्यस्ति जीविताकाङ्क्षी प्राप्येममरिमर्दनम् ।
पार्थो वा इतरो वाऽपि पुरुषस्स्वस्तिमान् व्रजेत् ॥ ९०॥
कथमाभ्यामभिध्यातस् संसृष्टोऽथ रणेन वा ।

*ख-ग-मा—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

पूर्वतोऽनुवृत्तम्—

न जीवन् प्रतिमुच्येत पदा भूमिमुपस्पृशन् ॥　९१॥

किं दर्दुरः कूपशयो यथेमां
　न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
　गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥　९२॥

प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैर्
　उदीच्यकाम्भोजशकैः खशैश्च ।
साल्वैस्समत्स्यैः कुरुमध्यदेश्यैर्
　म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाश्यैः ॥　९३॥

नानाजनौघं युधि सम्प्रवृद्धं
　गाङ्गं यथा वेगमवारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
　युयुत्ससे मन्द किमल्पबुद्धे ॥　९४॥

अक्षय्याविषुधी चैव अग्निदत्तं च ते रथम् ।
जानीमो हि रणे पार्थ केतुं दिव्यं च भारत ॥　९५॥

अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ॥　९६

यदीदं कत्थनाल्लोके सिध्येत् कर्म धनञ्जय ।
सर्वे भवेयुस्सिद्धार्थाः कत्थने को हि दुर्गतः ॥　९७

जानामि ते वासुदेवं सहायं
　जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्यहं त्वादृशो नास्ति योद्धा
　जानन् वैतद् राज्यमेतद्धरामि ॥　९८

न तु पर्यायधर्मेण सिद्धिं प्राप्नोति मानवः ।
मनसैवानुकूलानि विधाता कुरुते वशे ॥　९९

त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम् ॥　१००

क्व तदा गाण्डिवं तेऽभूद् यत् त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन ॥　१०१

पूर्वतोऽनुवृत्तम्—

सगदाद्भीमसेनाद्वा फल्गुनाद्वा सगाण्डिवात् ।
नैव मोक्षस्तदा वोऽभूद् विना कृष्णामनिन्दिताम् ॥ १०२
सा वो दास्ये समापन्नान् मोचयामास पार्षती ।
अमानुष्यसमायुक्तान् दासकर्मण्यवस्थितान् ॥ १०३
अवोचं यत् षण्डतिलान् अहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ १०४
सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ १०५
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
वेणीं कृत्वा षण्डवेषः कन्यां नर्तितवानसि ॥ १०६
न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ॥ १०७
न माया हीन्द्रजालं वा कुहका वा विभीषणा ।
आत्तशस्त्रस्य सङ्ग्रामे वहन्ति प्रतिगर्जनाः ॥ १०८
वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ॥ १०९
संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् ।
तरस्व वा महागाधं बाहुभ्यां पौरुषोदधिम् ॥ ११०
शारद्वतमहामीनं विविंशतिमहोरगम् ।
बृहद्बलमहावेलं सौमदत्तितिमिङ्गिलम् ॥ १११

युयुत्सुतोयं भगदत्तमारुतं
श्रुतायुहार्दिक्यमहासमुद्रम् ।
दुश्शासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ॥ ११२

भीष्मवेगमपर्यन्तं द्रोणग्राहदुरासदम् ।
कर्णशल्यझषावर्तं काम्भोजबडबामुखम् ॥ ११३

जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ।

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

उलूकेन पाण्डवानुपेत्य युधिष्ठिरार्जुनौ प्रति दुर्योधनसन्देशकथनम् ॥ १ ॥

सञ्जयः—

सेनानिवेशं सम्प्राप्य कैतव्यः पार्थिवैस्सह ।
समागतः पाण्डवेयैर् युधिष्ठिरमभाषत ॥ १

उलूकः—

अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम ।
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि ॥ २

युधिष्ठिरः—

उलूक न भयं तेऽस्ति ब्रूहि त्वं विगतज्वरः ।
यन्मतं धार्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः ॥ ३

---

पूर्वतोऽनुवृत्तम्—

शस्त्रौघमक्षय्यमतिप्रवृद्धं
यदाऽवगाह्य श्रमनष्टचेताः ॥ ११४
भविष्यसि त्वं हतसर्वबान्धवस्
तदा मनस्ते परितापमेष्यति ॥ ११४॥
तदा मनस्ते त्रिदिवादिवाशुचेर्
निवर्त्यतां पार्थ महीप्रशासनात् ।
प्रशास्यराज्यं हि सुदुर्लभं त्वया
बुभूषता स्वर्ग इवातपस्विना ॥* ११५॥

[ अधिकः पाठः ]

---

*अ-क—कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते ।
घ-ङ-म—कोशेषु उपरितनाध्यायेन सहाध्यायसमाप्तिर्दृश्यते ।

सञ्जयः—

ततो द्युतिमतां मध्ये पाण्डवानां महात्मनाम् ।
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ॥ ४

द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ॥ ५

उलूकः—

इदं त्वामब्रवीद्राजा धार्तराष्ट्रो महामनाः ।
शृण्वतां कुरुवीराणां तन्निबोध नराधिप ॥ ६

पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम् ।
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ॥ ७

द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः ।
संवत्सरं विराटस्य दास्यमास्थाय चोषिताः ॥ ८

अमर्षं राज्यहरणं वनवासं च पाण्डव ।
द्रौपद्याश्च परिक्लेशं संस्मरन् पुरुषो भव ॥ ९

अशक्तेन च यच्छप्तं भीमसेनेन पाण्डव ।
दुश्शासनस्य रुधिरं पीयतां यदि शक्यते ॥ १०

[1]बलाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।

1. ख-ग-ब-ङ—बलाभिहारो निर्वृत्तः कुरुक्षेत्रे ह्यकर्दमे ।
म—बलातिहारो निर्वृत्तः कुरुक्षेत्रं ह्यकर्दमम् ।
अ-क—क्रोधाभिभूतान्निर्बन्धात् । [ पाठान्तरम् ]

[1]पुष्टास्तेऽश्वा भृता योधाश् श्वो युध्यस्व सकेशवः ॥ ११

असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ॥ १२

[2]एवं कत्थसि कौन्तेय न कत्थन् कुरु पौरुषम् ॥ १२॥

सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ।
द्रोणं च युध्यतां श्रेष्ठं शचीपतिसमं युधि ॥ १३॥

अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ १४

ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमसङ्क्षोभ्यम् अनीकचरमच्युतम् ॥ १५

द्रोणं [3]महाद्युतिं पार्थ यज्जिगीषसि तन्मृषा ॥ १५॥

न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ १६

अनिलो वा वहेन्मेरुं द्यौर्वाऽपि निपतेन्महीम् ।
युगं वा परिवर्तेत यद्येवं स्याद्यदात्थ माम् ॥ १७

को ह्याभ्यां जीविताकाङ्क्षी प्राप्यास्त्रमरिमर्दनम् ।
[4]सगजस्सरथो वाऽपि पुनस्स्वस्ति गृहानियात् ॥ १८

---

1. अ-क-ग—समापन्ना वृताश्शूरैर् युध्यस्व सह केशवः। [पाठान्तरम्]
2. ङ-म-मा—श्लोकोऽयं नास्ति	3. ङ-म-मा—मोहाद्यथा
4. ख-घ-ङ-म—गजो वाजी नरो वाऽपि पुनस्स्वस्थो गृहान् व्रजेत् ।
मा—नरो वाऽपि गजो वाऽपि पुनस्स्वस्थो गृहान् व्रजेत् ॥
[पाठान्तरम्]

कथमाभ्यामभिध्यातस् संसृष्टो दारुणेन च ।
रणे जीवन् प्रमुच्येत पदा भूमिमुपस्पृशन् ॥ १९

किं दर्दुरः कूपशयो यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ २०

प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यैर्
उदीच्यकाम्भोजशकैः खशैश्च ।
साल्वैस्समत्स्यैः कुरुमध्यदेश्यैर्
म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाश्यैः ॥ २१

नानाजनौघं युधि सम्प्रवृत्तं
गाङ्गं यथा वेगमवारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ॥ २२

सञ्जयः—

इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् ।
अभ्यावृत्य पुनर्जिष्णुम् उलूकः प्रत्यभाषत ॥ २३

उलूकः—

अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात् सिद्धिरेतस्य नैतत् सिध्यति कत्थनात् ॥ २४

यदीदं कत्थनाल्लोके सिध्येत् कर्म धनञ्जय ।
सर्वे भवेयुस्सिद्धार्थाः कत्थने को हि दुर्गतः ॥　२५

जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्येतत् त्वादृशो नास्ति योद्धा
राज्यं च ते जानमानो हरामि ॥　२६

न तु पर्यायधर्मेण सिद्धिं प्राप्नोति भूयसीम् ।
मनसैवानुकूलानि विधाता कुरुते वशे ॥　२७

त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम् ॥　२८

क्व तदा गाण्डिवं तेऽभूद् यत् त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन ॥　२९

सगदाद्भीमसेनाच्च पार्थाच्चापि सगाण्डिवात् ।
न वै मोक्षस्तदा वोऽभूद् विना कृष्णामनिन्दिताम् ॥　३०

सा वो दास्ये समापन्नान् मोक्षयामास भामिनी ।
अमानुष्यसमायुक्तान् दासकर्मण्यवस्थितान् ॥　३१

अवोचं यत् षण्डतिलान् अहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥　३२

सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ ३३

एवमेतत् सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
[1]वेणीं कृत्वा षण्डवेषः कन्यां नर्तितवानसि ॥ ३४

न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
[2]राज्यं प्रतिप्रदास्यामि युद्ध्यस्व सहकेशवः ॥ ३५

न माया हीन्द्रजालं वा कुहका वा विभीषणा ।
आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्जनाः ॥ ३६

वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ॥ ३७

संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् ।
प्रतरेमं महागाधं बाहुभ्यां पुरुषोदधिम् ॥ ३८

शारद्वतमहामीनं विविंशतिझषाकुलम् ।
बृहद्बलमहावेलं सौमदत्तितिमिङ्गिलम् ॥ ३९

दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ॥ ४०

---

1. ख-ग-घ-ङ-म-मा—श्रेण्यां कृष्यां च वेद्यां च संयुगे यः पलायते । [पाठान्तरम्]

2. ख-ग-घ-ङ-मा—न राज्यं प्रतिदास्यामि

शस्त्रौघमक्षय्यमतिप्रवृद्धं
यदाऽवगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धवस्
तदा मनस्ते परितापमेष्यति ॥ ४१

तदा मनस्ते त्रिदिवादिवाशुचेर्
निवर्त्यतां पार्थ महीप्रशासनात् ।
प्रशास्यराज्यं हि सुदुर्लभं त्वया
बुभूषता स्वर्ग इवातपस्विना ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ ५८ ॥ उलूकदूतागमनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

---

## ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

**श्रीभगवता कृष्णेन दुर्योधनं प्रति उलूकद्वारा प्रतिसन्देशप्रेषणम् ॥**

---

**सञ्जयः—**

उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन् [1]वाक्यशलाकया ॥ १

तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशम् ।

---

1. ख-ग-ङ-म-मा—बालइश.।

प्रागेव भृशसङ्क्रुद्धाः कैतव्येनापि धर्षिताः ॥ २

[1]आसनेषूदतिष्ठन्त बाहूंश्चैव प्रचिक्षिपुः ।
आशीविषा इव क्रुद्धा वीक्षाञ्चक्रुः परस्परम् ॥ ३

अवाक्छिरा भीमसेनस् समुदैक्षत कैतवम् ।
नेत्राभ्यां लोहिताान्ताभ्याम् आशीविष इव श्वसन् ॥ ४

आर्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम् ।
[2]उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ॥ ५

श्रीभगवान्—

प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनम् ।
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत् ते तथाऽस्तु तत् ॥[3] ६

---

1. ग-ङ-म-मा—नासनेष्वधितिष्ठन्ते ।
   ख-घ—नासनेष्वेव तिष्ठन्ते ।
2. ब-ङ-म-मा—उत्स्मयित्वा तु ।
3. अ-क—सञ्जयः—
   एवमुक्त्वा महाबाहुः केशवो राजसत्तम ।
   पुनरेव महाप्राज्ञं युधिष्ठिरमुदैक्षत ॥ १
   सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ।
   द्रुपदस्य सपुत्रस्य विराटस्य च सन्निधौ ॥ २
   भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ॥ २॥
   उलूकोऽप्यर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
   आशीविषमिव क्रुद्धं तुदन् वाक्यशलाकया ॥ ३॥
   कृष्णादींश्चैव तान् सर्वान् यथोक्तं वाक्यमब्रवीत् ॥ ४
   उलूकस्य तु तद्वाक्यं पापं दारुणमीरितम् ।
   श्रुत्वा विचुक्षुभे पार्थो ललाटं चाप्यमार्जयत ॥ ५
   तदवस्थं तदा दृष्ट्वा पार्थं सा समितिर्नृप ।

पूर्वतोऽनुवृत्तम्—

नामृष्यत महाराज पाण्डवानां महारथाः ॥ ६
अधिक्षेपेण कृष्णस्य पार्थस्य च महात्मनः ।
श्रुत्वा ते पुरुषव्याघ्राः क्रोधाज्जज्वलुरच्युताः ॥ ७
धृष्टद्युम्नशिखण्डी च सात्यकिश्च महारथः ।
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ॥ ८
द्रौपदेयाभिमन्युश्च धृष्टकेतुश्च पार्थिवः ।
भीमसेनश्च विक्रान्तो यमजौ च महारथौ ॥ ९
उत्पेतुरासनात् सर्वे क्रोधसंरक्तलोचनाः ।
बाहून् प्रगृह्य रुचिरान् रक्तचन्दनरूषितान् ॥ १०
अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषितान् ।
दन्तान् दन्तेषु निष्पिष्य सृक्विणीः पर्यलेलिहन् ॥ ११
तेषामाकारभावज्ञः कुन्तीपुत्रो वृकोदरः ।
उदतिष्ठत् सवेगेन क्रोधेन प्रज्वलन्निव ॥ १२
उद्वृत्य सहसा नेत्रे दन्तान् कटकटाप्य च ।
हस्तान् हस्तेषु निष्पिष्य उलूकं वाक्यमब्रवीत् ॥ १३

भीमसेनः—

अशक्तानामिवास्माकं प्रोत्साहननिमित्तजम् ।
श्रुतं ते वचनं मूर्ख यत् त्वां दुर्योधनोऽब्रवीत् ॥ १४
तन्मे कथयतो मन्द शृणु वाक्यं दुरासदम् ।
सर्वक्षत्रस्य मध्ये त्वं यद्वक्ष्यसि सुयोधनम् ॥ १५
शृण्वतस्सूतपुत्रस्य शकुनेस्त्वं दुरात्मनः ॥ १५॥
अस्माभिः प्रीतिकामैस्तु भ्रातुर्ज्येष्ठस्य शासनात् ।
मर्षितं ते दुराचार स त्वं न बहु मन्यसे ॥ १६॥
प्रेषितश्च हृषीकेशश् शमाकाङ्क्षी कुरून् प्रति ।
कुलस्य हितकामेन धर्मराजेन धीमता ॥ १७॥
त्वं कालचोदितो नूनं गन्तुकामो यमक्षयम् ।
गच्छस्वाहवमस्माभिस् तच्च श्वो भविता ध्रुवम् ॥ १८॥
मयाऽपि च प्रतिज्ञातो वधस्सभ्रातृकस्य ते ।

पूर्वतोऽनुवृत्तम्—

स तथा भविता पाप नात्र कार्या विचारणा ॥ १९॥
वेलामतिक्रमेत् सद्यस् सागरो वरुणालयः ।
पर्वताश्च विशीर्येयुर् मयोक्तं न मृषा भवेत् ॥ २०॥
सहायस्ते यदि यमः कुबेरो रुद्र एव वा ।
यथाप्रतिज्ञं दुर्बुद्धे प्रकरिष्यन्ति पाण्डवाः ॥ २१॥
दुश्शासनस्य रुधिरं पाता चास्मि यथेप्सितम् ॥ २२
यश्चेह प्रतिसंरोद्धुं क्षत्रियो माऽभियास्यति ।
अपि भीष्मं पुरस्कृत्य तं नेष्यामि यमक्षयम् ॥ २३
यच्चैतदुक्तं वचनं मया क्षत्रस्य संसदि ।
यथैतद्भविता सत्यं तथैवात्मानमालभे ॥ २४

सञ्जयः—

भीमसेनवचश्श्रुत्वा सहदेवोऽत्यमर्षणः ।
क्रोधसंरक्तनयनस् ततो वाक्यमुवाच ह ॥ २५

सहदेवः—

शृणु पाप वचो मह्यं यद्वाच्यो हि पिता त्वया ।
नास्माकं भविता भेदः कदाचित् कुरुभिस्सह ॥ २६
धृतराष्ट्रस्य सम्बन्धो यदि न स्यात् त्वया सह ॥ २६॥
त्वं तु लोकविनाशार्थं धृतराष्ट्रकुलस्य च ।
उत्पन्नो वैरपुरुषस् स्वकुलघ्नश्च पापकृत् ॥ २७॥
जन्मप्रभृति चास्माकं पिता ते पापपूरुषः ।
अहितानि नृशंसानि नित्यशः कर्तुमिच्छति ॥ २८॥
तस्य वैरानुषङ्गस्य गन्तास्म्यन्तं सुदुर्गमम् ॥ २९
अहमादौ निहत्य त्वां शकुने स्सम्प्रपश्यतः ।
ततोऽस्मि शकुनिं हन्ता मिषतां सर्वधन्विनाम् ॥ ३०

सञ्जयः—

भीमसेनस्य वचनं सहदेवस्य चोभयोः ।
उवाच फल्गुनो वाक्यं भीमसेनं स्मयन्निव ॥ ३१

अर्जुनः—

भीमसेन न ते सन्ति येषां वैरं त्वया सह ।

पूर्वतोऽनुवृत्तम्—

मन्दा गृहेषु सुखिनो मृत्युपाशवशं गताः ॥ ३२

उलूकश्च न ते वाच्यः परुषं पुरुषोत्तम ।

दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः ॥ ३३

सञ्जयः—

एवमुक्त्वा महाबाहुं भीमं भीमपराक्रमम् ।

धृष्टद्युम्नमुखान् वीरान् सुहृदस्समभाषत ॥ ३४

अर्जुनः—

श्रुतं वस्तस्य पापस्य धार्तराष्ट्रस्य भाषितम् ।

कुत्स्नां वासुदेवस्य मम चैव विशेषतः ॥ ३५

श्रुत्वा भवन्तस्संरब्धा अस्माकं हितकाम्यया ॥ ३५॥

प्रभावाद्वासुदेवस्य भवतां च प्रयत्नतः ।

समस्तं पार्थिवं क्षत्रं सर्वं न गणयाम्यहम् ॥ ३६॥

भवद्भिस्समनुज्ञातो वाक्यमस्य यदुत्तरम् ।

उलूके प्रापयिष्यामि यद्वक्ष्यामि सुयोधनम् ॥ ३७॥

श्वो भूते कथितस्यास्य प्रतिवाक्यं चमूमुखे ।

गाण्डीवेनाभिधास्यामि क्लीबा हि वचनोत्तराः ॥ ३८॥

सञ्जयः—

ततस्ते पार्थिवास्सर्वे प्रशशंसुर्धनञ्जयम् ।

तेन वाक्योपचारेण विस्मिता राजसत्तमाः ॥ ३९॥

अनुनीय च तान् सर्वान् यथायोग्यं यथावयः ।

धर्मराजं तदा वाक्यं तत्प्राप्तं प्रत्यभाषत ॥ ४०॥

अर्जुनः—

आत्मानमवमन्वानो नहि स्यात् पार्थिवोत्तमः ।

तस्योत्तरं प्रवक्ष्यामि तव शुश्रूषणे रतः ॥ ४१॥

उलूकं भरतश्रेष्ठ सामपूर्वमथोर्जितम् ॥ ४२

सञ्जयः—

दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः ।

अतिलोहितनेत्राभ्याम् आशीविष इव श्वसन् ॥ ४३

स्मयमान इव क्रोधात् सृक्किणी परिलेलिहन् ।

मद्वचश्चापि भूयस्ते वक्तव्यस्स सुयोधनः ।
श्व इदानीं प्रपद्येथाः पुरुषो भव दुर्मते ॥ ७

मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्दनः ।
सारथ्येन वृतः पार्थैर् इति त्वं न बिभेषि च ॥ ८

जघन्यकालमप्येतन्न[1] भवेत् सर्वपार्थिवान् ।
निर्दहेयमहं क्रोधात् तृणानीव हुताशनः ॥ ९

युधिष्ठिरनियोगाच्च फल्गुनस्य महात्मनः ।

---

पूर्वतोऽनुवृत्तम्—

जनार्दनमभिप्रेक्ष्य गुडाकेशो महायशाः ॥ ४४
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ ४४॥

अर्जुनः—

उलूक गच्छ कैतव्य ब्रूहि तात सुयोधनम् ।
कृतघ्नं वैरपुरुषं दुर्मतिं कुलपांसनम् ॥ ४५॥
पाण्डवेषु यथा पाप नित्यं जिह्मं प्रवर्तसे ॥ ४६
स्ववीर्यं सम्यगाश्रित्ययस्समाह्वयते परान् ।
अभीतः पूरयन् शक्तिम् एष वै क्षत्रियः पुमान् ॥ ४७
परवीर्यं समाश्रित्य यस्समाह्वयते परान् ।
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ॥ ४८
स पापः क्षत्रियो भूत्वा अस्मानाहूय संयुगे ।
मान्यामान्यान् पुरस्कृत्य युद्धं माऽगाः कुलाधम ॥ ४९
आत्मवीर्यं समाश्रित्य भृत्यवीर्यं च कौरव ।
आह्वयस्व रणे पार्थान् सर्वथा क्षत्रियो भव ॥ ५०
परवीर्यं समाश्रित्य यस्समाह्वयते परान् ।
अशक्तस्स्वयमादातुम् एतदेव नपुंसकम् ॥ ५१
यस्त्वं परेषां वीर्येण आत्मानं बहुमन्यसे ।
कथमेवमशक्तस्त्वम् अस्मान् समभिगर्जसि ॥ ५२

1. ख-घ-ङ-म-मा—तद्भवेद्यत्

करिष्ये युध्यमानस्य सारथ्यं विजितात्मनः ॥ १०

यद्युत्पतसि लोकांस्त्रीन् यद्याविशसि भूतलम् ।
तत्र तत्रार्जुनरथं प्रभाते द्रक्ष्यसेऽग्रतः ॥ ११

यच्चापि भीमसेनस्य मन्यसे मोघगर्जितम् ।
दुश्शासनस्य रुधिरं पीतमित्यवधार्यताम् ॥ १२

न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः ।
न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् ॥ १३

**इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥**

॥ ५८ ॥ उलूकदूतागमनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ अस्मिन्नध्याये १३ श्लोकाः ]

---

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

**अर्जुनेन उलूकद्वारा दुर्योधनं प्रति प्रतिसन्देशप्रेषणम् ॥ १॥ उलूकेन दुर्योधनं प्रति युधिष्ठिरादिप्रतिसन्देशकथनम् ॥ २ ॥ दुर्योधनाज्ञया कर्णेन सेनासु युद्धसन्नाहोद्घोषणम् ॥ ३ ॥**

---

**सञ्जयः—**

दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः ।
नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत ॥ १

स केशवमभिप्रेक्ष्य गुडाकेशो महायशाः ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ २

अर्जुनः—

स्ववीर्यं यस्समाश्रित्य समाह्वयति वै परान् ।
[1]अभीतो युध्यते शत्रून् स वै पुरुष उच्यते ॥ ३

परवीर्यं समाश्रित्य यस्समाह्वयते परान् ।
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ॥ ४

स त्वं परेषां वीर्येण मन्यसे वीर्यमात्मनः ।
स्वयं कापुरुषो मूढ परांश्च क्षेप्तुमिच्छसि ॥ ५

यस्त्वं वृद्धं सर्वराज्ञां हितबुद्धिं जितेन्द्रियम् ।
मरणाय महाप्राज्ञं दीक्षयित्वा विकत्थसे ॥ ६

[2]भावस्ते विदितोऽस्माभिर् दुर्बुद्धे कुलपांसन ।
न हनिष्यन्ति गाङ्गेयं पाण्डवा घृणयेति ह ॥ ७

यस्य वीर्यं समाश्रित्य धार्तराष्ट्र विकत्थसे ।
हन्तास्मि प्रथमं भीष्मं मिषतां सर्वधन्विनाम् ॥ ८

कैतव्य गत्वा भरतान् समेत्य
सुयोधनं धार्तराष्ट्रं ब्रवीहि ।

---

1. ख-ग-घ-म-मा—अभीतः पूरयञ्शक्तिं ।
2. ङ—अर्धद्वयं न दृश्यते ।

तथेत्युवाचार्जुनस्सव्यसाची
निशाव्यपाये भविता विमर्दः ॥ ९

यद्वाऽब्रवीद्वाक्यमदीनसत्वो
मध्ये कुरून् हर्षयन् सत्यसन्धः ।
अहं [1]हन्ता सृञ्जयानामनीकं
साल्वेयकांश्चेति ममैष भारः ॥ १०

[2]हन्यामहं द्रोणमृतेऽपि लोकं
न मे भयं विद्यते पाण्डवेभ्यः ।
ततो हि ते लब्ध[3]मदश्च राज्यम्
आपद्गताः पाण्डवाश्चेति भावः ॥ ११

स दर्पपूर्णो न समीक्षसे त्वं
अनर्थमात्मन्यपि वर्तमानम् ॥ ११॥

तस्मादहं ते प्रथमं समूहे
हन्ता समक्षं कुरुवृद्धमेव ।
सूर्योदये युक्तसेनः प्रतीक्ष
ध्वजी रथी रक्ष च सत्यसन्धम् ॥ १२॥

---

1. ङ-म-मा—हन्ता पाण्डवानाम् ।
2. अ-क-ख-ग-घ—कैतव्य गत्वा भरतान् समेत्य
सुयोधनं धार्तराष्ट्रं वदस्व । [अधिकः पाठः]
3. ग-ङ-म—मतश्च राज्यं क्षयं गताः पाण्डवास्सोमकाश्च ।

अहं हि वः पश्यतां वै समक्षं
भीष्मं रथात् पातयिष्यामि बाणैः ॥ १३

श्वोभूते कत्थनावाक्यं विज्ञास्यसि सुयोधन ।
आचितं शरजालेन मया द्रष्टा पितामहम् ॥ १४

यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः ।
क्रुद्धेन भीमसेनेन [1]भ्राता दुश्शासनस्तव ॥ १५

अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसकृत् ।
स तां प्रतिज्ञामचिराद् द्रक्ष्यसे त्वं सुयोधन ॥ १६

अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा ।
नैष्ठुर्यस्यावलेपस्य आत्मसम्भावनस्य च ॥ १७

[2]नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च ।
अधर्मस्यापवादस्य वृद्धातिक्रमणस्य च ॥ १८

दर्शनस्य च वक्रस्य कृत्स्नस्यापनयस्य च ।
द्रक्ष्यसि त्वं फलं तीव्रम् अचिरेण सुयोधन ॥ १९

वासुदेवद्वितीये हि मयि क्रुद्धे नराधम ।
आशा ते जीविते मूढ राज्ये वा केन हेतुना ॥ २०

शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते ।

---

1. अ-क—त्राता । म—राजा दुर्योधनस्तव ।
2. ङ—अर्धद्वयं न दृश्यते

निराशो जीविते राज्ये पुत्रेषु च भविष्यसि ॥ २१
भ्रातॄणां निधनं दृष्ट्वा पुत्राणां च सुयोधन ।
भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि ॥ २२
न द्वितीयां प्रतिज्ञां हि [1]प्रतिजानामि कैतव ।
सत्यं ब्रवीम्यहं ह्येतत् सर्वं सत्यं भविष्यति ॥ २३
[2-3]इत्युक्तः कैतवो वाक्यं तद्वाक्यमुपधार्य च ।
अनुज्ञातो निववृते पुनरेव यथागतम् ॥ २४
उपावृत्य तु कैतव्यः पाण्डुभ्यो धृतराष्ट्रजम् ।
गत्वा यथोक्तं तत् सर्वम् उवाच कुरुसंसदि ॥ २५

---

1. ग-घ-ङ—प्रतिज्ञास्यति पाण्डवः ।
 ख-म-मा—प्रतिज्ञास्यति केशवः ।
2. ख-ग-घ-ङ-म-मा—कोशेष्वेव श्लोकद्वयमिदं वर्तते ।
3. अ-क—युधिष्ठिरोऽपि कैतव्यम् उलूकमिदमब्रवीत् ॥ ॥
 युधिष्ठिरः—
 उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनम् ।
 स्वेन वृत्तेन मे वृत्तं नाधिगन्तुं त्वमर्हसि ॥ १॥
 उभयोरन्तरं वेद सूनृतानृतयोरपि ।
 न चाहं कामये पापम् अपि कीटपिपीलयोः ॥ २॥
 किं पुनर्ज्ञातिषु वधं कामयेयं कथञ्चन ॥ ३
 एतदर्थं मया तात पञ्च ग्रामा वृताः पुरा ।
 कथं तव सुदुर्बुद्धे न प्रेक्षे व्यसनं महत् ॥ ४
 स त्वं कामपरीतात्मा मूढभावाच्च कत्थसे ।
 तथैव वासुदेवस्य न गृह्णासि हितं वचः ॥ ५
 किमिदानीं बहूक्तेन युध्यस्व सहबान्धवः ॥ ५॥
 मम विप्रियकर्तारं कैतव्य ब्रूहि कौरवम् ।
 श्रुतं वाक्यं गृहीतोऽर्थो मतं यत् ते तथाऽस्तु तत् ॥ ६॥

पूर्वतोऽनुवृत्तम्—

सञ्जयः—

भीमसेनस्ततो वाक्यं भूय आह नृपात्मजम् ॥ ७

भीमसेनः—

उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुषम् ।
शठं नैकृतिकं पापं दुराचारं सुयोधनम् ॥ ८
गृध्रोदरे वा वस्तव्यं पुरे वा नागसाह्वये ॥ ८॥

प्रतिज्ञातं मया यच्च सभामध्ये नराधम ।
कर्ताऽहं तद्वचस्सत्यं सत्येनैव शपामि ते ॥ ९॥

दुश्शासनस्य रुधिरं हत्वा पास्याम्यहं मृधे ।
सक्थिनी तव भङ्क्त्वैव हत्वा हि तव सोदरान् ॥ १०॥

सर्वेषां धार्तराष्ट्राणाम् अहं मृत्युस्सुयोधन ।
सर्वेषां राजपुत्राणाम् अभिमन्युरसंशयम् ॥ ११॥
कर्मणा तोषयिष्यामि भूयश्चैव वचश्शृणु ॥ १२

हत्वा सुयोधनं त्वां वै सहितं सर्वसोदरैः ।
आक्रमिष्ये पदा मूर्ध्नि धर्मराजस्य पश्यतः ॥ १२

सञ्जयः—

नकुलस्तु ततो वाक्यम् इदमाह महीपते ॥ १३॥

नकुलः—

उलूक ब्रूहि कैतव्य धार्तराष्ट्रं सुयोधनम् ॥ १४

श्रुतं ते गदतो वाक्यं सर्वमेव यथातथम् ।
तथा कर्तास्मि कौरव्य यथा त्वमनुशासि माम् ॥ १५

सञ्जयः—

सहदेवोऽपि नृपते इदमाह वचोऽर्थवत् ॥ १५॥

सहदेवः—

सुयोधन मतिर्या ते वृथैवैषा भविष्यति ।
शोचिष्यसे महाराज सपुत्रज्ञातिबान्धवः ॥ १६॥
इमं च क्लेशमस्माकं हृष्टो यत् त्वं विकत्थसे ॥ १७

पूर्वतोऽनुवृत्तम्—

सञ्जयः—

विराटद्रुपदौ वृद्धावुलूकमिदमूचतुः ॥ १७॥

विराटद्रुपदौ—

दासभावं नियच्छेव साधोरिति मतिस्सदा ।
तौ च दासावदासौ वा पौरुषं यस्य यादृशम् ॥ १८॥

सञ्जयः—

शिखण्डी तु ततो वाक्यम् उलूकमिदमब्रवीत् ॥ १९

शिखण्डी—

वक्तव्यो भवता राजा पापेष्वभिरतस्सदा ।
पश्य त्वं मां रणे राजन् कुर्वाणं कर्म दारुणम् ॥ २०

यस्य वीर्यं समासाद्य मन्यसे विजयं युधि ।
तमहं पातयिष्यामि रथात् तव पितामहम् ॥ २१

अहं भीष्मवधे सृष्टो नूनं धात्रा महात्मना ।
सोऽहं भीष्मं हनिष्यामि मिषतां सर्वधन्विनाम् ॥ २२

सञ्जयः—

धृष्टद्युम्नोऽपि कैतव्यम् उलूकमिदमब्रवीत् ॥ २२॥

धृष्टद्युम्नः—

सुयोधनो मम वचो वक्तव्यो नृपतेस्सुतः ।
अहं द्रोणं हनिष्यामि सगणं सहबान्धवम् ॥ २३॥

कर्ता चाहं तथा कर्म यथा नान्यः करिष्यति ॥ २४

सञ्जयः—

तमब्रवीद्धर्मराजः कारुण्यार्थं वचो महत् ॥ २४॥

युधिष्ठिरः—

नाहं ज्ञातिवधं राजन् कामयेयं कथञ्चन ।

[1]कैतव्यस्य तु तद्वाक्यं निशम्य भरतर्षभः ।
दुश्शासनं च कर्णं च शकुनिं [2]चाभ्यभाषत ॥ २६

आज्ञापयत राज्ञश्च बलं मित्रबलं तथा ।
यथा प्रागुदयात् [3]सर्वा युक्ता तिष्ठत्यनीकिनी ॥ २७

ततः कर्णसमादिष्टा दूतास्सन्त्वरिता रथैः ।
उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः ॥ २८

---

पूर्वतोऽनुवृत्तम्—

तवैव दोषाद्दुर्बुद्धेस् सर्वमेतदनावृतम् ॥ २५॥

अवश्यं च मया कार्यं सर्वेषां रक्षणं महत् ॥ २६

स गच्छ मा चिरं तात उलूक यदि मन्यसे ।
इह वा तिष्ठ भद्रं ते वयं हि तव बान्धवाः ॥ २७

सञ्जयः—

उलूकस्तु ततो राजन् धर्मपुत्रं युधिष्ठिरम् ।
आमन्त्र्य प्रययौ तत्र यत्र राजा सुयोधनः ॥ २८

उलूकस्तत्र चागम्य दुर्योधनममर्षणम् ।
अर्जुनस्य समादेशं यथोक्तं सर्वमब्रवीत् ॥ २९

वासुदेवस्य भीमस्य धर्मराजस्य पौरुषम् ।
नकुलस्य विराटस्य द्रुपदस्य च भारत ॥ ३०

सहदेवस्य च वचो धृष्टद्युम्नशिखण्डिनोः ।
केशवार्जुनयोर्वाक्यं यथोऽक्तं सर्वमब्रवीत् ॥ ३१

[ अधिकः पाठः ]

1. ङ-म-मा—इदमर्धं नोपलभ्यते
2. अ-क—चापि भारत । घ-ङ—समभाषत ।
3. अ-क-ख-ग-घ-ङ—सर्वे युक्तास्तिष्ठन्त्वनीकिनीः ।

तूर्णं परिययुस्सेनां पूर्णां कर्णस्य शासनात् ।
आज्ञापयन्तो राज्ञस्तान् योगः प्रागुदयादिति ॥ २९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥
॥ ५८ ॥ उलूकदूतागमनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

युधिष्ठिरेण युद्धाय सेनाप्रस्थापनम् ॥ १ ॥ धृष्टद्युम्नेन भीमादीनां दुर्योधनादिभिस्सह द्वन्द्वयुद्धाय समादेशः ॥ २ ॥

सञ्जयः—

उलूकस्य वचश्श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
सेनां निर्यापयामास धृष्टद्युम्नपुरोगमाम् ॥ १
पदातिनीं [1]नागवतीं रथिनीमश्वबृन्दिनीम् ।
चतुर्विधबलां भीमाम् अकम्प्यां पृथिवीमिव ॥ २
भीमसेनादिभिर्गुप्तां सार्जुनैश्च महारथैः ।
धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमाम् ॥ ३
[2]तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्मदः ।

1. म—अश्वबृन्दीं रथिनीं गजबृन्दिनीम् ।
2. ख—तां सेनां स । ङ—ततस्त्वग्रे ।

द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो व्यकर्षत ॥ ४

यथाबलं यथोत्साहं रथिनस्समुपादिशत् ॥ ४॥

अर्जुनं सूतपुत्राय भीमं दुर्योधनाय च ।
धृष्टकेतुं च शल्याय गौतमायोत्तमौजसम् ॥ ५॥

अश्वत्थाम्ने च नकुलं शैब्यं च कृतवर्मणे ।
सैन्धवाय च वार्ष्णेयं युयुधानं समादिशत् ॥ ६॥

शिखण्डिनं च भीष्माय प्रमुखे तमकल्पयत् ॥ ७

सहदेवं शकुनये चेकितानं शलाय च ।
[1]द्रौपदे[2]यांस्तथा पञ्च त्रिगर्तेभ्यस्समादिशत् ॥ ८

वृषसेनाय सौभद्रं शेषाणां च महीक्षिताम् ।
समर्थं तं च मेने वै पार्थादभ्यधिकं रणे ॥ ९

एवं विभज्य योधांस्तान् पृथक् च सह चैव ह ।
ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् ॥ १०

धृष्टद्युम्नो महेष्वासस् सेनापतिपतिस्ततः ।
विधिवद्व्यूह्य मेधावी युद्धाय धृतमानसः ॥ ११

---

1. म-मा—धृष्टकेतुं च शैब्याय गौतमायोत्तमौजसम् ।
[अधिकः पाठः]

2. घ—यांश्च पाञ्चालयः । ख-ग-म-मा—यांश्च पञ्चभ्यः ।
ङ—यांश्च पाञ्चाल्यान् ।

[1]यथोद्दिष्टानि सैन्यानि पाण्डवानामयोजयत् ।
जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ १२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ ५८ ॥ उलूकदूतागमनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये १२ श्लोकाः ]
[ उलूकदूतागमनपर्व समाप्तम् ]

---

## ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥

( रथातिरथसङ्ख्यानपर्व )

भीष्मेण दुर्योधनाय स्वसामर्थ्यकथनपूर्वकमभयप्रदानम् ॥ १ ॥ तथा दुर्योधनप्रश्नेन स्वसेनायां रथातिरथसङ्ख्यानम् ॥ २ ॥

---

धृतराष्ट्रः—

प्रतिज्ञाते फल्गुनेन वधे भीष्मस्य सञ्जय ।
किमकुर्वत मे पुत्रा मन्दा दुर्योधनादयः ॥ १

हतमेव हि पश्यामि गाङ्गेयं पितरं रणे ।
वासुदेवसहायेन पार्थेन दृढधन्विना ॥ २

स चापरिमितप्रज्ञस् तच्छ्रुत्वा पार्थभाषितम् ।
किमुक्तवान् महेष्वासो भीष्मः प्रहरतां वरः ॥ ३

---

1. ग-ब—यथादृष्टानि । ख-ङ-म-मा—यथादृष्टान्यनीकानि ।

सैनापत्यं च सम्प्राप्य कौरवाणां धुरन्धरः ।
किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ॥ ४

वैशम्पायनः—

[1]ततस्तत् सञ्जयस्तस्मै सर्वमेव न्यवेदयत् ।
यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५

सञ्जयः—

सैनापत्यमनुप्राप्य भीष्मश्शान्तनवो नृप ।
दुर्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ६

[2]भीष्मः—

अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ६॥

सेनाकर्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च ।
कर्म कारयितुं चैव भृतानप्यभृतांस्तथा ॥ ७॥

यात्रायाने च युद्धे च [3]लब्धप्रशमनेषु च ।
भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ८॥

[4]व्यूहानां च समारम्भान् दैवगान्धर्वमानुषान् ।
तैरहं मोहयिष्यामि पाण्डवान् व्येतु ते ज्वरः ॥ ९॥

---

1. अ-क—श्लोकोऽयं नोपलभ्यते
2. अ-क—नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये । [अधिकः पाठः]
3. अ-क—तथा
4. ख-ग-घ-ङ-म-मा—व्यूहानपि महाभाग

सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् ।
यथावच्छास्त्रतो राजन् व्येतु ते मानसो ज्वरः ॥ १०॥

दुर्योधनः—

विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि ।
समस्तेषु महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ११॥

किं पुनस्त्वयि दुर्धर्षे सैनापत्ये व्यवस्थिते ।
द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ॥ १२॥

भवद्भ्यां पुरुषाग्र्याभ्यां [1]स्थिताभ्यां विजयो मम ।
न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ १३॥

रथसङ्ख्यां तु कार्त्स्न्येन परेषामात्मनस्तथा ।
[2]तथैवातिरथानां च वेत्तुमिच्छामि कौरव ॥ १४॥

पितामहो हि कुशलः परेषामात्मनस्तथा ।
श्रोतुमिच्छाम्यहं सर्वैस् सहैभिर्वसुधाधिपैः ॥ १५॥

भीष्मः—

गान्धारे शृणु राजेन्द्र रथसङ्ख्यां स्वके बले ।
ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ १६॥

बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
रथानां तव सेनायां यथामुख्यं तु मे शृणु ॥ १७॥

---

1. घ-ङ—अजेयाभ्यां जयो मम ।    2. अ-अर्धद्वयं न दृश्यते

भवानग्रे रथोदारस् सह सर्वैस्सहोदरैः ।
दुश्शासनप्रभृतिभिर् भ्रातृभिश्शतसम्मितैः ॥ १८॥

सर्वे कृतप्रहरणाश् छेद्यभेद्यविशारदाः ।
रथोपस्थे गजस्कन्धे गदायुद्धेऽसिचर्मणि ॥ १९॥

[1]संयातारः प्रहर्तारः कृतास्त्रा भारसाधनाः ।
इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ २०॥

एते हनिष्यन्ति रणे पाञ्चालान् युद्धदुर्मदान् ।
कृतकिल्बिषाः पाण्डवेयैर् धार्तराष्ट्रा मनस्विनः ॥ २१॥

तथाऽहं भरतश्रेष्ठ सर्वसेनापतिस्तव ।
शत्रून् विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ २२॥

न त्वात्मनो गुणान् वक्तुम् अर्हामि विदितोऽस्मि ते ॥ २३

कृतवर्मा त्वतिरथो भोज[2]श्शस्त्रभृतां वरः ।
अर्थसिद्धिं तव रणे करिष्यति न संशयः ॥ २४

शस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः ।
हनिष्यति [3]चमूं तेषां महेन्द्रो दानवानिव ॥ २५

मद्रराजो महेष्वासश् शल्यो मेऽतिरथो मतः ।
स्पर्धते वासुदेवेन[4]नित्यं यो वै रणे रणे ॥ २६

---

1 घ-ङ—संयन्तारः। ख—सम्यकृतारः?। म—सम्यत्तारः?। मा—संयन्तारं 2. ङ-म-मा—ः प्रहर्ता
3. ख-ग-घ-ङ—रिपूंस्तेऽग्रे। म-मा—रिपूंस्तेऽग्र्यान्
4. म—यो वै नित्यं रणाजिरे।

भागिनेयान् निजांस्त्यक्त्वा शल्यस्तेऽतिरथो मतः ॥ २६॥

एष योत्स्यति सङ्ग्रामे कृष्णं चक्रगदाधरम् ।
सागरोर्मिसमैर्[1]बाणैः प्लावयन्निव शात्रवान् ॥ २७॥

भूरिश्रवाः कृतास्त्रश्च तव चापि हितस्सुहृत् ।
सौमदत्तिर्महेष्वासो रथयूथपयूथपः ॥ २८॥

बलक्षयममित्राणां सुमहान्तं करिष्यति ॥ २९

सिन्धुराजो महाराज मतो मे द्विगुणो रथः ।
योत्स्यते समरे राजन् विक्रान्तो रथसत्तमः ॥ ३०

द्रौपदीहरणे पूर्वं परिक्लिष्टश्च पाण्डवैः ।
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा ॥ ३१

एतेन हि तदा राजंस् तप आस्थाय दारुणम् ।
सुदुर्लभो वरो लब्धः पाण्डवान् योद्धु[2]माहवे ॥ ३२

स एष रथशार्दूलस् तद्वैरं संस्मरन् रणे ।
योत्स्यते पाण्डवैस्तात प्राणांस्त्यक्त्वा [3]सुदुस्त्यजान् ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ३३ श्लोकाः]

---

1. ख-ग-घ—वेगैः । ङ-म-मा—वेगैः प्रहसन्निव
2. ङ—मर्हति  3. ङ—तु दुर्जयान्

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण दुर्योधनसेनायां रथातिरथसङ्ख्यानम् ॥ १ ॥

भीष्मः—

सुदक्षिणस्तु काम्भोजो रथ एकगुणो मतः ।
तवार्थसिद्धिमाकाङ्क्षन् योत्स्यते समरे परैः ॥ १

एतस्य रथसिंहस्य तवार्थे राजसत्तम ।
पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि ॥ २

एतस्य रथ[1]वंशे हि तिग्मवेगप्रहारिणः ।
काम्भोजानां महाराज शलभानामिवाततिः ॥ ३

नीलो माहिष्मतीवासी नीलवर्मा रथस्तव ।
रथवंशेन कदनं शत्रूणां वै करिष्यति ॥ ४

कृतवैरस्सदा चैव सहदेवेन पार्थिव ।
योत्स्यते सततं राजंस् तवार्थे कुरुनन्दन ॥ ५

विन्दानुविन्दावावन्त्यौ समेतौ रथसत्तमौ ।
कृतिनौ समरे तात दृढवीर्यपराक्रमौ ॥ ६

एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः ।

---

1. ग-ङ—वंशस्य भीमवेगप्रहारिणाम् ।
म—वंशो हि तिग्मतेजः प्रहारिणाम् ।
मा—वंशो हि तिग्मवेगप्रहारिणाम् ॥

गदाप्रासासिनाराचैस् तोमरैश्च करच्युतैः ॥ ७

युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ ।
यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ॥ ८

त्रिगर्ता भ्रातरः पञ्च रथोदारा मता मम ।
कृतवैराश्च पार्थैस्ते विराटनगरे तदा ॥ ९

मकरा इव राजेन्द्र समुद्धूततरङ्गिणीम् ।
गङ्गामिव क्षोभयन्ति पार्थानां युधि वाहिनीम् ॥ १०

ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम् ।
एते योत्स्यन्ति सङ्ग्रामे संस्मरन्तः पुराकृतम् ॥ ११

व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह ॥ ११॥
दिशो [1]विजयिता राजन् श्वेतवाहेन भारत ॥ १२

ते हनिष्यन्ति सेनां तां तानासाद्य महारथान् ।
परान् वरान् महेष्वासान् क्षत्रियाणां धुरन्धरान् ॥ १३

लक्ष्मणस्तव पुत्रश्च तथा दुश्शासनस्य च ।
उभौ तौ पुरुषव्याघ्रौ समरेष्वनिवर्तिनौ ॥ १४

तरुणौ सुकुमारौ च राजपुत्रौ यशस्विनौ ।
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः ॥ १५

रथिनौ रथशार्दूल मतौ मे रथसत्तमौ ।

---

1. अ-क—वितिमिरा राजन् श्वेतवाहेन वै कृताः ।

क्षत्रधर्मरतौ वीरौ महत् कर्म करिष्यतः ॥ १६

दण्डधारो महाराज रथ एको नरर्षभ ।
योत्स्यते [1]तव सङ्ग्रामे स्वेन सैन्येन पालितः ॥ १७

बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः ।
रथो मम मतस्तात महावेगपराक्रमः ॥ १८

एष योत्स्यति सङ्ग्रामे स्वां चमूं सम्प्रहर्षयन् ।
उग्रायुधो महेष्वासो धार्तराष्ट्र हिते रतः ॥ १९

कृपश्शारद्वतो राजन् रथयूथपयूथपः ।
प्रियान् प्राणान् परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥ २०

गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः ।
कार्तिकेय इवाजेयश् शरस्तम्बात् सुतो बभौ ॥ २१

[2]एष सेनास्सुबहुला विविधायुधकार्मुकाः ।
अग्निवत् समरे राजंश् चरिष्यति विमर्दयन् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

1. ङ-म-मा—समरं प्राप्य
2. ख-ग-घ-ङ-म-मा—एकस्सेनां बहुविधां विविधायुधकार्मुकः ।

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण दुर्योधनसैन्यस्य रथातिरथसङ्ख्यानम् ॥ १ ॥

भीष्मः—

शकुनिर्मातुलस्तेऽसौ रथ एको नराधिपः ।
प्रसज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः ॥ १

एतस्य सेना दुर्धर्षास् समरे प्रतियोधिनः ।
विविधायुधभूयिष्ठा वायुवेगसमा जवे ॥ २

द्रोणपुत्रो महेष्वासस् सर्वेषामति धन्विनाम् ।
समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ३

एतस्य हि महाराज यथा गाण्डीवधन्वनः ।
शरासनविनिर्मुक्तास् संसक्ता यान्ति सायकाः ॥ ४

नैष शक्यो महावीरस् सङ्ख्यातुं रथसत्तमः ।
निर्दहेदपि लोकांस्त्रीन् इच्छन्नेष महायशाः ॥ ५

क्रोधस्तेजश्च तपसा सम्भृतोऽश्रमवासिनाम् ।
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ६

दोषस्तस्य महानेको येनैष भरतर्षभ ।
न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ७

जीवितं प्रियमत्यर्थम् आयुष्कामस्सदा द्विजः ।

न ह्यस्य सदृशः कश्चिद् उभयोस्सेनयोरपि ॥ ८

हन्यादेकरथेनैव देवानामपि वाहिनीम् ।
वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ९

असङ्ख्येयगुणो वीरः प्रहर्ता दारुणद्युतिः ।
दण्डपाणिरिवासह्यः कालवत् प्रचरिष्यति ॥ १०

युगान्ताग्निसमः क्रोधात् सिंहग्रीवो महातपाः ।
एष भारत युद्धस्य पृष्ठं संशमयिष्यति ॥ ११

पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः ।
रणे कर्म महत् कर्ता अत्र मे नास्ति संशयः ॥ १२

अस्त्रवेगानिलोद्धूतस् सेनाकक्षेन्धनोत्थितः ।
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति न संशयः ॥ १३

रथयूथपयूथानां यूथपोऽयं नरर्षभः ।
भरद्वाजात्मजः कर्ता कर्म तीव्रं हिताय वः ॥ १४

सर्वमूर्धाभिषिक्तानाम् आचार्यस्स्थविरो गुरुः ।
गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः ॥ १५

नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम् ।
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् ॥ १६

[1]श्लाघत्येष सदा वीरः पार्थस्य गुणविस्तरैः ।

---

1. ख-ग-च—श्लाघ्यस्त्वेष । अ-क—श्लाघितो यस्सदा वीरः

पुत्रादभ्यधिकं चैनं भारद्वाजोऽनुपश्यति ॥ १७

हन्यादेकरथेनैव देवगन्धर्वदानवान् ।
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ १८

पौरवो राजशार्दूलस् तव राजन् महारथः ।
मतो मम रथोदारः परवीररथारुजः ॥ १९

स्वेन सैन्येन महता प्रतपञ् शत्रुवाहिनीम् ।
प्रधक्ष्यति स पाञ्चालान् कक्षं कृष्णगतिर्यथा ॥ २०

[1]सत्यश्रवा रथस्त्वेको राजपुत्रो बृहद्बलः ।
तव राजन् रिपुबले कालवत् प्रचरिष्यति ॥ २१

एतस्य योधा राजेन्द्र विचित्रकवचायुधाः ।
विचरिष्यन्ति सङ्ग्रामे निघ्नन्तश्शात्रवान् रणे ॥ २२

वृषसेनो रथश्रेष्ठः कर्णपुत्रो महारथः ।
प्रधक्ष्यति रिपूणां ते बलं तु बलिनां वरः ॥ २३

जलसन्धो महातेजा राजन् रथवरस्तव ।
त्यक्ष्यते समरे प्राणान् मागधः परवीरहा ॥ २४

एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
[2]रथेन वा महाबाहुः क्षपयञ्छत्रुवाहिनीम् ॥ २५

---

1. ग—सत्यपुत्रो रथवरो । ब-ङ-म-मा—सत्यव्रतो रथवरो
2. अ-क—अर्धचतुष्टयं नास्ति ।

रथ एष महाबाहो मतो मम नरर्षभः ।
त्वदर्थे त्यक्ष्यति प्राणान् सहसैन्यो महारणे ॥ २६

एष विक्रान्तयोधी च चित्रयोधी च सङ्गरे ।
वीतभीश्चापि ते राजन् शत्रुभिस्सह योत्स्यते ॥ २७

बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता ।
मम राजन् मतो युद्धे शूरो वैवस्वतोपमः ॥ २८

न ह्येष समरं प्राप्य निवर्तेत कथञ्चन ॥ २८॥

यथा सततगो राजन् स हि हन्यात् परान् रणे ।
सेनापतिर्महाराज सत्यवांस्ते महारथः ॥ २९॥

रणेष्वद्भुतकर्मा च रथी पररथारुजः ।
[1]एतस्य समरं दृष्ट्वा न व्यथाऽस्ति कदाचन ॥ ३०॥

उत्स्मयन्नुत्पतत्येष परान् रथपथे स्थितान् ॥ ३१

एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम् ।
कर्ता विमर्दे सुमहत् त्वदर्थे पुरुषोत्तमः ॥ ३२

अलम्बुसो राक्षसेन्द्रः क्रूरकर्मा महारथः ।
हनिष्यति परान् राजन् पूर्ववैरमनुस्मरन् ॥ ३३

एष राक्षससैन्यानां सर्वेषां रथसत्तमः ।
मायावी दृढवैरश्च समरे विचरिष्यति ॥ ३४

---

1 ङ—इदमर्धं न दृश्यते ।

प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान् ।
गजाङ्कुशधरश्श्रेष्ठो रथे चैव विशारदः ॥ ३५

एतेन युद्धमभवत् पुरा गाण्डीवधन्वनः ।
दिवसान् सुबहून् राजन्नुभयोर्जयकाङ्क्षिणोः ॥ ३६

तं चासहायं गान्धारे मानयन् पाकशासनिम् ।
अकरोत् संविदं तेन पाण्डवेन महात्मना ॥ ३७

एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
ऐरावतगतो राजा देवानामिव वासवः ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

---

भीष्मेण कर्णस्यार्धरथत्वे कथिते तेन भीष्मोपालम्भनपूर्वकं तज्जीवितावधि स्वेन युद्धाकरणप्रतिज्ञा ॥ १ ॥

---

भीष्मः—

अचलो वृषकश्चैव सहितौ भ्रातरावुभौ ।
रथौ तव दुराधर्षौ शत्रून् विध्वंसयिष्यतः ॥ १

बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ ।
गान्धार[1]मुख्यौ तरुणौ दर्शनीयौ महाबलौ ॥ २

सखा ते दयितो नित्यं य एष रणकर्कशः ।
उत्साहयति राजंस्त्वां विग्रहे पाण्डवैस्सह ॥ ३

परुषः कत्थनोऽतीव कर्णो वैकर्तनस्तव ।
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥ ४

एष नैव रथः [2]कर्णो [3]न चाप्यतिरथो रणे ॥ ४॥

विमुक्तः कवचेनैष सहजेन विचेतनः ।
कुण्डलाभ्यां च दिव्याभ्यां विमुक्तस्सततं घृणी ॥ ५॥

अभिशापाच्च रामस्य ब्राह्मण्यस्य च भाषणात् ।
करणानां वियोगाच्च तेन मेऽर्धरथो मतः ॥ ६॥

नैषोऽर्जुनं समासाद्य पुनर्जीवन् विमोक्ष्यते ॥ ७

सञ्जयः—

ततोऽब्रवीत् पुनर्द्रोणस् सर्वशस्त्रभृतां वरः ॥ ७॥

द्रोणः—

एवमेतद्यदात्थ त्वं न मिथ्याऽस्ति कथञ्चन ।
रणे रणेऽभिमानी च विमुखश्चापि दृश्यते ॥ ८॥

घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ॥ ९

---

1. अ-क—मुख्यातिरथौ दर्शनीयमहाबलौ ।
2. ख-ङ-म-मा—पूर्णः । 3. ख-घ-ङ-मा—नाप्येवातिरथो ।

सञ्जयः—

एतच्छ्रुत्वा तु राधेयः क्रोधादुद्वृत्तलोचनः ।
उवाच भीष्मं राधेयस् तुदन् वाग्भिः प्रतोदवत् ॥ १०

कर्णः—

[1]पितामह यथेष्टं मां वाक्छरैरवकृन्तसि ।
अनागसं [2]सदा द्वेषाद् एवमेव पदे पदे ॥ ११

मर्षयामि च तत् सर्वं दुर्योधनकृतेन वै ।
त्वं तु मां मन्यसेऽशक्तं यथा कापुरुषं तथा ॥ १२

भवानर्धरथो मह्यं मतो वै नात्र संशयः ।
सर्वस्य जगतश्चैव गाङ्गेयो न मृषा वदेत् ॥ १३

कुरूणामहितो नित्यं न च राजाऽवबुध्यते ॥ १३॥

को हि नाम समानेषु राजसूदात्तकर्मसु ।
तेजोवधमिमं कुर्याद् बिभेदयिषुराहवे ॥ १४॥

यथा त्वं गुणविद्वेषाद् अपरागं चिकीर्षसि ॥ १५

न हायनैर्न पलितैर् न वित्तैर्न च बन्धुभिः ।
महारथत्वं सङ्ख्यातुं शक्यं क्षत्रस्य कौरव ॥ १६

बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठास्स्मृता वैश्याश् शूद्रास्तु वयसाऽधिकाः ॥ १७

---

1. म—यथा यथेष्टं मम वा वाक्छरैरुपकृन्तसि ।
2. ब-ङ—सदाऽमर्षाद् ।

यथेच्छकं स्वयं ब्रूया रथानतिरथांस्तथा ।
कामद्वेषसमायुक्तो मोहात् प्रकुरुते भवान् ॥ १८

दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम् ।
त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत् तव ॥ १९

भिन्ना हि सेना नृपते दुस्सन्धेया भवत्युत ।
मौला हि पुरुषव्याघ्र किमु नाना समुत्थिता ॥ २०

एषां द्वेषस्समुत्पन्नो योधानां युधि भारत ।
तेजोवधो [1]नः क्रियते प्रत्यक्षेण विशेषतः ॥ २१

रथानां क च विज्ञानं क च भीष्मोऽल्पचेतनः ।
अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥ २२

आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश ।
पाण्डवास्सहपञ्चालाश् शार्दूलं वृषभा इव ॥ २३

क च युद्धं विमर्दो वा [2]मन्त्रास्सुव्याहृतानि वा ।
क च भीष्मो गतवया मन्दात्मा कालचोदितः ॥ २४

एकाकी स्पर्धते नित्यं वीर्येण जगता सह ।
न चान्यं पुरुषं कञ्चिन्मन्यते मोघदर्शनः ॥ २५

---

1. म—निष्क्रियते। मा—हि क्रियते प्रत्यक्षं ते।
2. अ-क—मन्त्रं स्वव्याकृतानि वा

श्रोतव्यं खलु वृद्धानाम् इति शास्त्रनिदर्शनम् ।
[1]न त्वेव ह्यतिवृद्धानां पुनर्बाला हि ते मताः ॥ २६

अहमेको हनिष्यामि पाण्डवान् नात्र संशयः ।
सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति ॥ २७

कृतस्सेनापतिस्त्वेष त्वया भीष्मो नराधिप ।
[2]सेनापतौ यशो गन्ता न तु योधान् कथञ्चन ॥ २८

नाहं जीवति गाङ्गेये योत्स्ये राजन् कथञ्चन ।
हते भीष्मे तु योद्धास्मि सर्वैरेव महारथैः ॥ २९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २९ श्लोकाः ]

## ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

**भीष्मेण स्वपराक्रमकथनेन कर्णगर्हणे दुर्योधनेन भीष्मं प्रति सान्त्वनपूर्वकं परसेनायां रथातिरथसङ्ख्यानप्रार्थना । १ ॥ भीष्मेण पाण्डवसेनायां रथातिरथसङ्ख्यानम् ॥ २ ॥**

**भीष्मः—**

समुद्यतोयं भारो मे सुमहान् सागरोपमः ।
धार्तराष्ट्रस्य सङ्ग्रामे वर्षपूगाभिचिन्तितः ॥ १

1. अ-क-ख—नास्तीदमर्धम्
2. ख-ग-घ-ङ—सेनापतीन् गुणो गन्ता योद्धारं न कदाचन ।
म—सेनापतिं गुणो गन्ता न तु योद्धा कथञ्चन ।
मा—सेनापतिं गुणो गन्ता न योद्धारं कथञ्चन ।

तस्मिन्नभ्यागते काले प्रतप्ते रोमहर्षणे ।
मिथो भेदो न मे कार्यस् तेन जीवसि सूतज ॥ २

न ह्यहं त्वद्य विक्रम्य स्थविरोऽपि शिशोस्तव ।
युद्धश्रद्धामहं छिन्द्यां जीवितस्य च सूतज ॥ ३

जामदग्न्येन रामेण महास्त्राणि विमुञ्चता ।
न मे व्यथा कृता काचित् त्वं तु मे किं करिष्यसि ॥ ४

कामं नैतत् प्रशंसन्ति [1]सन्तस्स्वबलसंस्तवम् ।
वक्ष्यामि तु त्वां सन्तप्तो निहीन कुलपांसन ॥ ५

समेतं पार्थिवं क्षत्रं काशिराजस्वयंवरे ।
निर्जित्यैकरथेनैव याः कन्यास्तरसा हृताः ॥ ६

ईदृशानां सहस्राणि विशिष्टानामथो पुनः ।
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥ ७

त्वां प्राप्य [2]वैरपुरुषं कुरूणामनयो महान् ।
उपस्थितो विनाशाय यतस्व पुरुषो भव ॥ ८

युध्यस्व समरे पार्थं येन विस्पर्धसे सह ।
द्रक्ष्यामि त्वां विनिर्मुक्तम् अस्माद्युद्धात् सुदुर्मते ॥ ९

सञ्जयः—

तमुवाच ततो राजा धार्तराष्ट्रो महामनाः ॥ ९॥

---

1. ख-ब-ङ-मा—सन्त आत्मबलस्तवम् ।
2. ख-ङ—वै कापुरुषं ।

दुर्योधनः—

मां समीक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् ॥ १०

चिन्त्यतामिदमेकाग्रं मम निश्श्रेयसं परम् ।
उभावपि भवन्तौ मे महत् कर्म करिष्यतः ॥ ११

भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् ।
ये चैवातिरथास्तत्र ये चैव रथयूथपाः ॥ १२

बलाबलममित्राणां श्रोतुमिच्छामि कौरव ।
प्रभातायां [1]रजन्यां वै इदं युद्धं भविष्यति ॥ १३

भीष्मः—

एते रथा[2]स्तवाख्यातास् तथैवातिरथा नृप ।
ये चाप्यर्धरथा राजन् पाण्डवानामतश्शृणु॥ १४

यदि कौतूहलं तेऽद्य पाण्डवानां निबोध मे ।
रथसङ्ख्यां [3]शृणुष्व त्वं सहैभिर्वसुधाधिपैः ॥ १५

स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः ।
अग्निवत् समरे तात चरिष्यति न संशयः ॥ १६

भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसम्मितः ।
नागायुतबलो मानी तेजसा न स मानुषः ॥ १७

1. ङ-म-मा—तु शर्वर्याम् ।
2. म-मा—स्ते सङ्ख्यातास् ।
3. ग-घ-ङ-म-मा—महाबाहो सहैभिर्वसुधाधिपैः ।

माद्रीपुत्रौ तु रथिनौ द्वावेव पुरुषर्षभौ ।
अश्विनाविव रूपेण तेजसा च समन्वितौ ॥ १८

एते चमूमुखगतास् स्मरन्तः क्लेशमात्मनः ।
रुद्रवत् प्रचरिष्यन्ति तत्र मे नास्ति संशयः ॥ १९

सर्व एव महात्मानस् साल[1]स्तम्भा इवोद्गताः ।
प्रादेशेनाधिकाः पुम्भिर् अन्यैस्ते च प्रमाणतः ॥ २०

सिंहसंहननास्सर्वे पाण्डुपुत्रा महाबलाः ।
चरितब्रह्मचर्याश्च सर्वे तात तपस्विनः ॥ २१

ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ।
जवे प्रहारे सम्मर्दे सर्व एवातिमानुषाः ॥ २२

सर्वैर्जिता महीपाला दिग्जये भरतर्षभ ॥ २२॥

न चैषां पुरुषाः केचिद् आयुधानि गदाश्शरान् ।
विषहन्ति सदा कर्तुम् अधिज्यानपि कौरव ॥ २३॥

उद्यन्तुं वा गदा गुर्वीश् शरान् वा [2]क्षेप्तुमाहवे ॥ २४

जवे लक्षस्य हरणे [3]भङ्क्ते चापि विकर्षणे ।
बालैरपि भवन्तस्तैस् सर्व एव विशेषिताः ॥ २५

एतत् सैन्यं समासाद्य व्याघ्रा इव बलोत्कटाः ।

---

1. ङ-म-मा—स्कन्धा । 2. ङ-म-मा—विप्रकर्षितुम् ।
3. म-मा—भेद्ये वाऽथ ।

विध्वंसयिष्यन्ति रणे मा स्म तैस्सह सङ्गमः ॥ २६

एकैकशस्ते सङ्ग्रामे हन्युस्सर्वान् महीक्षितः ।
प्रत्यक्षं तव राजेन्द्र राजसूये यथाऽभवत् ॥ २७

द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ।
ते स्मरन्तश्च सङ्ग्रामे विचरिष्यन्ति [1]रुद्रवत् ॥ २८

लोहिताक्षो गुडाकेशो नारायणसहायवान् ।
उभयोस्सेनयोर्वीरो रथो नास्तीह तादृशः ॥ २९

न हि देवेषु वा पूर्वं दानवेषूरगेषु वा ।
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु ॥ ३०

भूतोऽथवा भविष्यो वा रथः कश्चिन्मया श्रुतः ।
समायुक्तो महाराज रथः पार्थस्य धीमतः ॥ ३१

वासुदेवश्च संयन्ता रथश्चैवाव तादृशः ।
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ॥ ३२

अभेद्यं कवचं दिव्यम् अक्षय्यौ च महेषुधी ।
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ॥ ३३

याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ।
वज्रादीनि च मुख्यानि नानाप्रहरणानि वै ॥ ३४

दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।

---

1. ङ-म-मा—कालवत् ।

हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ॥ ३५

एष हन्याद्धि संरम्भी बलवान् सत्यसङ्गरः ।
भवत्सेनां महाबाहुस् स्वां चैव परिपालयन् ॥ ३६

अहं चैनं प्रत्युदीयाम् आचार्यो वा धनञ्जयम् ।
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि ॥ ३७

य एनं शरवर्षाणि [1]मुञ्चन्तमुदियाद्रथी ।
जीमूत इव घर्मान्ते महावातसमीरितः ॥ ३८

समायुक्तस्तु कौन्तेयो वासुदेवसहायवान् ।
तरुणश्च कृती चैव जीर्णौ चावामुभावपि ॥ ३९

**सञ्जयः—**

एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ॥ ४०

मनोभिस्सहसा वेगैस् संस्मृत्य च पुरातनम् ।
सामर्थ्यं पाण्डवेयानां यथा प्रत्यक्षदर्शनात् ॥ ४१

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्**
**उद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥**
**॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥**
**[ अस्मिन्नध्याये ४१ श्लोकाः ]**

---

1. म-मा—वर्षन्त ।

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण पाण्डवसेनायां रथातिरथसङ्ख्यानम् ।

भीष्मः—

द्रौपदेया महाराज सर्वे पञ्च महारथाः ।
वैराटिरुत्तरश्चैव रथो मम महान् मतः ॥ १

अभिमन्युर्महा[1]बाहू रथयूथपयूथपः ।
समः पार्थेन समरे वासुदेवेन वा भवेत् ॥ २

लध्वस्त्रश्चित्रयोधी च मनस्वी दृढविक्रमः ।
संस्मरन् वै परिक्लेशं स्वपितुर्विक्रमिष्यति ॥ ३

सात्यकिर्माधवश्शूरो रथयूथपयूथपः ।
एष वृष्णिप्रवीराणाम् अमर्षी जितसाध्वसः ॥ ४

उत्तमौजास्तथा राजन् रथो मम महान् मतः ।
युधामन्युश्च विक्रान्तो रथोदारो नरर्षभः ॥ ५

एतेषां बहुसाहस्रा रथा नागा हयास्तथा ।
योत्स्यन्ते ते तनुं त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥ ६

पाण्डवैस्सह राजेन्द्र तव सेनासु भारत ।
अग्निमारुतवद् राजन्नाह्वयन्तः परस्परम् ॥ ७

1. ख-ग-ङ—तेजा ।

अजेयौ समरे वृद्धौ विराटद्रुपदावुभौ ।
महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ॥ ८

वयोवृद्धावपि हि तौ क्षत्रधर्मपरायणौ ।
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ९

सम्बन्धकेन राजेन्द्र तौ तु वीर्यबलान्वयात् ।
आर्यवृत्तौ महेष्वासौ स्नेहपाशयुतावुभौ ॥ १०

[1]कारणं प्राप्य तु नरास् सर्वं एव महाभुजाः ।
शूरा वा कातरा वाऽपि भवन्ति नरपुङ्गवाः ॥ ११

एकायनगतावेतौ पार्थिवौ दृढधन्विनौ ।
प्राणांस्त्यक्त्वा परं शक्त्या घट्टितारौ नराधिप ॥ १२

पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ ।
सम्बन्धिभावं रक्षन्तौ महत् कर्म करिष्यतः ॥ १३

लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत ।
प्रत्ययं परिरक्षन्तौ महत् कर्म करिष्यतः ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥१५६॥

॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि षष्ठोऽध्यायः॥ ६ ॥

[ अस्मिन्नध्याये १४ श्लोकाः ]

---

1. अ-क—श्लोकोऽयं न दृश्यते ।

## ॥ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण पाण्डवसेनायां रथातिरथसङ्ख्यानम् ॥ १ ॥

भीष्मः—

पाञ्चालराजस्य सुतो राजन् परपुरञ्जयः ।
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ १

एष योत्स्यति सङ्ग्रामे नाशयन् पूर्वसंस्थितम् ।
वैरं योऽसौ [1]विप्रथयंस् तव सेनासु भारत ॥ २

एतस्य बहुलास्सेनाः पाञ्चालाश्च प्रभद्रकाः ।
सेनाऽसौ रथवंशेन महत् कर्म करिष्यति ॥ ३

धृष्टद्युम्नश्च सेनानीस् सर्वसेनासु भारत ।
मतो मेऽतिरथो राजन् द्रोणशिष्यो महारथः ॥ ४

एष योत्स्यति सङ्ग्रामे सूदयन् वै परान् बहून् ।
भगवानिव सङ्क्रुद्धः पिनाकी युगसङ्क्षये ॥ ५

एतस्य तद्रथानीकं कथयन्ति रणप्रियाः ।
बहुत्वात् सागरप्रख्यं देवानामिव संयुगे ॥ ६

धृतवर्मा तु राजेन्द्र मतो मेऽर्धरथो महान् ।
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ॥ ७

---

1. ख-घ-ङ—संप्रथयं ।

शिशुपालसुतो वीरश् चेदिराजो महारथः ।
धृष्टकेतुर्महेष्वासस् सम्बन्धी पाण्डवस्य ह ॥ ८

एष चेदिपतिश्शूरस् सह पुत्रेण भारत ।
महारथानां सुकरं महत् कर्म करिष्यति ॥ ९

क्षत्रधर्मरतो मह्यं [1]मतः परपुरञ्जयः ।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ॥ १०

जयन्तश्चामितौजाश्च सत्यजिच्च महारथः ।
महारथा महात्मानस् सर्वे पाञ्चालसत्तमाः ॥ ११
योत्स्यन्ति समरे तात संरब्धा इव कुञ्जराः ॥ ११॥

अजो भोजश्च विक्रान्तौ पाण्डवेषु महारथौ ।
[2]योत्स्येते बलिनौ वीरौ परं शक्त्या यतिष्यतः ॥ १२॥

शीघ्रास्त्राश्चित्रयोद्धारः कृतिनो दृढविक्रमाः ।
केकयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्मदाः ॥ १३॥
सर्वे चैव रथोदारास् सर्वे लोहितकध्वजाः ॥ १४

[3]कौशिकस्सुकुमारश्च नीलो यश्चापरो नृप ।
सूर्यदत्तश्च शङ्खश्च मदिराक्षश्च नामतः ॥ १५
[4]सर्व एते रथोदारास् सर्वे चाहवलक्षणाः ।

---

1. मा—रथः । 2. ख-घ-ङ-म-मा—पाण्डवानां सहायार्थे ।
3. ङ-म-मा—काशिक । 4. मा—श्लोकद्वयं न दृश्यते

सर्वास्त्रविदुषस्सर्वे महात्मानो मता मम ॥ १६

वार्धक्षेमिर्महाराज रथो मम महान् मतः ।
चित्रायुधश्च नृपतिर् मतो मे रथसत्तमः ॥ १७

स हि सङ्ग्रामशोभी च भक्तश्चापि किरीटिनः ॥ १७॥

चेकितानस्सत्यधृतिः पाण्डवानां महारथौ ।
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम ॥ १८॥

व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ।
मतौ मम रथोदारौ पाण्डवानां न संशयः ॥ १९॥

सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ॥ २०

यस्समो वासुदेवेन भीमसेनेन चाभिभूः ।
स योत्स्यति हि विक्रम्य समरे तव सैनिकैः ॥ २१

मां च द्रोणं कृपं चैव यथा सम्मन्यते भवान् ।
तथा स समरश्लाघी मन्तव्यो रथसत्तमः ॥ २२

काश्यः परमशीघ्रास्त्रश् श्लाघनीयो रथोत्तमः ॥ २२॥

रथ एकगुणो मह्यं ज्ञेयः परपुरञ्जयः ॥ २३

स्वयं च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः ।
सत्यजित् समरश्लाघी द्रुपदस्यात्मजो युवा ॥ २४

गतस्सोऽतिरथत्वं हि धृष्टद्युम्नेन सम्मितः ।

पाण्डवानां यशस्कामो महत् कर्म करिष्यति ॥ २५

अनुरक्तश्च शूरश्च रथोऽयमपरो महान् ।
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरन्धरः ॥ २६

दृढधन्वा महेष्वासः पाण्डवानां रथोत्तमः ।
श्रेणिमान् कौरवश्रेष्ठो वसुदानश्च पार्थिवः ॥ २७

उभावेतावतिरथौ मतौ मम परन्तपौ ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

## ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण दुर्योधनं प्रति शिखण्डिनः स्त्रीपूर्वत्वमभिधाय तेन सह युद्धाकरणप्रतिज्ञा ॥

भीष्मः—

रोचमानो महाराज पाण्डवानां महारथः ।
योत्स्यतेऽमरवत् सङ्ख्ये परसैन्येषु भारत ॥ १

[1]पुरुजित् कुन्तिभोजश्च महेष्वासो महारथः ।
मातुलो भीमसेनस्य स च मेऽतिरथो मतः ॥ २

1. ख—इतः चत्वारः श्लोकाः न सन्ति ।

एष वीरो महेष्वासः कृती च निपुणश्च ह ।
चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः ॥ ३

स योत्स्यति हि विक्रम्य मघवानिव दानवैः ।
योधा ये चास्य विख्यातास् सर्वे युद्धविशारदाः ॥ ४

भागिनेयकृते [1]वीर स करिष्यति सङ्गरम् ।
सुमहत् कर्म पाण्डूनां स्थितः प्रियहिते रतः ॥ ५

भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः ।
मतो मे बहुमायावी रथयूथपयूथपः ॥ ६

योत्स्यते समरे तात मायाभिस्समरप्रियः ।
ये चास्य राक्षसा वीरास् सचिवा वशवर्तिनः ॥ ७

एते चान्ये च बहवो नानाजनपदेश्वराः ।
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ॥ ८

एते प्राधान्यतो राजन् पाण्डवस्य महात्मनः ।
रथाश्चातिरथाश्चैव ये चान्येऽर्धरथा मताः ॥ ९

नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप ।
महेन्द्रेणेव वीर्येण पाल्यमानां किरीटिना ॥ १०

तैरहं समरे वीर मायाविद्भिर्जयैषिभिः ।
[2]योत्स्यामि जयमाकाङ्क्षन्नथवा निधनं रणे ॥ ११

---

1. क—वीरः। ख-ङ—कर्म। म—वीर सन्
2. ख—योत्स्ये जयं वा निश्चित्य मरणं वा रणे ह्यहम्। [पाठान्तरम्]

[1]वासुदेवं च पार्थं च चक्रगाण्डीवधारिणौ ।
सन्ध्यागताविवार्केन्दू समेष्ये पुरुषोत्तमौ ॥ १२

ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः ।
सहसैन्यानहं तांश्च समेष्ये रणमूर्धनि ॥ १३

एते रथाश्चातिरथाश्च तुभ्यं
यथाप्रधानं नृप कीर्तिता मया ।
तथा परे येऽर्धरथाश्च केचित्
तथैव तेषामपि कौरवेन्द्र ॥ १४

अर्जुनं वासुदेवं च ये चान्ये तत्र पाण्डवाः ।
[2]सर्वानावारयिष्यामि यावद्द्रक्ष्ये शिखण्डिनम् ॥ १५

पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम् ।
उद्यतेषुमभिप्रेक्ष्य प्रतियुध्यन्तमाहवे ॥ १६

लोकस्तं वेद यदहं पितुः प्रियचिकीर्षया ।
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्ये धृतव्रतः ॥ १७

चित्राङ्गदं कौरवाणाम् आधिपत्येऽभ्यषेचयम् ।
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम् ॥ १८

---

1. ख—इतः श्लोकत्रयं नास्ति
2. ख—सर्वांस्तान् वारयिष्यामि
अ-क—सर्वांस्तान् धारयिष्यामि यावद्द्रक्ष्यामि भारत ।

देवव्रतत्वं विख्यातं पृथिव्यां सर्वराजसु ।
नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कदाचन ॥ १९

स हि स्त्रीपूर्वको राजन् शिखण्डी यदि ते श्रुतः ।
कन्या भूत्वा पुमाञ्जातो न योत्स्ये तेन भारत ॥ २०

सर्वांस्त्वन्यान् हनिष्यामि पार्थिवान् भरतर्षभ ।
यान् समेष्यामि समरे न तु कुन्तीसुतान् नृप ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
॥ ५९ ॥ रथातिरथसङ्ख्यानपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]
[ रथातिरथसङ्ख्यानपर्व समाप्तम् ]

---

## ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥

[ अथाम्बोपाख्यानपर्व ]

शिखण्डिनोऽसंहरणकारणप्रश्ने तत्कथनाय भीष्मेण दुर्योधनं प्रति अम्बोपाख्यानकथनारम्भः ॥ १ ॥ तथा स्वयंवरे स्वेन अम्बादिकन्यात्रय-हरणकथनम् ॥ २ ॥

---

दुर्योधनः—

किमर्थं भरतश्रेष्ठ नैव हन्याः शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ १

पूर्वमुक्त्वा महाबाहो पाण्डवान् सह सोमकैः ।
हनिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

शृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि सम्प्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥ ३

महाराजो मम पिता शन्तनुर्भरतर्षभः ।
दिष्टान्तमाप धर्मात्मा समये भरतर्षभ ॥ ४

ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयम् ॥ ५

तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः ।
विचित्रवीर्यं राजानम् अभ्यषिञ्चं यथाविधि ॥ ६

मयाऽभिषिक्तो राजेन्द्र यवीयानपि धर्मतः ।
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत ॥ ७

तस्य दारक्रियां तात चिकीर्षुरहमुद्यतः ।
अनुरूपादिव कुलाद् इत्येव च मनो दधे ॥ ८

अथाश्रौषं महाबाहो तिस्रः कन्यास्स्वयंवरे ।
रूपेणाप्रतिमास्सर्वाः काशिराजसुतास्तदा ॥ ९

अम्बां चैवाम्बिकां चैव तथैवाम्बालिकामपि ॥ ९॥

राजानश्च समाहूताः पृथिव्यां भरतर्षभ ॥ १०

अम्बा ज्येष्ठाऽभवत् तासाम् अम्बिका त्वथ मध्यमा ।
अम्बालिका च राजेन्द्र राजकन्या यवीयसी ॥ ११

सोऽहमेकरथेनैव गतः काशीपतेः पुरीम् ।
अपश्यं ता महाबाहो तिस्रः कन्यास्स्वलङ्कृताः ॥ १२

राज्ञश्चैव समावृत्तान् पार्थिवान् पृथिवीपते ॥ १२॥

[1]ततोऽहं तान् नृपान् सर्वान् आहूय समरे स्थितान् ।
रथमारोपयाञ्चक्रे कन्यास्ता भरतर्षभ ॥ १३॥

वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा ।
अवोचं पार्थिवान् सर्वान् अहं तत्र समागतान् ॥ १४॥

भीष्मश्शान्तनवः कन्या हरतीति पुनः पुनः ।
ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः ॥ १५॥

प्रसह्य हि हराम्येष मिषतां वो नरर्षभाः ॥ १६

[2]योगो योग इति क्रुद्धास् सारथींश्चाप्यचोदयन् ॥ १६॥

ते रथैर्मेघसङ्काशैर् गजैश्च गजयोधिनः ।
उष्ट्रैश्चाश्वैर्महेष्वासास् समुत्पेतुरुदायुधाः ॥ १७॥

ततस्ते पृथिवीपालास् सर्व एव विशाम्पते ।
रथव्रातेन महता सर्वतः पर्यवारयन् ॥ १८॥

तानहं शरवर्षेण महता प्रत्यवारयम् ॥ १९

सर्वान् नृपांश्चाप्यजयं देवराडिव दानवान् ।

---

1. ख—इतः सार्धः श्लोकः नास्ति  2. अ-क—अर्धद्वयं न दृश्यते

अपातयं शरैर्दीप्तैः प्रहसन् भरतर्षभ ॥ २०
तेषामापततां चित्रान् ध्वजान् हेमपरिष्कृतान् ।
एकैकेन हि बाणेन भूमौ पातितवानहम् ॥ २१
[1]हयांस्तेषां गजांश्चैव सारथींश्चाप्यहं रणे ।
अपातयं शरैश्चैव प्रहसन् पुरुषर्षभ ॥ २२
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं च मे ॥ २२॥
[2]प्रणिपेतुश्च सर्वे वै प्रशशंसुश्च पार्थिवाः ।
तत आदाय ताः कन्या नृपतींश्च विसृज्य तान् ॥ २३॥
ततोऽहं हास्तिनपुरम् आगां जित्वा महीक्षितः ॥ २४
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत ।
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २५ श्लोकाः]

## ॥ षष्ट्युत्तरशततमोऽध्यायः ॥

**भीष्मेण विचित्रवीर्यस्य कन्यात्रयेण विवाहप्रयतने अम्बया स्वस्य साल्वकामत्वकथनपूर्वकं तत्समीपगमने भीष्मं प्रत्यनुज्ञायाचनम् ॥ १ ॥**

**भीष्मः—**

ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसङ्गृह्य दाशेयीमिदमब्रवम् ॥ १

1. अ-क—इदमर्धं न दृश्यते
2. अ-क-ख-म-मा—कोशेषु नास्त्ययं श्लोकः ।

इमाः काशीपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का उपार्जिताः ॥ २

ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ३

सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशीपतेस्सुता ॥ ४

अम्बा—

भीष्म त्वमसि धर्मज्ञस् सर्वशास्त्रविशारदः ।
श्रुत्वा च वचनं मह्यं धर्म्यं कर्तुमिहार्हसि ॥ ५

मया साल्वपतिः पूर्वं मनसाऽभिवृतो वरः ।
तेन चापि वृता पूर्वं रहस्यविदिते पितुः ॥ ६

कथं मामन्यकामां त्वं राजधर्ममतीत्य वै ।
वासयेथा गृहे भीष्म कौरवस्सन् विशेषतः ॥ ७

एतद्बुद्ध्वा विनिश्चित्य मनसा भरतर्षभ ।
यत् क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ८

स मां प्रतीक्षते [1]वोढुं साल्वराजो विशाम्पते ।
तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि ॥ ९

1. ङ-म-मा—राजन्

कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीरः पृथिव्यामिति नश्श्रुतम् ॥ १०

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥१६०॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि द्वितीयोऽध्यायः ॥ २॥
[ अस्मिन्नध्याये १० श्लोकाः ]

---

## ॥ एकषष्ट्युत्तरशततमोऽध्यायः ॥

भीष्मानुज्ञया साल्वं गताया अम्बायास्तेन परित्यागः ॥ १ ॥

---

भीष्मः—

ततोऽहं समनुज्ञाप्य कालीं सत्यवतीं तदा ।
मन्त्रिणश्चर्त्विजश्चैव तथैव च पुरोहितान् ॥ १
समनुज्ञासिषं कन्याम् अम्बां ज्येष्ठां नराधिप ॥ १॥

अनुज्ञाता ययौ सा तु कन्या साल्वपतेः पुरम् ।
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा ॥ २॥

अतीत्य च तमध्वानम् आससाद नराधिपम् ।
सा तमासाद्य राजानं साल्वं वचनमब्रवीत् ॥ ३॥

अम्बा—

आगताऽहं महाबाहो त्वामुद्दिश्य महामते ।

[1]अभिनन्दस्व मां राजन् सदा प्रियहिते रताम् ॥ ४॥
प्रतिपादय मां राजन् [2]धर्मार्थं चैव धर्मतः ।
त्वं हि मे मनसा ध्यातस् त्वया चाप्युपमन्त्रिता ॥ ५॥

भीष्मः—

तामब्रवीत् साल्वपतिस् स्मयन्निव विशाम्पते ॥ ६

साल्वः—

त्वयाऽन्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ६॥
गच्छ भद्रे पुनस्तत्र सकाशं भीष्मकस्य वै ।
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ॥ ७॥
त्वं हि भीष्मेण निर्जित्य नीता प्रीतिमती तदा ।
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ॥ ८॥
[3]नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ॥ ९
कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत् ।
नारीं विदितविज्ञानः परेषां धर्ममादिशन् ॥ •१०
यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयम् ॥ १०॥

भीष्मः—

अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता ॥ ११

---

1. म—मा—अर्धद्वयं न दृश्यते
2. ग—धर्मादींश्चैव। ङ—धर्मं त्वं चर
3. ख—इतः श्लोकचतुष्टयं नास्ति

अम्बा—

नैवं वद महीपाल नैतदेवं कथञ्चन ॥ ११॥

नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्शन ।
बलान्नीताऽस्मि रुदती विद्राव्य पृथिवीपतीन् ॥ १२॥

भजस्व मां साल्वपते भक्तां बालामनागसीम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥ १३॥

साऽहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव [1]ततोऽहं भृशमागता ॥ १४॥

न स भीष्मो महाबाहुर् मामिच्छति विशाम्पते ।
भ्रातृहेतोस्समारम्भो भीष्मस्येति श्रुतं मया ॥ १५॥

भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ १६॥

यथा साल्वपते नान्यं नरं यामि कथञ्चन ।
त्वामृते पुरुषव्याघ्रं तथा मूर्धानमालभे ॥ १७॥

न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि साल्वैतत् सत्येनात्मानमालभे ॥ १८॥

भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ १९॥

1. ख-घ-म-मा—तवैव गृह । ङ—तथैव गृह

भीष्मः—

तामेवं भाषमाणां तु साल्वः काशिपतेस्सुताम् ।
अत्यजद्भरतश्रेष्ठ जीर्णां त्वचमिवोरगः ॥ २०॥

एवं बहुविधैर्वाक्यैर् याच्यमानस्तयाऽनघ ।
नाश्रद्दधत् साल्वपतिः कन्यायां भरतर्षभ ॥ २१॥

ततस्सा मन्युनाऽऽविष्टा ज्येष्ठा काशिपतेस्सुता ।
अब्रवीत् साश्रुनयना बाष्पविह्वलया गिरा ॥ २२॥

अम्बा—

त्वया त्यक्ता गमिष्यामि यत्र तत्र विशाम्पते ।
तत्र मे सन्तु गतयस् सन्तस्सत्यं यथा ध्रुवम् ॥ २३॥

भीष्मः—

एवं तां भाषमाणां तु नृशंसस्साल्वराट् तदा ।
परितत्याज कौरव्य करुणं परिदेविनीम् ॥ २४॥

गच्छ गच्छेति तां साल्वः पुनः पुनरभाषत ।
बिभेमि भीष्मात् सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ २५॥

एवमुक्ता तु सा तेन साल्वेनादीर्घदर्शिना ।
निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २६॥ श्लोकाः]

## ॥ द्विषष्ट्युत्तरशततमोऽध्यायः ॥

अम्बया भीष्मस्य प्रतिचिकीर्षया तापसाश्रममेत्य तेषु स्ववृत्तान्त-निवेदनम् ॥ १ ॥

---

भीष्मः—

निष्क्रामन्ती सा नगराच् चिन्तयामास भारत ॥ ॥

अम्बा—

पृथिव्यां नास्ति युवतिर् विषमस्थतरा मया ।
बन्धुभिर्विप्रहीणाऽस्मि साल्वेन च निराकृता ॥ १॥
न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ।
अनुज्ञाता तु भीष्मेण साल्वमुद्दिश्य कारणम् ॥ २॥
[1]किं तु गर्हाम्यथात्मानम् अथ भीष्मं दुरासदम् ।
आहोस्वित् पितरं मूढं यो मेऽकार्षीत् स्वयंवरम् ॥ ३॥
ममायं स्वकृतो दोषो याऽहं भीष्मरथात् तदा ।
प्रवृत्ते वैशसे युद्धे साल्वार्थं नापतं पुरा ॥ ४॥
तस्येयं फल[2]निर्वृत्तिर् यदापन्नाऽस्मि मूढवत् ॥ ५
धिग् भीष्मं धिक् च मे मन्दं पितरं मूढचेतसम् ॥ ५॥

---

1. ख-घ-ङ-म-मा—गर्हयिष्ये किमात्मानम् ।
ग—दर्शयिष्ये महात्मानम्
2. ख-ङ-म-मा—निष्पत्तिर्यथाऽऽपन्नाऽस्मि

येनाहं वीर्य[1]शुल्केति पण्यस्त्रीवत् प्रवेशिता ॥ ६

धिङ्मां धिक् साल्वराजानं धिग् धातारमथापि वा ।
येषां दुर्नीतभावेन प्राप्ताऽस्म्यापदमुत्तमाम् ॥ ७

सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः ।
अनयस्यास्य तु मुखं भीष्मश्शान्तनवो मम ॥ ८

सा भीष्मे प्रतिकर्तव्यम् अहं पश्यामि साम्प्रतम् ।
तपसा वा युधा वाऽपि दुःखहेतुस्स मे मतः ॥ ९

को नु भीष्मं युधा जेतुम् उत्सहेत महीपतिः ॥ ९॥

भीष्मः—

एवं सा परिनिश्चित्य जगाम नगराद्बहिः ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ १०॥

ततस्तामवसद्रात्रिं तापसैः परिपालिता ॥ ११

आचख्यौ च यथावृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ॥ १२

हरणं च विसर्गं च साल्वेन च विसर्जनम् ॥ १२॥

ततस्तत्र महानासीद् ब्राह्मणस्संशितव्रतः ।
शैखावत्यस्तपोवृद्धश् शास्त्रे चारण्यके गुरुः ॥ १३॥

आर्तां तामाह स मुनिश् शैखावत्यो महातपाः ।

---

1. ङ—शुल्केन वेश्या

निश्वसन्तीं स तां बालां दुःखशोकपरायणाम् ॥ १४॥

शैखावत्यः—

एवं गते तु किं भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागैस्तु तपोयुक्तैर्महात्मभिः ॥ १५॥

भीष्मः—

सा त्वेनमब्रवीद्राजन् क्रियतां मदनुग्रहः ।
प्रव्राजितुमिहेच्छामि तपस्तप्स्यामि दुश्चरम् ॥ १६॥

मयैव तानि कर्माणि पूर्वदेहेषु मूढया ।
कृतानि नूनं पापानि तेषामेतत् फलं ध्रुवम् ॥ १७॥

नोत्सहेऽहं पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा साल्वेन च निराकृता ॥ १८॥

उपदिष्टमिहेच्छामि [1]तपसे वीतकल्मषाः ।
युष्माभिर्देवसङ्काशैः कृपा भवतु वो मयि ॥ १९॥

स तामाश्वासयत् कन्यां दृष्टान्तागमहेतुभिः ।
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैस्सह ॥ २०॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये २०॥ श्लोकाः ]

---

1. ग-म—तपसा वीतकल्मषा । ख-व-ङ—तापस्यं
मा—तापस्यं वीतकल्मषम्

## ।। त्रिषष्ट्युत्तरशततमोऽध्यायः ।।

अम्बां प्रति तापसेषु चिन्तयत्सु होत्रवाहननाम्नोऽम्बामातामहस्य तत्रागमनम् ॥ १ ॥ तेनाम्बायाः परशुरामं प्रति शरणागतिचोदना ॥ २ ॥

भीष्मः—

ततस्ते तापसास्सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तय[1]न्तस्ते किं कार्यमिति धर्मिणः ॥ १

केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्मदुपालम्भे मतिं चक्रुर्द्विजोत्तमाः ॥ २

केचित् साल्वपतिं गत्वा नियोक्ष्यामीति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता यथा हि सा ॥ ३

एवं गते तु किं शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च ते सर्वे तापसास्संशितव्रताः ॥ ४

तापसाः—

अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५

प्रतिवक्ष्यति राजाऽसौ पिता ते यदनन्तरम् ।
तत्र वत्स्यासि कल्याणि सुखं सर्वगुणान्विता ॥ ६

---

1. ख-ङ-म-मा—न्तो वै ।

न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ।
पतिर्वाऽपि गतिर्नार्याः पिता वा वरवर्णिनि ॥ ७

गतिः पतिस्समस्ताया विषमे च पिता गतिः ।
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ॥ ८

राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ॥ ८॥

भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ।
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ॥ ९॥

**भीष्मः—**

[1]ततस्त्वन्येऽब्रुवन् वाक्यं तापसास्तां तपस्विनीम् ॥ १०

**तापसाः—**

त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ।
प्रार्थयिष्यन्ति राजानस् तस्मान्मैवं मनः कृथाः ॥ ११

**अम्बा—**

न शक्यं काशिनगरं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ १२

उषिता ह्यन्यथा बाल्ये पितुर्वेश्मनि तापसाः ॥ १२॥

नाहं गमिष्ये भद्रं वस् तत्र यत्र पिता मम ।
तपस्तप्तुमभीप्सामि तापसैः परिपालिता ॥ १३॥

यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।

---

1. ख-घ-ङ-म-मा—ततस्तु तेऽब्रुवन् वाक्यं ब्राह्मणास्तां ।

दौर्भाग्यं ब्राह्मणश्रेष्ठास् तस्मात् तप्स्याम्यहं तपः ॥ १४॥

भीष्मः—

इत्येवं तेषु विप्रेषु चिन्तयत्सु यथातथम् ।
राजर्षिस्तद्वनं प्राप्तस् तपस्वी होत्रवाहनः ॥ १५॥

[1]तां तथा भाविनीं दृष्ट्वा श्रुत्वा चोद्विग्नमानसः ॥ १६

ततस्ते तापसास्सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिस्स्वागताद्याभिर् आसनेनोदकेन च ॥ १७

तस्योपविष्टस्य सतो विश्रान्तस्योपशृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥ १८

अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
[2]राजर्षिस्स महातेजा बभूवोद्विग्नमानसः ॥ १९

तां तथा वादिनीं श्रुत्वा दृष्ट्वा च स महातपाः ।
[3]राजर्षिः कृपयाऽऽविष्टो महात्मा होत्रवाहनः ॥ २०

स वेपमान उत्थाय मातुस्तस्याः पिता तदा ।
तां कन्यामङ्कमारोप्य पर्याश्वासयत प्रभो ॥ २१

स तामपृच्छत् कार्त्स्न्येन व्यसनोत्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥ २२

ततस्स राजर्षिरभूद् दुःखशोकसमन्वितः ।

---

1. अ-क—नास्तीदमर्धम् ।    2. ङ—इदमर्धं न दृश्यते ।
3. ङ-म—इदमर्धं नोपलभ्यते ।

कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः ॥ २३

अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखिताम् ॥ २३॥

होत्रवाहनः—

मा गाः पितृगृहं भद्रे मातुस्ते जनको ह्यहम् ॥ २४

दुःखं छेत्स्यामि तेऽहं वै मयि वर्तस्व पुत्रवत् ।
पर्याप्तं ते तपः पुत्रि यदेवं परिशुष्यसि ॥ २५

गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।
रामस्ते सुमहद्दुःखं शोकं चैवापनेष्यति ॥ २६

हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ।
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ॥ २७

प्रतिष्ठापयिता स त्वां धर्म्ये पथि निरामये ॥ २७॥

भीष्मः—

ततस्तु सुस्वरं बाष्पम् उत्सृजन्ती पुनः पुनः ।
अब्रवीत् पितरं मातुस् सा तदा होत्रवाहनम् ॥ २८॥

अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ।
अपि नामाद्य पश्येयम् आर्यं तं लोक[1]विश्रुतम् ॥ २९॥

कथं च तीव्रं दुःखं मे नाशयिष्यति भार्गवः ।
एतदिच्छाम्यहं श्रोतुं यथा यास्यामि तत्र वै ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

---

1. ख-ग-व-ड—भावनम् ।

## ॥ चतुष्षष्ट्यधिकशततमोऽध्यायः ॥

होत्रवाहनेन अम्बां प्रति परशुरामदर्शनाय महेन्द्रपर्वतं गच्छेत्युक्ते रामसखस्याकृतव्रणस्य तत्रागमनम् ॥ १ ॥ अकृतव्रणनाम्नि महर्षौ होत्रवाहनेन अम्बायाः वृत्तान्तनिवेदनम् ॥ २ ॥ अम्बयाऽपि तस्मिन् स्ववृत्तान्तस्य तथैवेत्युक्तिः ॥ ३ ॥

होत्रवाहनः—

रामं द्रक्ष्यसि भद्रे त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसन्धं महाबलम् ॥ १

महेन्द्रं वै गिरिश्रेष्ठं रामो नित्यमुपासते ।
ऋषयो वेदविदुषो गन्धर्वाप्सरसस्तथा ॥ २

तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य च तं मूर्ध्ना तपोवृद्धं दृढव्रतम् ॥ ३

ब्रूयाश्चैनं पुनर्भद्रे यत् ते कार्यं मनीषितम् ।
मयि सङ्कीर्तिते रामस् सर्वं तत् ते करिष्यति ॥ ४

मम रामस्सखा वत्से प्रीतियुक्तस्सुहृच्च मे ।
जमदग्निसुतो वीरस् सर्वशस्त्रभृतां वरः ॥ ५

भीष्मः—

एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद् रामस्यानुचरः प्रियः ॥ ६

ततस्ते मुनयस्सर्वे समुत्तस्थुस्सहस्रशः ।

स च राजा वयोवृद्धस् सृञ्जयो होत्रवाहनः ॥　　७

ततः पृष्ट्वा यथान्यायम् अन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥　　८

ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
धन्या दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥　　९

ततः कथान्ते राजर्षिर् महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणाम् अपृच्छदकृतव्रणम् ॥　　१०

क्व सम्प्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वरम् ॥　　११

अकृतव्रणः—

भवन्तमेव सततं रामः कीर्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥　　१२

इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥　　१३

इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्य चेयं [1]भवति का भवतेच्छामि वेदितुम् ॥　　१४

---

1. ग-घ-ङ—तव च का ब्रवीहीच्छामि वेदितुम् ।
ख—कस्येयं तनया का वा तावदिच्छामि वेदितुम् ।
म-मा—तव च का भवतीच्छामि वेदितुम् ।

होत्रवाहनः—

दौहित्रीयं मम विभो काशिराज[1]सुता प्रिया ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीनां तथाऽनघ ॥ १५

इयमम्बेति विख्याता ज्येष्ठा काशिपतेस्सुता ।
अम्बिकाम्बालिके त्वन्ये [2]कनीयस्यौ तपोधन ॥ १६

समेतं पार्थिवं क्षत्रं काशिपुर्यां तदाऽभवत् ।
कन्यानिमित्तं विप्रर्षे तत्रासीदुत्सवो महान् ॥ १७

ततः किल महावीर्यो भीष्मश्शान्तनवो नृपान् ।
[3]अधिक्षिप्य महातेजास् तिस्रः कन्या जहार ताः ॥ १८

निर्जित्य पृथिवीपालान् अथ भीष्मो गजाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिस्सह भारत ॥ १९

सत्यवत्यै निवेद्याथ विवाहार्थमनन्तरम् ।
भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः ॥ २०

तं तु वैवाहिकं दृष्ट्वा कन्येयं [4]समुपार्जितम् ।
अब्रवीत् तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ॥ २१

मया साल्वपतिर्वीर मनसाऽभिवृतः पतिः ।
न मामर्हसि धर्मज्ञ दातुं भ्रात्रेऽन्यकामुकाम् ॥ २२

तच्छ्रुत्वा वचनं भीष्मस् सम्मन्त्र्य सह मन्त्रिभिः ।

---

1. ङ-म-मा—सुता शुभा ।
2. ख-ङ-मा—यवीयस्यौ ।
3. ङ-म-मा—अवाक्षिप्य ।
4. ख-ग-ब—समुपस्थिता । ङ—समुपस्थितम् ।

निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥ २३

अनुज्ञाता तु भीष्मेण साल्वं सौभपतिं ततः ।
कन्येयं मुदिता तत्र काले वचनमब्रवीत् ॥ २४

अम्बा—

विसर्जिताऽस्मि भीष्मेण धर्मं मां प्रतिपाद्य ।
मनसाऽभिवृतः पूर्वं मया त्वं पार्थिवर्षभ ॥ २५

भीष्मः—

प्रत्याचख्यौ च साल्वोऽस्याश् चारित्रस्याभिशङ्कितः ।
सेयं तपोवनं प्राप्ता तपस्यभिरता भृशम् ॥ २६

मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात् ।
अस्य दुःखस्य चोत्पत्तिर् भीष्म एवेति मन्यते ॥ २७

अम्बा—

भगवन्नेवमेवैतद् यदाह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः ॥ २८

न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अवमानभयाच्चैव व्रीडया च महामुने ॥ २९

यत्तु मां भगवान् रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यम् इति मे भगवन् मतिः* ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

* ग—नात्राध्यायसमाप्तिः ।

## ॥ पञ्चषष्ट्युत्तरशततमोऽध्यायः ॥

अकृतव्रणेन अम्बोक्तं विमृश्य भीष्मस्य प्रतीकारनिर्धारणम् ॥ १ ॥ अम्बया परेद्युरागतं जामदग्न्यं प्रति भीष्मवधप्रार्थना ॥ २ ॥

अकृतव्रणः—

दुःखं द्वयोरिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत् त्वं वत्से वदस्व मे ॥ १

यदि सौभपतिर्भद्रे नियोक्तव्यो मतस्तव ।
नियोक्ष्यति महात्मा स रामस्त्वद्धितकाम्यया ॥ २

[1]अथापगेयं भीष्मं त्वं रामेणेच्छसि धीमता ।
रणे विनिर्जितं द्रष्टुं कुर्यात् तदपि भार्गवः ॥ ३

सृञ्जयस्य वचश्श्रुत्वा तथैव च शुचिस्मिते ।
[2]यदत्रानन्तरं कार्यं तदत्रैव विचिन्त्यताम् ॥ ४

अम्बा—

अपनीताऽस्मि भीष्मेण भगवन्नविजानता ।
न हि जानाति मे भीष्मो ब्रह्मन् साल्वगतं मनः ॥ ५

एतद्विचार्य मनसा [3]भवानेतद्विनिश्चयम् ।
विचिनोतु यथान्यायं विधानं क्रियतां तथा ॥ ६

---

1. घ—इतः सार्धश्लोको नास्ति 2. अ-म—इदमर्धं नास्ति
3. म—भगवानेव निश्चयम् ।

भीष्मे वा कुरुशार्दूले साल्वराजेऽथवा पुनः ।
उभयोरेव वा ब्रह्मन् युक्तं यत् तत् समाचर ॥ ७

निवेदितं मया ह्येतद् दुःखमूलं यथातथम् ।
विधानं तत्र भगवन् कर्तुमर्हसि युक्तितः ॥ ८

अकृतव्रणः—

उपपन्नमिदं भद्रे यदेवं वरवर्णिनि ॥
धर्म्यं प्रतिवचो ब्रूयाश्शृणु चेदं वचो मम ॥ ९

यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् ।
साल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ १०

तेन त्वं निर्जिता भद्रे यस्मान्नीताऽसि भामिनि ।
संशयस्साल्वराजस्य तेन त्वयि सुमध्यमे ॥ ११

भीष्मः पुरुषमानी च जितकाशी तथैव च ।
तस्मात् प्रतिक्रिया युक्ता भीष्मे कारयितुं त्वया ॥ १२

अम्बा—

ममाप्येष [1]सदा ब्रह्मन् हृदि कामोऽभिवर्तते ।
घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ १३

भीष्मं वा साल्वराजं वा यं वा दोषेण गच्छसि ।
प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता* ॥ १४

1. ख-घ-म—महान् । * ग—अत्रैवाध्यायसमाप्तिर्दृश्यते ।

भीष्मः—

एवं कथयतामेव तेषां स दिवसो गतः ।
रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता ॥ १५

ततो रामः प्रादुरासीत् प्रज्वलन्निव तेजसा ।
शिष्यैः परिवृतो राजन् जटाचीरधरो मुनिः ॥ १६

धनुष्पाणिरदीनात्मा खड्गं बिभ्रत् परश्वधी ।
विरजा राजशार्दूल सोऽभ्ययात् सृञ्जयं नृपम् ॥ १७

ततस्तं तापसा दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयो राजन् सा च कन्या तपस्विनी ॥ १८

पूजयामासुरव्यग्रा मधुपर्केण भार्गवम् ।
अर्चितश्च यथान्यायं निषसाद सहैव तैः ॥ १९

ततः पूर्वव्यतीतानि कथयेते स्म तावुभौ ।
आसातां जामदग्न्यश्च सृञ्जयश्चैव भारत ॥ २०

[1]तथा कथान्ते राजर्षिर् भृगुश्रेष्ठं महाबलम् ।
उवाच मधुरं काले रामं वचनमर्थवत् ॥ २१

होत्रवाहनः—

रामेयं मम दौहित्री काशिराजसुता प्रभो ।
अस्याः शृणु यथातत्त्वं कार्यं कार्यविशारद ॥ २२

---

1. म—नास्तीदमर्धम् ।

भीष्मः—

परमं कथ्यतां चेति तां रामः प्रत्यभाषत ।
तत[1]स्साऽभ्यवदद्रामं ज्वलन्तमिव पावकम् ॥ २३

ततोऽभिवाद्य चरणौ रामस्य शिरसा शुभा ।
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतस्स्थिता ॥ २४

प्ररुरोद वरारोहा बाष्पव्याकुललोचना ।
प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् ॥ २५

रामः—

[2]यथा त्वं सृञ्जयस्यास्य तथा त्वं मे नृपात्मजे ।
ब्रूहि यत् ते मनोदुःखं करिष्ये वचनं तव ॥ २६

अम्बा—

भगवन् शरणं त्वाऽद्य प्रपन्नाऽस्मि महाव्रतम् ।
शोकपङ्कार्णवे मग्नां घोरादुद्धर मां विभो ॥ २७

भीष्मः—

तस्याश्च दृष्ट्वा रूपं च वयश्चाभिनवं पुनः ।
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् ॥ २८

किमियं वक्ष्यतीत्येवं [3]विमृशन् भृगुसत्तमः ।
इति दध्यौ चिरं रामः कृपयाऽभिपरिप्लुतः ॥ २९

कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता ।

---

1. ख-ग-घ-म—स्साऽभ्यागमद्द्राजन् । 2. म—श्लोकद्वयं न दृश्यते ।
3. अ-क-ख-ग-घ—विममर्श कुरूद्वह

सर्वमेव यथातत्त्वं कथयामास भार्गवे ॥ ३०

तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
उवाच तां वरारोहां निश्चितार्थविनिश्चयम् ॥ ३१

रामः—

प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि ।
करिष्यति वचो मह्यं श्रुत्वा धर्मं नराधिपः ॥ ३२

न चेत् करिष्यति वचो मयोक्तं जाह्नवीसुतः ।
धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा ॥ ३३

अथवा ते मतिस्तत्र राजपुत्रि न वर्तते ।
यावत् साल्वपतिं वीरं योजयाम्यत्र कर्मणि ॥ ३४

अम्बा—

विसर्जिताऽहं भीष्मेण श्रुत्वैव भृगुनन्दन ।
[1]साल्व[2]राजगतं भावं मम पूर्वं मनीषितम् ॥ ३५

सौभराजमुपेत्याहम् अवोचं दुर्वचं वचः ।
न च मां प्रत्यगृह्णात् स चारित्रपरिशङ्कितः ॥ ३६

एतत् सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन ।
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ॥ ३७

[3]मम तु व्यसनस्यास्य भीष्मो मूलं महाव्रतः ।

1. ख—इतः श्लोकद्वयं नास्ति
2. ङ—राजं पतिं चेतो मम पूर्वमनीषितम् ।    3. म-मा—ममाव ।

येनाहं वशमानीता समुत्थाप्य बलात् तदा ॥ ३८

जहि भीष्मं महाबाहो यत्कृते दुःखमीदृशम् ।
प्राप्ताऽहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ३९

स हि लुब्धश्च मानी च जितकाशी च भार्गव ।
तस्मात् प्रतिक्रियां कर्तुं युक्तं तस्मै त्वयाऽनघ ॥ ४०

एष मे ह्रियमाणाया भारतेन तदा विभो ।
अभवद्धृदि सङ्कल्पो घातयेयं महाव्रतम् ॥ ४१

तस्मात् कामं ममाद्येमं राम सम्पादयानघ ।
जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः ॥ ४२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम् उद्योगपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

## ॥ षट्षष्ट्युत्तरशततमोऽध्यायः ॥

रामेणाम्बां प्रति शस्त्रग्रहणं विनैव साल्वभीष्मयोर्वाचैव स्ववशगमनकथनम् ॥ १ ॥ अम्बया रामं प्रति भीष्मो जेतव्य एवेति पुनः प्रार्थना ॥ २ ॥ अकृतव्रणेनापि रामं प्रति अम्बामनोरथपूरणप्रार्थना ॥ ३ ॥ ततोऽम्बयासह रामेण भीष्मपराजयं प्रतिज्ञाय कुरुक्षेत्रगमनम् ॥ ४ ॥

भीष्मः—

एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो ।
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ १

रामः—

काश्ये कामं न गृह्णामि शस्त्रं वै वरवर्णिनि ।
ऋते ब्रह्मविदां हेतोः किमन्यत् करवाणि ते ॥ २

वाचा भीष्मश्च साल्वश्च मम राज्ञि वशानुगौ ।
भविष्यतोऽनवद्याङ्गि तत् करिष्यामि मा शुचः ॥ ३

न तु शस्त्रं ग्रहीष्यामि कथञ्चिदपि भामिनि ।
ऋते नियोगाद्विप्राणाम् एष मे समयः कृतः ॥ ४

अम्बा—

मम दुःखं भगवता व्यपनेयं यतस्ततः ।
तच्च भीष्मप्रसूतं मे तं जहीश्वर मा चिरम् ॥ ५

रामः—

काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ ।
शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ॥ ६

अम्बा—

जहि भीष्मं रणे [1]वीर मम चेदिच्छसि प्रियम् ।
[2]प्रतिश्रुतं च यदिदं तत् सत्यं कर्तुमर्हसि ॥ ७

भीष्मः—

तयोस्संवदतोरेवं राजन् रामाम्बयोस्तदा ।

---

1. अ-क—राम गर्हन्तमसुरं यथा ।
समाहूय रणे वीर मम चेदिच्छसि प्रियम् । [अधिकः पाठः]
2. ख—इतः अर्धषट्कं न दृश्यते ।

अकृतव्रणो जामदग्न्यम् इदं वचनमब्रवीत् ॥ ८

अकृतव्रणः—

शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि ।
जहि भीष्मं रणे राम गर्जन्तमसुरं यथा ॥ ९
यदि [1]भीष्मो रणे राम समाहूतस्त्वया मृधे ।
[2]निर्जितोऽस्मीति वा ब्रूयात् कुर्याद्वा वचनं तव ॥ १०
कृतमस्या भवेत् कार्यं कन्याया भृगुनन्दन ।
वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ॥ ११
इयं चापि प्रतिज्ञा ते तदा राम महामुने ॥ ११॥
जित्वा वै क्षत्रियान् सर्वान् ब्राह्मणेषु प्रतिश्रुता ॥ १२
ब्राह्मणः क्षत्रियो वैश्यश् शूद्रश्चैव रणे यदि ।
ब्रह्मद्विड् भविता तं वै हनिष्यामीति भार्गव ॥ १३
[3]शरणं हि प्रपन्नानां भीतानां जीवितार्थिनाम् ।
न शक्ष्यामि परित्यागं कर्तुं जीवन् कथञ्चन ॥ १४
यश्च क्षत्रं रणे कृत्स्नं विजेष्यति समागतम् ।
दृप्तात्मानमहं तं च हनिष्यामीति भार्गव ॥ १५
स एष विजयी राम भीष्मः कुरुकुलोद्वहः ।
तेन युध्यस्व सङ्ग्रामे समेत्य भृगुनन्दन ॥ १६

---

1. म-मा—भीष्मस्त्वयाऽऽहूतो रणे राम महामुने ।
2. ख—इतः श्लोकद्वयं नास्ति ।
3. ङ-म-मा—श्लोकद्वयं नोपलभ्यते ।

रामः—

स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम ।
तथैव च करिष्यामि यथा [1]साम्ना न लप्स्यते ॥ १७
कार्यमेतन्महद्ब्रह्मन् काशिकन्यामनोगतम् ।
गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः ॥ १८
यदि भीष्मो रणश्लाघी न करिष्यति मद्वचः ।
हनिष्याम्यहमुद्रिक्तम् इति मे निश्चिता मतिः ॥ १९
न हि बाणा मयोत्सृष्टास् सज्जन्तीह शरीरिणाम् ।
कायेषु विदितं तुभ्यं पुरा क्षत्रियसङ्गरे ॥ २०

भीष्मः—

एवमुक्त्वा ततो रामस् सह तैर्ब्रह्मवादिभिः ।
[2]प्रयाणाय मतिं कृत्वा समुत्तस्थौ महातपाः ॥ २१
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः ।
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ॥ २२
अभ्यागच्छत् ततो रामस् सह तैर्ब्रह्मवादिभिः ।
कुरुक्षेत्रं महाराज कन्यया सह भार्गवः ॥ २३
न्यविशन्त ततस्सर्वे परिगृह्य सरस्वतीम् ।
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

---

1. मा—साम्नैव लप्स्यते । 2. म—अर्धचतुष्टयं न दृश्यते ।

## ॥ सप्तषष्ट्युत्तरशततमोऽध्यायः ॥

भीष्मस्य परशुरामागमनश्रवणेन अभ्यर्चनाय तत्समीपगमनम् ॥ १ ॥ परशुरामस्य क्रोधेन भीष्मं प्रति अम्बापरित्यागो न युक्तः पुनस्तां परिगृह्णीष्वेत्युक्तिः ॥ २ ॥ भीष्मेण परशुरामं प्रति बहुधा अम्बापरित्यागकारणकथनम् ॥ ३ ॥ परशुरामे भीष्मस्याचार्यप्रतिपत्तिकथनञ्च ॥ ४ ॥ ततो भीष्मपरशुरामयोर्युद्धाय परस्परविवादः ॥ ५ ॥

भीष्मः—

ततस्तृतीये दिवसे समे देशे व्यवस्थितः ।
प्रेषयामास मे राजन् प्राप्तोऽस्मीति महाव्रतः ॥ १

तमागतमहं श्रुत्वा विषयान्तं महाबलम् ।
अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् ॥ २

गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः ।
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ३

स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ४

रामः—

भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया ।
अकामेयमिहानीता पुनश्चैव विसर्जिता ॥ ५

विभ्रंशिता त्वया हीयं [1]धर्मादास्ते यशस्विनी ।

---

1. ग-ब-ङ-मा—धर्मावाप्तेः परावरात् । म—धर्मावाप्ता पुरा वरात् ।

परामृष्टां त्वया हीमां को [1]हि गन्तुमिहार्हति ॥ ६

प्रत्याख्याता हि साल्वेन त्वया नीतेति भारत ।
तस्मादिमां मन्नियोगात् प्रतिगृह्णीष्व भारत ॥ ७

स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् ।
न युक्तमवमानोऽयं राज्ञा कर्तुं त्वयाऽनव ॥ ८

भीष्मः—

ततस्तं वै विमनसम् उदीक्ष्याहमथाब्रवम् ।
नाहमेनां पुनर्दद्यां ब्रह्मन् भ्रात्रे कथञ्चन ॥ ९

साल्वस्याहमिति प्राह पुरा मामेव भार्गव ।
मया चैवाभ्यनुज्ञाता [2]गता सौभपुरं प्रति ॥ १०

न भयान्नाप्यनुक्रोशान्न लोभान्नार्थकाम्यया ।
क्षात्रं धर्ममहं जह्याम् इति मे व्रतमाहितम् ॥ ११

अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ ११॥
न करिष्यसि चेदेतद् वाक्यं मे नरपुङ्गव ।

हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ॥ १२॥
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ १३

तमहं गीर्भिरिष्टाभिः पुनः पुनररिन्दम ।

---

1. म-मा—ऽभिवक्तु ।  2. अ-क-ग-घ—गतेयं नगरं प्रति ।

अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ १४

[1]यदा प्रयाच्यमानोऽपि प्रसादं न करोति मे ॥ १४॥

प्रणम्य तमहं मूर्ध्ना भूयो ब्राह्मणसत्तमम् ।
अब्रवं कारणं किं तद् यत् त्वं योद्धुमिहेच्छसि ॥ १५॥

इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ १६॥

ततो मामब्रवीद्रामः क्रोध[2]संरक्तलोचनः ॥ १७

रामः—

जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णसे ।
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महीपते ॥ १८

न हि मे विद्यते शान्तिर् अन्यथा कुरुनन्दन ।
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ॥ १९

त्वया विभ्रंशिता हीयं भर्तारं नाधिगच्छति ॥ १९॥

भीष्मः—

तथा ब्रुवन्तं तमहं रामं परपुरञ्जयम् ।
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ २०॥

गुरुत्वं त्वयि सम्प्रेक्ष्य जामदग्न्यं पुरातनम् ।
प्रसादये त्वां भगवंस् त्यक्तैषा तु पुरा मया ॥ २१॥

---

1. अ-क-म-मा—नास्तीदमर्धम् ।
2. म—पर्याकुलेक्षणः

को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन् स्त्रीणां दोषान् महात्ययान् ॥ २२॥

न भयाद्वासवस्यापि धर्मं जह्यां महाव्रत ।
प्रसीद मा वा यद्वा ते कार्यं तत् कुरु मा चिरम् ॥ २३॥

अयं चापि विशुद्धात्मन् पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतश्श्लोको महात्मना ॥ २४॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ २५॥

स त्वं गुरुरिति प्रेम्णा मया सम्मानितो भृशम् ।
गुरुवृत्तिं न जानीषे तस्माद्योत्स्यामि वै त्वया ॥ २६॥

गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः ।
विशेषतस्तपोवृद्धम् एवं क्षान्तं मया तव ॥ २७॥

उद्यतेषु रणे दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायिनम् ॥ २८॥

ब्रह्महत्या न तस्य स्याद् इति धर्मेषु निश्चयः ॥ २९
क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन ॥ २९॥

यो यथा वर्तते यस्मिंस् [1]तस्मिन्नेव प्रवर्तयन् ।

1. ब-ङ—तथा तस्मिंस्तु वर्तयेत् । ख-म—तथा तस्मिन् प्रवर्तते ।
मा—तथा तस्मिन् प्रवर्तनात् ।

नाधर्मं समवाप्नोति नरश्श्रेयश्च विन्दति ॥ ३०॥

अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।
[1]अनर्थे संशयापन्नश् श्रेयान् निस्संशयो नरः ॥ ३१॥

तस्मात् संशयितेऽप्यर्थे यथान्यायं प्रवर्तसे ।
तस्माद्योत्स्यामि सहितस् त्वया राम महाहवे ॥ ३२॥

पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् ॥ ३३

एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ।
तत् करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ॥ ३४

द्वन्द्वे राम यथेष्टं ते [2]सज्जीभव महाद्युते ॥ ३४॥

तत्र त्वं निहतो राम मया शरशतार्दितः ।
[3]प्राप्स्यसे निर्जिताँल्लोकान् शस्त्रपूतो मया रणे ॥ ३५॥

सङ्गच्छ विनिवर्तस्व कुरुक्षेत्रं रणप्रिय ।
समाह्वय महाबाहो युद्धाय त्वं तपोधन ॥ ३६॥

अपि यत्र त्वया राम कृतं शौचं पुरा पितुः ।
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ॥ ३७॥

---

1. ख-ग-घ—अनर्थे संशयापन्ने श्रेयो निस्संशये न च ।
ङ—अनर्थस्संशयापन्नः श्रेयान् निस्संशये न च ।
म—अनर्थे संश्रयापन्नः श्रेयान्निस्संशयेन च ।
अ-क—अर्थसंशयमापन्नश् श्रेयान् निश्श्रेयसो नरः ।

2. ख-ङ-म-मा—सज्जो भव महामुने

3. ख—लप्स्यसे । ग—तप्स्यसे ।

तत्र राम स गच्छ त्वं त्वरितं युद्धदुर्मदः ।
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ॥ ३८॥

यच्चापि कत्थसे राम बहुशः परिषत्सु वै ।
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छृणु ॥ ३९॥

[1]न तदा जातवान् भीष्मः क्षत्रियोऽपि हि मद्विधः ।
[2]पश्चाज्जातानि तेजांसि तृणेषु ज्वलितं यथा ॥ ४०॥

यस्ते युद्धगतं दर्पं कामं च व्यपनाशयेत् ।
सोऽहं जातो महाबाहो भीष्मः परपुरञ्जयः ॥ ४१॥

व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

## ॥ अष्टषष्ट्युत्तरशततमोऽध्यायः ॥

परशुरामेण भीष्मं प्रति युद्धाय सन्नाहचोदनम् ॥ १ ॥ भीष्मस्य माता सत्यवत्या ब्राह्मणैश्च जयाशीर्वादेन हास्तिनपुराद्रथमधिष्ठाय कुरुक्षेत्रगमनम् ॥ २ ॥ कुरुक्षेत्रे भीष्मपरशुरामयोर्गङ्गादेव्या युद्धोपरमप्रयतनम् ॥ ३ ॥

भीष्मः—
ततो मामब्रवीद्रामः प्रहसन्निव भारत ॥ ॥

रामः—
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि सङ्गरे ॥ १

1. मा—अर्धद्वयं न दृश्यते।   2. म—नास्तीदमर्धम्

अहं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह ।
भाषितं ते करिष्यामि तत्रागच्छेः परन्तप ॥ २

तत्र त्वां निहतं माता मया शरशताचितम् ।
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबलाशनम् ॥ ३

[1]कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता ।
मया विनिहतं [2]देवी रुदतामद्य पार्थिव ॥ ४

अतदर्हा महाभागा भगीरथसुता नदी ।
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ५

एहि गच्छ मया भीष्म युद्धमद्यैव वर्तताम् ।
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ६

**भीष्मः—**

इति ब्रुवाणं तमहं रामं परपुरञ्जयम् ।
प्रणम्य शिरसा [3]पादावेवमस्त्वित्यथाब्रवम् ॥ ७

एवमुक्तो ययौ रामः कुरुक्षेत्रं युयुत्सया ।
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ॥ ८

ततः कृतस्वस्त्ययनो मात्रा [4]च प्रतिनन्दितः ।
द्विजातीन् वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ९

---

1. ङ—कृपणा ।
2. ख-ग-घ—वीरं । ङ—वीर । म-मा—वीर रोदतामद्य ।
3. ख-ङ-म-मा—राजन्नेव । 4. म-मा—प्रत्यभिनन्दितः ।

रथमास्थाय रुचिरं राजितं पाण्डरैर्हयैः ।
सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ १०

उपपन्नं महाशस्त्रैस् सर्वोपकरणान्वितम् ।
तत्कुलीनेन वीरेण हयशास्त्रविदा नृप ॥ ११

यत्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा ॥ ११॥

दंशितः पाण्डरेणाहं कवचेन वपुष्मता ।
पाण्डरं कार्मुकं गृह्य प्रायां भरतसत्तम ॥ १२॥

पाण्डरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
[1]व्यजनैः पाण्डरैश्चापि वीज्यमानो नराधिप ॥ १३॥

[2]शुक्लवासास्सितोष्णीषस् सर्वशुक्लविभूषणः ॥ १४

स्तूयमानो जयाशीर्भिर् निष्क्रम्य गजसाह्वयात् ।
कुरुक्षेत्रं रणक्षेत्रम् उपायां भरतर्षभ ॥ १५

ते हयाश्चोदितास्तेन सूतेन परमाहवे ।
अवहन्मां भृशं राजन् मनोमारुतरंहसः ॥ १६

[3]गत्वाऽहं तत् कुरुक्षेत्रं स च रामः प्रतापवान् ।
युद्धाय सहसा राजन् पराक्रान्तौ परस्परम् ॥ १७

ततस्सन्दर्शने तिष्ठन् रामस्यातितपस्विनः ।

---

1. ख-ङ-म-मा—पाण्डरैश्चामरैश्चैव ।
2. म—अर्धचतुष्टयं न दृश्यते ।　　3. ख—इतः सार्धश्लोकद्वयं नास्ति.

प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् ॥ १८

ततस्तत्र द्विजा राजंस् तापसाश्च वनौकसः ।
प्रापश्यन्त रणं दिव्यं देवास्सेन्द्रपुरोगमाः ॥ १९

ततो दिव्यानि माल्यानि प्रादुरासन् मुहुर्मुहुः ।
वादित्राणि च दिव्यानि मेघबृन्दानि चैव ह ॥ २०

ततस्ते तापसास्सर्वे भार्गवस्यानुयायिनः ।
प्रेक्षकास्समपद्यन्त परिवार्य रणाजिरम् ॥ २१

ततो मामब्रवीद्देवी सर्वभूतहितैषिणी ।
माता स्वरूपिणी राजन् किमिदं ते चिकीर्षितम् ॥ २२

गत्वाऽहं जामदग्न्यं तु प्रयाचिष्ये कुरूद्वह ।
भीष्मेण सह मा योत्सीश् शिष्येणेति पुनः पुनः ॥ २३

[1]मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ २४

किं नु वै क्षत्रियहणो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि ॥ २५

ततोऽहमब्रवं देवीम् अभिवाद्य कृताञ्जलिः ।

1. ख—इतः सार्धं श्लोकपञ्चकं नास्ति

सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयंवरे ॥　२६

यथा च रामो राजेन्द्र मया पूर्वं [1]प्रचोदितः ।
काशिराजसुतायाश्च यथा [2]कर्म पुरातनम् ॥　२७

ततस्सा राममभ्येत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ॥　२८

भीष्मेण सह मा योत्सीश् शिष्येणेति वचोऽब्रवीत् ॥　२८॥

स च तामाह याचन्तीं भीष्ममेव निवर्तय ।
न च मे कुरुते कामम् [3]इत्यहं तमुपागमम् ॥　२९॥

ततो गङ्गा सुतस्नेहान्मां सा पुनरुपागमत् ।
नास्या अकरवं वाक्यं क्रोधपर्याकुलेक्षणः ॥　३०॥

अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः ।
आह्वयामास च तदा युद्धाय द्विजसत्तमः ॥　३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ३१॥ श्लोकाः]

---

1. म-मा—प्रयाचितः ।
2. ग-घ-ङ-मा—कामः पुरातनः ।　म—कामं पुरातनम् ।
3. ख-घ-ङ-म—इत्युक्त्वा मामुपागमत् ।

## ॥ एकोनसप्तत्युत्तरशततमोऽध्यायः ॥

भीष्मजामदग्न्ययुद्धवर्णनम् ॥ १ ॥

**भीष्मः—**

तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
[1]भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः ॥ १

[2]आरोह स्यन्दनं वीर कवचं च महाभुज ।
बधान समरे राम यदि योद्धुमिहेच्छसि ॥ २

ततो मामब्रवीद्रामस् स्मयमानो रणाजिरे ॥ २॥

**रामः—**

रथो मे मेदिनी भीष्म वाहा वेदास्सदश्ववत् ।
सूतश्च मातरिश्वा वै कवचं वेदमातरः ॥ ३॥

सुसंवीतो रणे ताभिर् योत्स्येऽहं कुरुनन्दन ॥ ४

**भीष्मः—**

एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः ।
शरव्रातेन महता सर्वतः प्रत्यवारयत् ॥ ५

ततोऽपश्यं जामदग्न्यं रथे दिव्ये व्यवस्थितम् ।
सर्वायुधधरे श्रीमत्यद्भुतोपमदर्शने ॥ ६

1. ख-मा—भूमिस्थं 2. म—इतः श्लोकचतुष्टयं न दृश्यते

मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे ।
दिव्याश्वयुजि सन्नद्धे कवचेन विभूषिते ॥ ७
ध्वजेन च महाबाहो सोमार्ककृतलक्ष्मणा ।
धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ॥ ८
सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः ।
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ॥ ९
आह्वयानस्स मां युद्धे मनो हर्षयतीव मे ।
पुनः पुनरपि क्रोशन् याहि याहीति भार्गवः ॥ १०
तमादित्यमिवोद्यन्तम् अनाधृष्यं महाबलम् ।
क्षत्रियान्तकरं रामम् एकमेकस्समासदम् ॥ ११
ततोऽहं बाणपातेषु त्रिषु वाहान् निगृह्य वै ॥ ११॥
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम् ।
अभ्यगच्छं तदा रामम् [1]अर्चिष्यन् द्विजसत्तमम् ॥ १२॥
अभिवाद्य चैनं विधिवद् अब्रवं वाक्यमुत्तमम् ॥ १३
योत्स्ये त्वया रणे राम विशिष्टेनाधिकेन च ।
गुरुणा धर्मशीलेन जयमाशास्व मे विभो ॥ १४

रामः—

एवमेतत् कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैस्सह युध्यताम् ॥ १५
शपेयं त्वां न चेदेवम् आगच्छेथा विशाम्पते ।

---

1. ख-ग-घ-ङ-म—प्राञ्जलिर्मुनि

युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव ॥ १६

[1]न तु ते जयमाशंसे त्वां विजेतुमहं स्थितः ।
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ १७

भीष्मः—

ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः ।
प्राध्मापयं रणे शङ्खं पुनर्हेम[2]परिष्कृतम् ॥ १८

ततो युद्धं समभवन्मम तस्य च भारत ।
दिवसान् सुबहून् राजन् परस्परजिगीषया ॥ १९

स मे तस्मिन् रणे पूर्वं प्राहरत् कङ्कपत्रिभिः ।
[3]षष्ट्या शतैश्च नवभिश् शराणामग्निवर्चसाम् ॥ २०

चत्वारस्तेन मे वाहास् सूतश्चैव विशाम्पते ।
प्रतिरुद्धास्तथैवाहं समरे दंशितस्स्थितः ॥ २१

नमस्कृत्य च देवेभ्यो ब्राह्मणे[4]भ्यो विशेषतः ।
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ॥ २२

आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि ।
भूयश्च शृणु मे ब्रह्मंस् [5]सम्पदं धर्मसङ्ग्रहे ॥ २३

1. ग-ख-ङ—न हि केनचिदाशंसे 2. ख-ङ-म—विभूषितम्।
3. ग-म-मा—दिष्ट्या शरैश्च नवभिश्
4. ख-ङ-म-मा—भ्यश्च भारत
5. अ-क-ख-ग-घ—त्वं पदं। मा—संवादं

एते वेदाश्शरीरस्था ब्राह्मण्यं यच्च ते महत् ।
तपश्च ते महत् तप्तं न तेभ्यः प्रहराम्यहम् ॥ २४

प्रहरे क्षत्रधर्मं तं यं त्वं राम समाश्रितः ।
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ॥ २५

पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं च मे ।
[1]एष ते कार्मुकं वीर छिनद्मि निशितेषुणा ॥ २६

तस्याहं निशितं भल्लं प्राहिण्वं भरतर्षभ ।
तेनास्य धनुषः कोटिश् छिन्ना भूमिमथागमत् ॥ २७

नव चापि पृषत्कानां शतानि नतपर्वणाम् ।
प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति ॥ २८

काये निषक्तास्तु तदा वायुना समुदीरिताः ।
चेलुः क्षरन्तो रुधिरं नागा इव वसुन्धराम् ॥ २९

क्षतजोक्षितसर्वाङ्गः क्षरन् स रुधिरं रणे ।
बभौ रामस्तदा राजन् मेरुर्धातूनिवोत्सृजन् ॥ ३०

हेमन्तान्तेऽशोक इव रक्तस्तबकमण्डितः ।
बभौ रामस्तदा राजन् क्वचित् किंशुकसन्निभः ॥ ३१

ततोऽन्यद् धनुरादाय रामः क्रोधसमन्वितः ।
हेमपुङ्खान् सुनिशितान् शरांस्तान् प्रववर्ष सः ॥ ३२

---

1. ख-ग-ब-ङ-म-मा—एष ते कार्मुकं वीर द्विधा कुर्मि ससायकम् ।

ते समासाद्य मां रौद्रा बहुधा मर्मभेदिनः ।
अकम्पयन् महावेगास् सर्पाननविषोपमाः ॥ ३३

तमहं समवष्टभ्य पुनरात्मानमाहवे ।
शतसङ्ख्यैश्शरैः क्रुद्धस् तदा राममवाकिरम् ॥ ३४

स तैरग्न्यर्कसङ्काशैश् शरैराशीविषोपमैः ।
शितैरभ्यर्दितो रामो मन्दचेता इवाभवत् ॥ ३५

ततोऽहं कृपयाऽऽविष्टो विनिन्द्यात्मानमात्मना ।
धिग्धिगित्यब्रवं युद्धं क्षत्रधर्मं च भारत ॥ ३६

असकृच्चाब्रवं राजन् शोकवेगपरिप्लुतः ॥ ३६॥

अहो बत कृतं पापं मयेदं क्षत्रधर्मणा ।
गुरुर्द्विजातिर्धर्मात्मा यदेवं पीडितश्शरैः ॥ ३७॥

[1]ततोऽहं प्राहरं भूयो जामदग्न्याय भारत ॥ ३८

अथापतत् स पृथिवीं पूषा दिवससङ्क्षये ।
जगामास्तं सहस्रांशुस् ततो युद्धमुपारमत् ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

1. क-ख-घ-म—ततो न प्राहरं । मा—तत् तेन प्राहरं ।

## ॥ सप्तत्युत्तरशततमोऽध्यायः ॥

रामभीष्मसमरवर्णनम् ॥ १ ॥

भीष्मः—

आत्मनस्तु ततस्सूतो हयानां च विशाम्पते ।
मम चापनयामास शल्यान् कुशलसम्मतः ॥ १

स्नातोपवृत्तैस्तुरगैर् लब्धतोयैरविह्वलैः ।
प्रभाते चोदिते सूर्ये ततो युद्धमवर्तत ॥ २

दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितम् ।
अकरोद्रथमत्यर्थं रामस्सज्जं प्रतापवान् ॥ ३

ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणम् ।
धनुश्श्रेष्ठं समुत्सृज्य सहसाऽवतरं रथात् ॥ ४

अभिवाद्य तथैवाहं रथमारुह्य भारत ।
युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीस्स्थितः ॥ ५

ततो मां शरवर्षेण महता समवाकिरत् ।
अहं च शरवर्षेण वर्षन्तं समवाकिरम् ॥ ६

सङ्क्रुद्धो जामदग्न्यस्तु पुनरेव पतत्रिणः ।
प्रेषयामास मे राजन् दीप्तास्यानुरगानिव ॥ ७

तानहं निशितैर्भल्लैश् शतशोऽथ सहस्रशः ।

अच्छिदं सहसा राजन्नन्तरिक्षे पुनः पुनः ॥ ८

ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान् ।
[1]मयि प्रयोजयामास तान्यहं प्रत्यषेधयम् ॥ ९

अस्त्रैरेव महाबाहो चिकीर्षन्नधिकक्रियाम् ॥ ९॥

ततो दिवि महान् नादः प्रादुरासीत् समन्ततः ॥ १०

ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान् ।
प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥ ११

ततोऽहमस्त्रमाग्नेयम् अनुमन्त्र्य प्रयुक्तवान् ।
वारुणेनैव तद्रामो वारयामास मे विभुः ॥ १२

एवमस्त्राणि दिव्यानि रामस्याहमवारयम् ।
रामश्च मम तेजस्वी दिव्यान्यस्त्राणि संयुगे ॥ १३

ततो मां सव्यतो राजन् रामः कुर्वन् द्विजोत्तमः ।
उरस्यविध्यत् संरब्धः जामदग्न्यो महाबलः ॥ १४

ततोऽहं भरतश्रेष्ठ संन्यषीदं रथोत्तमे ॥ १४॥

ततो मां कश्मलाविष्टं सूतस्तूर्ण[2]मुदावहत् ।
[3]विह्वलं भरतश्रेष्ठ रामबाणप्रपीडितम् ॥ १५॥

ततो मामपयातं वै भृशं विद्धमचेतसम् ।

---

1. घ—इतः श्लोकद्वयं नास्ति
2. घ-ङ—मपावहत् । ख-मा—मपाहरत् ।
3. ग—सत्वरं । ख-घ-ङ-म-मा—गोरुतं ।

रामस्यानुचरा हृष्टास् सर्वे दृष्ट्वा विचुक्रुशुः ॥ १६॥
अकृतव्रणप्रभृतयः काशिकन्या च भारत ॥ १७

ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाब्रवम् ।
याहि सूत यतो रामस् सज्जोऽहं गतवेदनः ॥ १८

ततो मामवहत् सूतो हयैः परमशोभितैः ।
नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ ॥ १९

ततोऽहं राममासाद्य बाणजालेन कौरव ।
[1]अवाकिरं सुसंरब्धस् संरब्धं च जिगीषया ॥ २०

तानापतत एवासौ रामो बाणानजिह्मगान् ।
बाणैरेवाच्छिनत् तूर्णम् एकैकं त्रिभिराहवे ॥ २१

ततस्ते सूदितास्सर्वे मम बाणास्सुसंशिताः ।
रामबाणैर्द्विधा च्छिन्नाश् शतशोऽथ महाहवे ॥ २२

ततः पुनश्शरं दीप्तं [2]सुप्रभं कालसम्मितम् ।
असृजं जामदग्न्याय रामायाहं जिघांसया ॥ २३

तेन त्वभिहतो गाढं बाणवेगवशं गतः ।
मुमोह समरे रामो भूमौ च निपपात ह ॥ २४

ततो हाहाकृतं सर्वं रामे भूतलमाश्रिते ।
जगद्भारत संविग्नं यथाऽर्कपतने तथा ॥ २५

---

1. अ-क—इदमर्धं न दृश्यते　　2. ब-क—सुपुङ्खं ।

तत एनं सुसंविग्नास् सर्व एवाभिदुद्रुवुः ।
तपोधनास्ते सहसा [1]काश्या च भृगुनन्दनम् ॥ २६

तत एनं परिष्वज्य शनैराश्वासयंस्तदा ।
पाणिभिर्जलशीतैश्च जयाशीर्भिश्च कौरव ॥ २७

ततस्स विह्वलो वाक्यं राम उत्थाय चाब्रवीत् ।
तिष्ठ भीष्म हतोऽसीति बाणं सन्धाय कार्मुके ॥ २८

स मुक्तो न्यपतत् तूर्णं सव्ये पार्श्वे महाहवे ।
तेनाहं भृशमुद्विग्नो व्याघूर्णित इव द्रुमः ॥ २९

हत्वा हयांस्ततो रामश् शस्त्रास्त्रेण महाहवे ।
अवाकिरन्मां विस्रब्धं बाणैस्तैर्लोमवापिभिः ॥ ३०

ततोऽहमपि शीघ्रास्त्रं समरप्रतिवारणम् ।
अवासृजं [2]महेष्वासं तेऽन्तरा विष्ठिताश्शराः ॥ ३१

रामस्य च ममैवाशु व्योमावृत्य समन्ततः ॥ ३१॥
न स्म सूर्यः प्रतपति शरजालसमावृतः ।
मातरिश्वा [3]ऽन्तरे तस्मिन् मेघरुद्ध इवानदत् ॥ ३२॥

ततो वायोः प्रकम्पाच्च सूर्यस्य च गभस्तिभिः ।
अभिपातात् स्वभावाच्च पावकस्समजायत ॥ ३३॥

1. ख—कन्या च। 2. म—महाबाहो।
3. अ-क-ख-ग-घ—ततस्तस्मिन्।

ते शरा[1]स्सुसमिद्धेन प्रदीप्ताश्चित्रभानुना ।
भूमौ सर्वे तदा राजन् भस्मीभूताः प्रपेदिरे ॥ ३४॥
तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव ॥ ३५॥
रामश्शराणां सङ्क्रुद्धो मयि तूर्णं न्यपातयत् ॥ ३६
ततोऽहं तानपि रणे शरैराशीविषोपमैः ।
सञ्छिद्य भूमौ नृपतेऽपातयं पन्नगानिव ॥ ३७
एवं तदभवद्युद्धं तदा भरतसत्तम ।
सन्ध्याकाले व्यतीते तु व्यपायात् समराद्गुरुः ॥ ३८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

## ॥ एकसप्तत्युत्तरशततमोऽध्यायः ॥

**रामभीष्मसमरवर्णनम् ॥**

**भीष्मः—**

समागतस्य रामेण पुनरेवातिदारुणम् ।
[2]अन्येद्युस्तुमुलं युद्धम् आसीद्भरतसत्तम ॥ १

1. ख-ङ-म—स्वसमुत्थेन ।
2. घ-ङ—उदभूत्

ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशः ।
[1]अयोजयत् स धर्मात्मा दिवसे दिवसे विभुः ॥ २

तान्यहं तत्प्रतीघातैर् [2]अस्त्रैरस्त्राणि भारत ।
व्यधमं तुमुले युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ३

अस्त्रैरस्त्रेषु बहुधा हतेष्वेव च भार्गवः ।
अक्रुध्यत महाबाहुस् त्यक्तप्राणस्स संयुगे ॥ ४

ततश्शक्तिं प्राहिणोद्घोररूपाम्
अस्त्रे रुद्धे जामदग्न्यो महात्मा ।
कालोत्सृष्टां प्रज्वलितामिवोल्कां
सन्दीप्ताग्रां तेजसा व्याप्य लोकम् ॥ ५

ततोऽहं तामिषुभिर्दीप्यमानैस्
समायान्तीमन्तकसन्निकाशाम् ।
छित्वा त्रिधा पातयामास भूमौ
ततो ववौ पवनः पुण्यगन्धी ॥ ६

तस्यां छिन्नायां क्रोधदीप्तोऽथ रामश्
शक्तीर्घोराः प्राहिणोद् द्वादशान्याः ।
तासां रूपं भारत नोत शक्यं
तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ॥ ७

1. म—अर्धद्वयं नास्ति 2, ख-व—दिव्यान्यस्त्राणि कौरव

किन्त्वेवाहं विह्वलस्सम्प्रदृश्य
दिग्भ्यस्सर्वास्ता महोल्का इवाग्नेः ।
नानारूपास्तेजसोग्रेण दीप्ता
यथाऽऽदित्या द्वादश लोकसङ्क्षये ॥ ८

ततोऽनलं बाणमयं विधूय
सन्दिश्य भित्त्वा शरजालेन रामम् ।
तान् द्वादशेषून् प्राहिणवं रणेऽहं
ततश्शक्तीर्व्यधमं घोररूपाः ॥ ९

ततो राजञ्जामदग्न्यो महात्मा
शक्तीर्घोरा प्राक्षिपद्धेमदण्डाः ।
विचित्रिताः काञ्चनपट्टबद्धाः
यथा महोल्का ज्वलितास्तथा ताः ॥ १०

ताश्चाप्युग्राश्चर्मणा वारयित्वा
खड्गेनाजौ पातिता मे नरेन्द्र ।
बाणैर्दिव्यैर्जामदग्न्यस्य सङ्ख्ये
दिव्यानश्वानभ्यवर्षं ससूतान् ॥ ११

निर्मुक्तानां पन्नगानां सरूपा
दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः ।

प्रादुश्चक्रे दिव्यमस्त्रं महात्मा
क्रोधाविष्टो हैहयेशप्रमाथी ॥ १२

ततश्श्रेण्यश्शलभानामिवोग्रास्
समापेतुर्विशिखानां प्रदीप्ताः ।
समाचिनोच्चापि भृशं शरीरं
हयान् सूतं सरथं चैव मह्यम् ॥ १३

रथश्शरैर्मे निचितस्सर्वतोऽभूत्
तथा हया सारथिश्चैव राजन् ।
युगं रथेषां च तथैव चक्रे
तथैवाक्षश्शरकृत्तोऽपि भग्नः ॥ १४

ततस्तस्मिन् बाणवर्षे व्यतीते
शरौघेण प्रत्यवर्षं गुरुं तम् ।
स विक्षतो मार्गणैर्ब्रह्मराशिर्
देहादजस्रं मुमुचे भूरि रक्तम् ॥ १५

यथा रामो बाणजालाभितप्तस्
तथैवाहं सुभृशं गाढविद्धः ।
ततो युद्धं व्यरमच्चापराह्णे
भानावस्तं प्रार्थयाने महीध्रम् ॥ १६

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[ अस्मिन्नध्याये १६ श्लोकाः ]

---

## ॥ द्वासप्तत्युत्तरशततमोऽध्यायः ॥

रामेण रथादधः पातितस्य भीष्मस्य दिव्यपुरुषैः समाश्वासनम् ॥१॥ भीष्मेण रामस्य रथादधः पातनम् ॥ २ ॥ समुद्बुध्य पुनर्युयुत्सो रामस्य महर्षिभिर्युद्धात् प्रतिनिवर्तनम् ॥ ३ ॥

भीष्मः—

ततः प्रभाते राजेन्द्र सूर्ये विमल उद्गते ।
भार्गवस्य मया सार्धं [1]पुनर्युद्धमवर्तत ॥ १

ततोऽभ्रान्ते रथे तिष्ठन् रामः प्रहरतां वरः ।
ववर्ष शरवर्षाणि मयि मेघ इवाचले ॥ २

ततस्सूतो मम सुहृच्छरवर्षेण ताडितः ।
[2-3]निपपात रथोपस्थे मनो मम विषादयन् ॥ ३

ततस्सूतो ममात्यर्थं कश्मलं प्राविशन्महत् ।
पृथिव्यां च शराघातान्निपपात मुमोह च ॥ ४

ततस्सूतोऽजहात् प्राणान् रामबाणप्रपीडितः ।
मुहूर्तादिव राजेन्द्र मां च भीराविशत् तदा ॥ ५

ततस्सूते हते तस्मिन् क्षिपतस्तस्य मे शरान् ।
प्रमत्तमनसो रामः प्राहिणोन्मृत्युसम्मितम् ॥ ६

1. ग-घ-ङ—परं 2. अ-क-ख-ग-घ—अपयातो रथोपस्थान्मनो
3. म—इतः अर्धचतुष्टयं न दृश्यते

तत[1]स्सूतव्यसनिनं विप्लुतं मां स भार्गवः ।
शरेणाभ्यहनद्गाढं विकृष्य बलवद्धनुः ॥ ७

स मे भुजान्तरे राजन् निपत्य रुधिराशनः ।
मयैव सह राजेन्द्र जगाम वसुधातलम् ॥ ८

मत्वा तु निहतं रामस् ततो मां भृगुनन्दनः ।
मेघवद्विननादोच्चैर् जहृषे च पुनः पुनः ॥ ९

तथा तु पतिते राजन् मयि रामो मुदा युतः ।
उदक्रोशन्महानादं सह तैरनुयायिभिः ॥ १०

मम तत्राभवन् ये तु [2]कुरवः पार्श्वतास्स्थिताः ।
आगता ये च युद्धं तज् जनास्तत्र दिदृक्षवः ॥ ११
आर्तिं परमिकां जग्मुस् ते तदा पतिते मयि ॥ ११॥

ततोऽपश्यं पतितो राजसिंह
द्विजानष्टौ सूर्यहुताशनाभान् ।
ते मां समन्तात् परिवार्य तस्थुस्
स्वबाहुभिः परिगृह्याजिमध्ये ॥ १२॥

रक्ष्यमाणश्च तैर्विप्रैर् नाहं भूमिमुपस्पृशम् ।
अन्तरिक्षे धृतो ह्यस्मि तैर्विप्रैर्बान्धवैरिव ॥ १३॥

---

1. अ-क—स्सूतं व्यसनिनं । ख-ङ—स्सूतस्य निधनात् ।
2. ख-ग-ङ—कौरवाः पार्थिवाः ।

[1]श्वसन्निवान्तरिक्षे च जलबिन्दुभिरुक्षितः ।
ततस्ते ब्राह्मणा राजन्नब्रुवन् परिगृह्य माम् ॥ १४॥
मा भैरिति समं सर्वे स्वस्ति तेऽस्त्विति चासकृत् ॥ १५
ततस्तेषामहं वाग्भिस् तर्पितस्सहसोत्थितः ।
मातरं सरितां श्रेष्ठाम् अपश्यं रथमास्थिताम् ॥ १६

हयाश्च मे सङ्गृहीतास्तयाऽऽसन्
महानद्या संयति कौरवेन्द्र ।
पादौ जनन्याः प्रति[2]गृह्य चाहं
तथा पितॄणां रथमभ्यरोहम् ॥ १७

ररक्ष सा मां सरथं हयांश्चोपस्कराणि च ।
तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्जयम् ॥ १८
ततोऽहं स्वयमुद्यम्य हयांस्तान् वातरंहसः ।
अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत ॥ १९
ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलम् ।
अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् ॥ २०
ततो जगाम वसुधां मम बाणप्रपीडितः ।
जानुभ्यां धनुरुत्सृज्य रामो मोहवशं गतः ॥ २१
ततस्तस्मिन् निपतिते रामे भूरिसहस्रदे ।

1. ङ-म-मा—स्वप
2. ङ-म-मा—पूज्य चाहं तथार्ष्टिषेणं रथमभ्यरोहम् ॥

आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ २२

उल्काश्च बहुशः पेतुस् सनिर्घातास्सकम्पनाः ।
अर्कं च [1]बहुधा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ २३

ववुश्च वाताः परुषाश् चलिता च वसुन्धरा ।
गृध्रा बलाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ २४

दीप्तायां दिशि गोमायुर् दारुणं मुहुरुन्नदत् ।
अनाहता दुन्दुभयो विनेदु[2]र्भृशनिस्वनाः ॥ २५

एतदौत्पातिकं घोरं सर्वमासीद्भयङ्करम् ।
विसंज्ञकल्पे धरणीं गते रामे महात्मनि ॥ २६

[3]ततो वै सहसोत्थाय रामो मामभ्यवर्तत ।
पुनरुत्थाय कौरव्य विह्वलः क्रोधमूर्छितः ॥ २७

आददानो महाबाहुः कार्मुकं तालसम्मितम् ।
शरं च ऋषयोऽथैनं मा रामेत्यब्रुवन् वचः ॥ २८

महर्षिमतमास्थाय क्रोधाविष्टो हि भार्गवः ।
समाहरदमेयात्मा शरं कालान्तकोपमम् ॥ २९

ततो रविर्मन्दमरीचिमण्डलो
जगामास्तं पांसुपुञ्जावगाढः ।

---

1. ब-ङ-मा—सहसा 2. ब-ङ—र्हशनिस्वनाः ।
3. म-मा—श्लोकद्वयं न दृश्यते

निशा व्यगाहत् सुखशीतमारुता
ततो युद्धं प्रत्यपहारयाव ॥ ३०

एवं राजन्नपहारो बभूव
ततः पुनर्विमलेऽभूत् सुघोरम् ।
[1]काल्ये काल्ये विंशतिर्वै दिनानि
तथैव चान्यानि दिनत्रयाणि ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

## ॥ त्रिसप्तत्युत्तरशततमोऽध्यायः ॥

सप्रणामं देवतादिप्रार्थनापूर्वकं शयितस्य भीष्मस्य दिव्यपुरुषैः स्वप्ने समाश्वासनपूर्वकं ज्ञातपूर्वप्रस्वापनास्त्रानुस्मारणम् ॥ १ ॥

भीष्मः—

ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा ।
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः ॥ १
नक्तञ्चराणां भूतानां रजन्याश्च विशाम्पते ।

1. ङ-मा—काल्यं काल्यं । म—काल्यं तथा ।

शयनं प्राप्य [1]सहसा मनसा संविचिन्तयम् ॥ २

जामदग्न्येन मे युद्धम् इदं परमदारुणम् ।
अहानि च बहून्यद्य वर्तते सुमहात्ययः ॥ ३

न च रामं महावीर्यं शक्नोमि रणमूर्धनि ।
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ४

यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान् ।
दैवतानि प्रसन्नानि दर्शयन्तु निशां [2]मम ॥ ५

ततो निशि च राजेन्द्र प्रसुप्तश्शरविक्षतः ।
दक्षिणेनेह पार्श्वेन प्रभातसमये [3]तदा ॥ ६

ततोऽहं विप्रमुख्यैस्तैर् यैरस्मि पतितो रथात् ।
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ॥ ७

त एव मां महाभाग स्वप्ने दर्शनमेत्य वै ।
परिवार्याब्रुवन् वाक्यं तन्निबोध कुरूद्वह ॥ ८

ऋषयः—

उत्तिष्ठ मा भैर्गाङ्गेय भयं ते नास्ति किञ्चन ।
रक्षामहे नरव्याघ्र स्वशरीरं हि नो भवान् ॥ ९

न त्वां रामो रणे जेता जामदग्न्यः कथञ्चन ।

1. ख-ग-ङ-मा—रहिते 2. ग-ङ-मा--इमाम्। म—पिता मम
3. ख-ग—मम। ङ-स-मा—इव

त्वमेव समरे रामं विजेता भरतर्षभ ॥　१०
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान् ।
उपस्थास्यति राजेन्द्र स्वयमेव तवानघ ॥　११
येन शत्रून् महावीर्यान् प्रशासिष्यसि कौरव ॥　११॥
विदितं हि तवाप्येतत् पूर्वस्मिन् देहधारणे ।
प्राजापत्यं विश्वकृतं सुस्वापं नाम भारत ॥　१२॥
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान् कचित् ।
तत् स्मरस्व महाबाहो भृशं संयोजयस्व च ॥　१३॥
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप ।
एनसा न तु संयोगं प्राप्स्यसे जातु मानद ॥　१४॥
स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीडितः ।
ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि ॥　१५॥
अस्त्रेण दयितेनाजौ भीष्म सम्बोधनेन वै ॥　१६
एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः ।
प्रसुप्तं वा मृतं वेति तुल्यं मन्यामहे वयम् ॥　१७
न च रामेण मर्तव्यं कदाचिदपि पार्थिव ।
ततस्समुत्पन्नमिदं प्रस्वापं युज्यतामिति ॥　१८

भीष्मः—
इत्युक्त्वाऽन्तर्हिता राजन् सर्वे एव द्विजोत्तमाः ।
अष्टौ सदृशरूपास्ते सर्वे भासुरमूर्तयः ॥　१९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ चतुस्सप्तत्युत्तरशततमोऽध्यायः ॥

रामभीष्मयोरायोधनम् ॥१॥ भीष्मस्य प्रस्वापनास्त्रप्रतिभानम् ॥ २ ॥

भीष्मः—

ततो रात्र्यां व्यतीतायां प्रतिबुद्धोऽस्मि भारत ।
ततस्सञ्चिन्त्य वै स्वप्नम् अवापं हर्षमुत्तमम् ॥ १

ततस्समभवद्युद्धं मम तस्य च भारत ।
तुमुलं सर्वभूतानां रोमहर्षणमद्भुतम् ॥ २

ततो बाणमयं वर्षं ववर्ष मयि भार्गवः ।
न्यवारयमहं तच्च शरजालेन भारत ॥ ३

ततः परमसङ्क्रुद्धः पुनरेव महातपाः ।
ह्यस्तनेन च कोपेन शक्तिं वै प्राहिणोन्मयि ॥ ४

इन्द्राशनिसमस्पर्शां यमदण्डोपमप्रभाम् ।
ज्वलन्तीमग्निवत् सङ्ख्ये लेलिहानां समन्ततः ॥ ५

ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।
सा मामभ्यवधीत् तूर्णं अंसदेशे च भारत ॥ ६

अथासृगस्रवद्घोरं गिरेर्गैरिकधातुवत् ।
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ७

ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः ।
प्रैषयं मृत्युसङ्काशं शरं सर्पविषोपमम् ॥　　८

स तेनाभिहतो वीरो ललाटे द्विजसत्तमः ।
अशोभत महाराज सशृङ्ग इव पर्वतः ॥　　९

स संरब्धस्समावृत्य शरं कालान्तकोपमम् ।
सन्दधे बलवत् कृष्य घोरं शत्रुनिबर्हणम् ॥　　१०

स वक्षसि पपातोग्रश् शरो व्याल इव श्वसन् ।
महीं राजंस्ततश्चाहम् अगमं रुधिराविलः ॥　　११

सम्प्राप्य तु पुनस्संज्ञां जामदग्न्याय धीमते ।
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥　　१२

सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे ।
विह्वलश्चाभवद्राजन् वेपथुश्चैनमाविशत् ॥　　१३

तत एनं परिष्वज्य सखा विप्रो महातपाः ।
अकृतव्रणश्शुभैर्वाक्यैर् आश्वासयदनेकधा ॥　　१४

समाश्वस्तस्ततो रामः क्रोधामर्षसमन्वितः ।
[1]प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः ॥　　१५

ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमम् ।
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् ॥　　१६

---

1. अ-क—इदमर्धं न दृश्यते ।

तयोर्ब्रह्मास्त्रयोरासीद् अन्तरा खे समागमः ।
असम्प्राप्यैव रामं च मां च भारतसत्तम ॥ १७

ततो व्योम्नि प्रादुरभूत् तेज एव हि केवलम् ।
भूतानि चैव सर्वाणि जग्मुरार्तिं विशाम्पते ॥ १८

ऋषयश्च सगन्धर्वा देवताश्चैव भारत ।
सन्तापं परमं जग्मुर् अस्त्रतेजोभिपीडिताः ॥ १९

ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
सन्तप्तानि च भूतानि विषादं जग्मुरुत्तमम् ॥ २०

प्रजज्वाल नभो राजन् धूमायन्ते दिशो दश ।
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा ॥ २१

ततो हाहाकृते लोके सदेवासुरराक्षसे ।
इदमन्तरमित्येव मोक्तुकामोऽस्मि भारत ॥ २२

प्रस्वापमस्त्रं दयितं वचनाद्ब्रह्मवादिनाम् ।
चिन्तितं च तदाऽस्त्रं मे मनसा प्रत्यभात् तदा ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[ अस्मिन्नध्याये २३ श्लोकाः ]

## ॥ पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥

भीष्मे रामं प्रति प्रस्वापनास्त्रं प्रयोक्तुकामे नारदेन तन्निषेधनम् ॥१॥ भीष्मेण दिव्यपुरुषवचनाच्च प्रस्वापनास्त्रप्रतिसंहारे रामेण स्वस्य पराजितत्वोक्तिः ॥ २ ॥ नारदादिवचनाद्युद्धोपरमः ॥ ३ ॥

भीष्मः—

ततो हलहलाशब्दो दिवि राजन् महानभूत् ।
प्रस्वापं भीष्म मा स्राक्षीर् इति कौरवनन्दन ॥ १

अयोजयमहं तत्र तदस्त्रं भृगुनन्दने ।
[1]प्रस्वापं मां प्रयुञ्जानं नारदो वाक्यमब्रवीत् ॥ २

नारदः—

एते वियति कौरव्य दिवि देवगणास्स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयूयुजः ॥ ३

रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यावमानं कौरव्य मा स्म कार्षीः कथञ्चन ॥ ४

भीष्मः—

ततोऽपश्यं दिविष्ठान् वै तानष्टौ ब्रह्मवादिनः ।
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ॥ ५

---

1. ग-ङ-म-मा—प्रस्वापमथ मां वीर ।

ब्राह्मणाः—

यदाह भरतश्रेष्ठ नारदस्तत् तथा कुरु ।
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ६

भीष्मः—

ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं मृधे ।
ब्रह्मास्त्रं दीपयाञ्चक्रे तस्मिन् युधि यथाविधि ॥ ७

ततो रामो रुषितो राजसिंह
दृष्ट्वा तदस्त्रं विनिवर्तितं वै ।
जितोऽस्मि भीष्मेण सुमन्दबुद्धिर्
इत्येव वाक्यं सहसा व्यमुञ्चत् ॥ ८

ततोऽपश्यत् पितरं जामदग्न्यः
पितुस्तथा पितरं चास्य चान्यान् ।
[1]ते तत्र चैनं परिवार्य तस्थुर्
ऊचुश्चैनं सान्त्वपूर्वं तदानीम् ॥ ९

पितरः—

मा स्मैवं साहसं तात पुनः कार्षीः कथञ्चन ।
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ १०

क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन ।
स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ॥ ११

---

1. ङ—तथैवैनं सं।

इदन्निमित्तं कस्मिंश्चिद् अस्माभिरुपमन्त्रितम् ।
शस्त्रधारणमत्युग्रं [1]तच्च कार्यं कृतं त्वया ॥ १२

वत्स पर्याप्तमेतावद् भीष्मेण सह संयुगे ।
विमर्दस्ते महाबाहो व्यपयाहि रणादितः ॥ १३

पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम् ।
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव ॥ १४

एष भीष्मश्शान्तनवो देवैस्सर्वैर्निवारितः ।
निवर्तस्व रणादस्माद् इति चैव प्रचोदितः ॥ १५

रामेण सह मा योत्सीर् गुरुणेति पुनः पुनः ।
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ॥ १६

मानं कुरुष्व राजेन्द्र ब्राह्मणस्य रणाजिरे ।
वयं तु गुरवस्तुभ्यं तस्मात् त्वां वारयामहे ॥ १७

भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक ।
गाङ्गेयश्शन्तनोः पुत्रो वसुरेष महायशाः ॥ १८

[2]कथं शक्यस्त्वया जेतुं निवर्तस्वेह भार्गव ॥ १८॥

[3]अर्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली ।
नरः प्रजापतिर्वीरः पूर्वदेवस्सनातनः ॥ १९॥

---

1. अ-क-ग-घ—तच्चाकार्यं ।
2. म-मा—कथं त्वया रणे जेतुं रामश्शक्तो निवर्त वै ।
3. म-मा—इदमर्धं नोपलभ्यते ।

सव्यसाचीति विख्यातस् त्रिषु लोकेषु [1]वीर्यवान् ॥ २०

भीष्ममृत्युर्यथाकालं विहितो वै स्वयम्भुवा ॥ २०॥

भीष्मः—

एवमुक्तस्स पितृभिः पितॄन् रामोऽब्रवीदिदम् ॥ २१

रामः—

नाहं युधि निवर्तेयम् इति मे व्रतमाहितम् ।
न निवर्तितपूर्वश्च कदाचिद्रणमूर्धनि ॥ २२

निवर्त्यतामापगेयः कामं युद्धात् पितामहाः ।
न त्वहं विनिवर्तिष्ये युद्धादस्मात् कथञ्चन ॥ २३

ततस्ते ऋषयो राजन्नृचीकप्रमुखास्तदा ।
नारदेनैव सहिताः मामागम्येदमब्रुवन् ॥ २४

मुनयः—

निवर्तस्व रणात् तात मानयस्व द्विजोत्तमम् ॥ २४॥

भीष्मः—

नेत्यवोचमहं तांश्च क्षत्रधर्मव्यपेक्षया ॥ २५

मम व्रतमिदं लोके नाहं युद्धात् कदाचन ।
विमुखो विनिवर्तेयं पृष्ठतोऽभ्याहतश्शरैः ॥ २६

नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात् ।
त्यजेयं शाश्वतं धर्मम् इति मे निश्चिता मतिः ॥ २७

ततस्ते मुनयस्सर्वे नारदप्रमुखा नृप ।

---

1. ङ-मा—सत्ववान् ।

भागीरथी च मे माता रणमध्यं प्रपेदिरे ॥ २८

तथैवात्तशरो धन्वी तथैव दृढनिश्चयः ।
स्थितोऽहमाहवे योद्धुं ततस्ते राममब्रुवन् ॥ २९

समेत्य सहिता भूयस् समरे भृगुनन्दनम् ॥ २९॥

मुनयः—

नवनीतं हि हृदयं विप्राणां शाम्य भार्गव ।

राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम ॥ ३०॥

अवध्यो वै त्वया भीष्मस् त्वं च भीष्मस्य भार्गव ॥ ३१

भीष्मः—

एवं ब्रुवन्तस्ते सर्वे प्रतिरुद्ध्य रणाजिरम् ।
[1]वारयाञ्चक्रिरे शस्त्रं पितरो भृगुनन्दनम् ॥ ३२

ततोऽहं पुनरेवाथ तानष्टौ ब्रह्मवादिनः ।
अद्राक्षं दीप्यमानान् वै ग्रहानष्टाविवोदितान् ॥ ३३

ते मां सप्रणयं वाक्यम् अब्रुवन् समरे स्थितम् ॥ ३३॥

विप्राः—

प्रैहि रामं महाबाहो गुरुं लोकहितं कुरु ॥ ३४

भीष्मः—

दृष्ट्वा निवर्तितं रामं सुहृद्वाक्येन तेन वै ।
लोकानां च हितं कुर्वन्नहमप्याददे वचः ॥ ३५

---

1. अ-क-ग-न्यासयाञ्चक्रिरे ।

ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ।
रामश्चाप्युत्स्मयन् प्रेम्णा मामुवाच महातपाः ॥ ३६

रामः—

त्वत्समो नास्ति लोकेऽस्मिन् क्षत्रियः पृथिवीचरः ।
गम्यतां भीष्म युद्धेऽस्मिंस् तोषितोऽहं भृशं त्वया ॥ ३७

भीष्मः—

मम चैव समक्षं तां कन्यामाहूय भार्गवः ।
उक्तवान् दीनया वाचा मध्ये तेषां [1]महात्मनाम् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये ३८ श्लोकाः]

---

## ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥

राममामन्त्र्य गतया अम्बया पुण्याश्रमादिषु दुश्चरतपश्चरणम् ॥ १ ॥

---

रामः—

प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि ।
यथाशक्त्या मया युद्धं कृतं वै पौरुषं परम् ॥ १

---

1. ङ-म-मा—तपस्विनाम् ।

न चैवमपि शक्नोमि भीष्मं शस्त्रभृतां वरम् ।
[1]विशेषयितुमत्यर्थम् उत्तमास्त्राणि दर्शयन् ॥ २

एषा [2]मे परमा शक्तिर् एतन्मे परमं बलम् ।
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ३

भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः ।
निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ४

भीष्मः—

एवमुक्त्वा ततो रामो विनिश्श्वस्य महामनाः ।
तूष्णीमासीत् [3]ततः कन्या प्रोवाच भृगुनन्दनम् ॥ ५

अम्बा—

भगवन्नेवमेवैतद् यथाऽऽह भगवांस्तथा ।
अजेयो युधि भीष्मोऽयम् अपि देवैरुदारधीः ॥ ६

यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया ॥ ६॥
[4]अनिवार्यं रणे वीर्यम् अस्त्राणि विविधानि च ।
न चैव शक्यते युद्धे विशेषयितुमन्ततः ॥ ७॥

न चाहमेनं यास्यामि पुनर्भीष्मं कथञ्चन ॥ ८

गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन ।

---

1. अ-क—इदमर्धं नास्ति
2. ङ-म-मा—च मे परा।  3. ङ-मा—तदा।
4. घ—सुनीथाय।  ङ—सुनिधाय।  म-मा—अनिधाय।

समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ९

भीष्मः—

एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तपसे धृतसङ्कल्पा [1]सा मे चिन्तयती वधम् ॥ १०

ततो महेन्द्रसहितैर् मुनिभिर्भृगुसत्तमः ।
यथागतं [2]तथा सोऽगान्मामुपामन्त्र्य भारत ॥ ११

ततो [3]रथं समारुह्य स्तूयमानो द्विजातिभिः ।
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ॥ १२

यथावृत्तं महाराज सा च मां प्रत्यनन्दत ।
पुरुषांश्चादिशं प्राज्ञान् कन्यावृत्तान्तकर्मणि ॥ १३

दिवसे दिवसे ह्यस्या गतिजल्पितचेष्टितम् ।
प्रत्याहरंश्च मे युक्तास् स्थिताः प्रियहिते सदा ॥ १४

यदैव तु वनं प्रायात् सा कन्या तपसे धृता ।
तथैव व्यथितो दीनो गतचेता इवाभवम् ॥ १५

न हि मां क्षत्रियः कश्चिद् वीर्येण विजयेद्युधि ।
ऋते ब्रह्मविदस्तात तापसान् संशितव्रतान् ॥ १६

अपि चैतन्मया राजन् नारदे विनिवेदितम् ।

---

1. ङ-म-मा—मम । 2. ग-घ-ङ-म-मा—ययौ रामो ।
3. ङ-म-मा—ऽहं रथमारुह्य ।

व्यासे चैव [1]तथा कार्यं तौ चोभौ मामवोचताम् ॥ १७

नारदव्यासौ—

न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ १८

सा कन्या तु महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥ १९

[2]निराहारा कृशा रूक्षा जटिला मलपङ्किनी ।
षण्मासान् वायुभक्षा च स्थाणुभूता तपोधना ॥ २०

यमुना[3]जलमाश्रित्य संवत्सरमथापरम् ।
उदवासं निराहारा पारयामास भामिनी ॥ २१

शीर्णपर्णेन चैकेन धारयामास सा परम् ।
संवत्सरं तीव्रकोपात् पादाङ्गुष्ठाग्रविष्ठिता ॥ २२

एवं द्वादशवर्षाणि तापयामास रोदसी ।
निवर्त्यमाना पित्रा च ज्ञातिभिर्नैव शक्यते ॥ २३

ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ २४

तत्र पुण्येषु तीर्थेषु सा प्लुताङ्गी दिवानिशम् ।

---

1. घ-ङ-मा—भयात् ।　म—मया ।
2. ख-ग-घ-ङ—जलाहारा ।　3. ङ-म-मा—तीरमासाद्य ।

व्यचरत् काशिकन्या सा यथाकामविचारिणी ॥ २५
नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे ।
च्यवनस्याश्रमे चैव ब्रह्मणस्थान एव च ॥ २६
प्रयागे देवयजने देवारण्येषु चैव ह ।
भोगवत्यां महाराज कौशिकस्याश्रमे तथा ॥ २७
[1]माण्डव्यस्याश्रमे राजन् दिलीपस्याश्रमे तथा ।
रामाश्रमे च कौरव्य तथा गार्ग्यस्य चाश्रमे ॥ २८
एतेषु तीर्थेषु तदा काशिकन्या विशाम्पते ।
आप्लावयत गात्राणि तीव्रमास्थाय वै तपः ॥ २९
तामब्रवीच्च कौरव्य मम माता जलोत्थिता ॥ २९॥

गङ्गा—

किमर्थं क्लिश्यसे भद्रे तथ्यमेतद्वदस्व मे ॥ ३०

भीष्मः—

सैनामथाब्रवीद्राजन् कृताञ्जलिरनिन्दिता ॥ ३०॥

अम्बा—

[2]भीष्मेण समरे रामो निर्जितश्चारुलोचने ।
कोऽन्यस्तमुत्सहेज्जेतुम् उद्यतेषुं महीपतिः ॥ ३१॥
साऽहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् ।
विचरामि महीं देवि यथा हन्यामहं नृपम् ॥ ३२॥
एतद्व्रतफलं देहि परमस्मिन् यथा हि मे ॥ ३३

1. अ-क—इदमर्धं नास्ति ।
2. ङ-म—भीष्मो रामेण समरे न जितश्चारुलोचने ।

भीष्मः—

ततोऽब्रवीत् सागरगा जिह्मं चरसि भामिनी ।
नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाऽबले ॥　३४

यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम् ॥　३४॥

व्रतस्था तु शरीरं त्वं यदि नाम विमोक्ष्यसि ।
नदी भविष्यसि शुभे कुटिला वार्षिकोदका ॥　३५॥

दुस्तीर्था चानभिज्ञाता वार्षिकीनाष्टमासिकी ।
भीष्मग्राहवती घोरा सर्वभूतभयङ्करी ॥　३६॥

एवमुक्त्वा ततो राजन् काशिकन्यां न्यवर्तत ।
माता मम महाभागा स्मयमानेव भामिनी ॥　३७॥

कदाचिदष्टमे मासि कदाचिद्दशमे तथा ।
न प्राश्नीतोदकमपि तेपे सा वरवर्णिनी ॥　३८॥

सा वत्सभूमिं कौरव्य तीर्थलोभात् ततस्ततः ।
पतिता परिधावन्ती पुनः काशिपतेस्सुता ॥　३९॥

सा नदी वत्सभूम्यां तु प्रथिताऽम्बेति भारत ।
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा ॥　४०॥

सा कन्या तपसा तेन देहार्धेन व्यजायत ।
नदी च राजन् वत्सेषु कन्या चैवाभवत् तदा ॥　४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

॥ ६० ॥ अम्बोपाख्यानपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

## ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥

अम्बया तपस्तोषिताद् महादेवात् जन्मान्तरे पुंस्त्वप्राप्त्या भीष्म-हननरूपवरमुपलभ्याग्नौ प्रवेशः ॥ १ ॥

भीष्मः—

ततस्ते तापसास्सर्वे तपसे धृतनिश्चयाम् ।
दृष्ट्वा न्यवर्तयंस्तात किं कार्यमिति चासकृत् ॥ १
तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा ॥ १॥

अम्बा—

निराकृताऽस्मि भीष्मेण भ्रंशिता पतिधर्मतः ।
वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः ॥ २॥
निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ॥ ३
यत्कृते दुःखवसतिम् इमां प्राप्ताऽस्मि शाश्वतीम् ।
पतिलोकाद्विहीना च नैव स्त्री न पुमानिह ॥ ४
नाहत्वा युधि गाङ्गेयं [1]निवर्तिष्ये तपोधनाः ।
एष मे हृदि सङ्कल्पो [2]यदर्थमिदमुद्यतम् ॥ ५
स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया ।
भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः ॥ ६

---

1. ङ-म-मा—निवर्तेयं ।
2. अ-क-ख-ग-घ—यदिदं कथितं मया ।

भीष्मः—

तां देवो दर्शयामास शूलपाणिरुमापतिः ।
मध्ये तेषां महर्षीणां स्वेन रूपेण भामिनीम् ॥ ७

छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम् ।
हनिष्यसीति तां देवः प्रत्युवाच मनस्विनीम् ॥ ८

ततस्सा पुनरेवाथ कन्या रुद्रमुवाच ह ॥ ८॥

अम्बा—

उपपद्येत् कथं देव स्त्रिया युधि जयो मम ॥ ९

स्त्रीभावेन च मे गाढं मनश्शान्तमुमापते ।
प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः ॥ १०

यथा स सत्यो भवति तथा कुरु वृषध्वज ।
यथा हन्यां समागम्य भीष्मं शान्तनवं युधि ॥ ११

भीष्मः—

तामुवाच महादेवः कन्यां किल वृषध्वजः ॥ ११॥

शिवः—

न मे वागनृतं प्राह सत्यं भद्रे भविष्यति ॥ १२

[1]हनिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यसे ।
स्मरिष्यसि च तत् सर्वं देहमन्यं गता सती ॥ १३

द्रुपदस्य कुले जाता भविष्यसि सुसम्मतः ।

1. मा—वधिष्यसि।

शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसम्मतः ॥ १४

यथोक्तमेव कल्याणि सर्वमेतद्भविष्यति ।
भविष्यसि पुमान् पश्चात् कस्माचित् कालपर्ययात् ॥ १५

भीष्मः—

एवमुक्त्वा महादेवः कपर्दी वृषभध्वजः ।
पश्यतामेव विप्राणां तत्रैवान्तरधीयत ॥ १६

ततस्सा पश्यतां तेषां महर्षीणामनिन्दिता ।
समाहृत्य वनात् तस्मात् काष्ठानि वरवर्णिनी ॥ १७

चितां कृत्वा सुमहतीं प्रदाय च हुताशनम् ।
प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा ॥ १८

उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम् ।
ज्येष्ठा काशिसुता राजन् यमुनामभितो नदीम् ॥ १९

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

## ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

पुत्रार्थं तपस्यते द्रुपदाय महादेवेन स्त्री भूत्वा पुमान् भविष्यतीति वरदानम् ॥ १ ॥ द्रुपदभार्यया स्त्र्यपत्यजननेऽपि तस्य पुंस्त्वख्यापनम् ॥ २ ॥ द्रुपदेन तस्य स्त्रीत्वं प्रच्छाद्य पुंवज्जातकर्मादिकरणपूर्वकं शिखण्डीति नामकरणम् ॥ ३ ॥

दुर्योधनः—

कथं शिखण्डी गाङ्गेय कन्या भूत्वा सती तदा ।
पुरुषोऽभूद्युधि श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

भार्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः ।
महिषी दयिता ह्यासीद् अपुत्रा च विशाम्पते ॥ २

एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः ।
अपत्यार्थे महाराज तोषयामास शङ्करम् ॥ ३

अस्मद्वधार्थं निश्चित्य तपो घोरं समास्थितः ।
लेभे कन्यां महादेवात् पुत्रो मे स्यादिति ब्रुवन् ॥ ४

भगवन् पुत्रमिच्छामि भीष्मप्रतिचिकीर्षया ।
इत्युक्तो देवदेवेन स्त्री पुमांस्ते भविष्यति ॥ ५

निवर्तस्व महीपाल नैतज्जात्वन्यथा भवेत् ।
स तु गत्वा च नगरं भार्यामिदमुवाच ह ॥ ६

कृतो यत्नो मया देवि पुत्रार्थं तपसा महान् ।
कन्या भूत्वा पुमान् भावी इति चोक्तोऽस्मि शम्भुना ॥ ७
पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः ।
न तदन्यच्च भविता भवितव्यं हि तत् तथा ॥ ८
ततस्सा नियता भूत्वा ऋतुकाले मनस्विनी ।
पत्नी द्रुपदराजस्य द्रुपदं प्रविवेश ह ॥ ९
लेभे गर्भं यथाकालं विधिदृष्टेन हेतुना ।
[1]पार्षतस्य महीपाल यथा मां नारदोऽब्रवीत् ॥ १०
ततो दधार सा देवी गर्भं राजीवलोचना ॥ १०॥
तां स राजप्रियां भार्यां द्रुपदः कुरुनन्दन ।
[2]पुत्रस्नेहान्महाबाहुस् सुखं पर्यचरत् तदा ॥ ११॥
सर्वानभिप्रायगतान् भार्याऽलभत कौरव ।
अपुत्रस्य सतो राज्ञो द्रुपदस्य यशस्विनः ॥ १२॥
[3]यथाकालं तु सा देवी महिषी द्रुपदस्य ह ।
कन्यां प्रवररूपां तु प्राजायत नराधिप ॥ १३॥
अपुत्रस्य तु राज्ञस्सा द्रुपदस्य मनस्विनी ।
ख्यापयामास राजेन्द्र पुत्रो ह्येष ममेति वै ॥ १४॥
ततस्स राजा द्रुपदः प्रच्छन्नाया नराधिप ।

---

1. ङ-मा—पार्षतात् स महीपालात्
2. म—सार्धश्लोकद्वयं न दृश्यते ।
3. ङ-मा—इदमर्धं नास्ति ।

पुत्रवत् पुत्रकार्याणि सर्वाणि समकारयत् ॥ १५॥
रक्षणं चैव मन्त्रस्य महिषी द्रुपदस्य सा ।
चकार सर्वयत्नेन ब्रुवाणा पुत्र इत्युत ॥ १६॥
न हि तां वेद नगरे कश्चिदन्यत्र पार्षतात् ॥ १७
श्रद्दधानो हि तद्वाक्यं देवस्याद्भुततेजसः ।
छादयामास तां कन्यां पुमानिति च सोऽब्रवीत् ॥ १८
जातकर्माणि सर्वाणि कारयामास पार्थिवः ॥
पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः । १९
अहमेकस्तु चारेण वचनान्नारदस्य ह ।
ज्ञातवान् देववाक्येन अम्बायास्तपसा तथा ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

## ॥ एकोनाशीत्युत्तरशततमोऽध्यायः ॥

पुंवेषगूहितया शिखण्डिन्या द्रोणाद्धनुर्विद्याभ्यसनम् ॥ १ ॥ द्रुपदेन शिखण्डिन्याः दशार्णाधिपतिकन्यया विवाहकरणम् ॥ २ ॥ दाशार्णकसुतया धात्रीद्वारा स्वपित्रे शिखण्डिन्या स्त्रीत्वज्ञापनम् ॥ ३ ॥ दाशार्णकेन दूतमुखेन द्रुपदं प्रति स्वविप्रलम्भफलतया सबन्धोस्तस्य समुच्छेदनिवेदनम् ॥ ४ ॥

---

भीष्मः—

चकार यत्नं द्रुपदस्सुतायास्सर्वकर्मसु ।
ततो लेखादिषु तथा शिल्पेषु च परन्तप ॥ १

इष्वस्त्रे चैव राजेन्द्र द्रोणशिष्यो बभूव ह ॥ १॥
तस्य माता महाराज राजानं वरवर्णिनी ।
चोदयामास भार्यार्थं कन्यायाः पुत्रवत् तदा ॥ २॥
ततस्तां पार्षतो दृष्ट्वा कन्यां सम्प्राप्तयौवनाम् ।
स्त्रियं मत्वा ततश्चिन्तां प्रपेदे सह भार्यया ॥ ३॥

द्रुपदः—

कन्या ममेयं सम्प्राप्ता यौवनं शोकवर्धिनी ।
मया प्रच्छादिता चेयं वचनाच्छूलपाणिनः ॥ ४॥
न तन्मिथ्या महाराज भविष्यति कथञ्चन ॥ ५

भार्या—

त्रैलोक्यकर्ता कस्माद्धि वृथा वक्तुमिहार्हति ।
यदि ते रोचते राजन् वक्ष्यामि शृणु मे वचः ॥ ६
श्रुत्वेदानीं प्रपद्येथास् स्वां मतिं पृषतात्मज ॥ ६॥
क्रियतामस्य यत्नेन विधिवद्दारसङ्ग्रहः ।
[1]भविता तद्वचस्सत्यम् इति मे निश्चिता मतिः ॥ ७॥

भीष्मः—

ततस्तौ निश्चयं कृत्वा तस्मिन् कार्येऽथ दम्पती ।
वरयाञ्चक्रतुः कन्यां दशार्णाधिपतेस्सुताम् ॥ ८॥

1. ङ-म-मा—सत्यं भवतु तद्वाक्यम्

ततो राजा द्रुपदो राजसिंहस्
सर्वान् राज्ञः कुलतस्सन्निशाम्य ।
दाशार्णकस्य नृपतेस्तनूजां
शिखण्डिने वरयामास कन्याम् ॥ ९॥

हिरण्यवर्मेति नृपो योऽसौ दाशार्णकस्स्मृतः ।
स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने ॥ १०॥

स च राजा दशार्णेषु महानासीत् सुदुर्जयः ।
हिरण्यवर्मा दुर्धर्षो महासेनो महामनाः ॥ ११॥

कृते विवाहे तु तदा सा कन्या राजसत्तम ।
यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी ॥ १२॥

कृतदारश्शिखण्डी च काम्पिल्यं पुनरागमत् ।
न च सा वेद तां कन्यां कश्चित् कालं स्त्रियं किल ॥ १३॥
यदा त्वेनामजानात् सा स्त्रियमेव नृपात्मजा ॥ १४

धात्रीणां च सखीनां च व्रीडमाना न्यवेदयत् ।
कन्यां पाञ्चालराजस्य सुतां तां वै शिखण्डिनीम् ॥ १५

ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा ।
[1]जग्मुरार्तिं परां प्रेष्याः प्रेषयामासुरेव च ॥ १६

---

1. मा—अर्धचतुष्टयं न दृश्यते ।

ततो दशार्णाधिपतेः प्रेष्यास्सर्वा न्यवेदयन् ।
विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिवः ॥ १७

शिखण्ड्यपि महाराज पुंवद्राजकुले तदा ।
विजहार मुदा युक्तस् स्त्रीत्वं नैवाभिरोचयन् ॥ १८

ततः कतिपयाहस्सु तच्छ्रुत्वा भरतर्षभ ।
हिरण्यवर्मा राजेन्द्र रोषादार्तिं जगाम ह ॥ १९

ततो दाशार्णको राजा तीव्रकोपसमन्वितः ।
दूतं प्रस्थापयामास द्रुपदस्य निवेशनम् ॥ २०

ततो द्रुपदमासाद्य दूतः काञ्चनवर्मणः ।
एक एकान्तमुत्सार्य रहो वचनमब्रवीत् ॥ २१

दूतः—

दशार्णराजो राजंस्त्वाम् इदं वचनमब्रवीत् ।
अभिषङ्गात् प्रकुपितो विप्रलब्धस्त्वयाऽनघ ॥ २२

अवमन्यसे मां नृपते नूनं दुर्मन्त्रितं तव ।
यन्मे कन्यां स्वकन्यार्थे मोहाद्याचितवानसि ॥ २३

तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्मते ।
एष त्वां सजनामात्यम् उद्धरामि स्थिरो भव ॥ २४

अवमत्य च वीर्यं मे कुलं चारित्रमेव च ।
विप्रलम्भस्त्वयाऽपूर्वो मनुष्येषु प्रवर्तितः ॥ २५

कुरु सर्वाणि कार्याणि भुङ्क्ष्व भोगाननुत्तमान् ।
अभियास्यामि शीघ्रं त्वां समुद्धर्तुं सबान्धवम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

## ॥ अशीत्युत्तरशततमोऽध्यायः ॥

दाशार्णकेन पुनर्दूतप्रेषणे द्रुपदेन पत्न्या सह कर्तव्यालोचनम् ॥ १ ॥

भीष्मः—

एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप ।
चोरस्येव गृहीतस्य न प्रावर्तत भारती ॥ १

स यत्नमकरोत् तीव्रं [1]सम्बन्धिन्यनुशासने ।
दूतैर्मधुरसम्भाषैर् न तदस्तीति सन्दिशन् ॥ २

स राजा भूय एवाथ ज्ञात्वा तत्त्वमथागमत् ।
कन्येति पाञ्चालसुतां त्वरमाणो विनिर्ययौ ॥ ३

ततस्सम्प्रेषयामास मित्राणाममितौजसाम् ।
दुहितुर्विप्रलम्भं तं धात्रीणां वचनात् तदा ॥ ४

1. ख-घ-ङ-म-मा—सम्बन्धैरनुसान्त्वनैः ।

ततस्समुदयं कृत्वा बलानां राजसत्तमः ।
अभियाने मतिं चक्रे द्रुपदं प्रति भारत ॥ ५

ततस्सम्मन्त्रयामास मन्त्रिभिस्स महीपतिः ।
हिरण्यवर्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति ॥ ६

तत्र वै निश्चितं तेषाम् अभूद्राज्ञां महात्मनाम् ॥ ६॥
तथ्यं भवति चेदेतत् कन्या राजन् शिखण्डिनी ।

बद्ध्वा पाञ्चालराजानम् आनयिष्यामहे गृहम् ॥ ७॥
अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरम् ।
[1]घातयिष्यामि नृपतिं पाञ्चालं सशिखण्डिनम् ॥ ८॥
स तथा द्रुतमाज्ञाय पुनर्दूतान् नराधिपः ।
[2]प्रस्थापयत् पार्षताय निहन्मीति स्थिरो भव ॥ ९॥

स हि प्रकृत्या भीतश्च किल्बिषी च नराधिपः ।
भयं तीव्रमनुप्राप्तो द्रुपदः पृथिवीपतिः ॥ १०॥

विसृज्य दूतान् दाशार्णे द्रुपदश्शोकमूर्छितः ।
समेत्य भार्यां रहिते वाक्यमाह नराधिपः ॥ ११॥
भयेन महताऽऽविष्टो हृदि शोकेन कर्शितः ।

---

1. ख-घ-ङ—अद्यैव पातयिष्यामो द्रुपदं—
   म-मा—अद्य वै घातयिष्यामो द्रुपदं
2. मा—अर्धषट्कं न दृश्यते ।

पाञ्चालराजो दयितां मातरं वै शिखण्डिनः ॥ १२॥

द्रुपदः—

अभियास्यति मां कोपात् सम्बन्धी सुमहाबलः ।
हिरण्यवर्मा नृपतिः कर्षमाणो वरूथिनीम् ॥ १३॥
किमिदानीं [1]करिष्यावो [2]मूढौ कन्यामिमां प्रति ।
शिखण्डी किल पुत्रस्ते कन्येति परिशङ्कितः ॥ १४॥
इति [3]साञ्चिन्त्य यत्नेन समित्रस्सबलानुगः ।
वञ्चितोऽस्मीति मन्वानो मां किलोद्धर्तुमिच्छति ॥ १५॥
किमत्र तथ्यं सुश्रोणि मिथ्या किं ब्रूहि शोभने ।
श्रुत्वा त्वत्तश्शुभे वाक्यं संविधास्याम्यहं तथा ॥ १६॥
अहं हि संशयं प्राप्तो बाला चेयं शिखण्डिनी ।
त्वं च राज्ञि महत् कृच्छ्रं सम्प्राप्ता वरवर्णिनि ॥ १७॥
सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः ।
तथा विदध्यां सुश्रोणि कृत्यमाशु शुचिस्मिते ॥ १८॥
शिखण्डिनि च मा भैस्त्वं विधास्ये तत्र तत्त्वतः ।
[4]प्रिययाऽहं वरारोहे वञ्चितः पुत्रधर्मतः ॥ १९॥
मया दाशार्णको राजा वञ्चितस्स महीपतिः ।
तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् ॥ २०॥

---

1. मा—करिष्यामि
2. ङ-म-मा—मूढः
3. म-मा—निश्चित्य तत्त्वेन
4. अ-क—इदमर्धं नोपलभ्यते ।

भीष्मः—

जानता हि नरेन्द्रेण ख्यापनार्थं परस्य वै ।
प्रकाशं चोदिता देवी प्रत्युवाच महीपतिम् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ एकाशीत्युत्तरशततमोऽध्यायः ॥

शिखण्डिन्या पित्रोश्शोकस्य स्वमूलकत्वचिन्तनेन दुर्गमारण्यमेत्य स्थूणाकर्णनाम्नः कुबेरानुचरस्य गृहसमीपे प्रायोपवेशः ॥ १ ॥ स्थूणाकर्णचोदितया शिखण्डिन्या कञ्चित् कालं पुंस्त्ववरणम् ॥ २ ॥

---

भीष्मः—

ततश्शिखण्डिनो माता यथातत्त्वं नराधिप ।
आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीम् ॥ १

भार्या—

अपुत्रया [1]मया राजन् सपत्नीनां भयादियम् ।
कन्या शिखण्डिनी जाता पुरुषो वै निवेदितः ॥ २
त्वया चैव नरश्रेष्ठ [2]तन्मे प्रीत्याऽनुमोदितम् ।
पुत्रकर्म कृतं चैव कन्यायाः पार्थिवर्षभ ॥ ३

---

1. म-मा—महाराज
2. म—तस्मिन् प्रीत्याऽन्वमोदत । मा—मत्प्रीत्या ह्यनुमोदितम्

भार्योढा वै त्वया राजन् दशार्णाधिपतेस्सुता ।
[1]मया च प्रत्यभिहितं देवकार्यार्थदर्शनात् ॥ ४

कन्या भूत्वा पुमान् भावीत्युक्तं दैवमुपेक्षितम् ॥ ४१॥

भीष्मः—

तच्छ्रुत्वा वै द्रुपदो याज्ञसेनस्
सर्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य ।
मन्त्रं राजा मन्त्रयामास राजन्
यथायुक्तं रक्षणेऽथ प्रजानाम् ॥ ५॥

[2]सम्बन्धकं चैव समर्थ्य तस्मिन्
दाशार्णके वै नृपतौ नरेन्द्रः ।
स्वयं कृत्वा विप्रलम्भं [3]यथाव-
न्मन्त्रैकाग्रो निश्चयं वै जगाम ॥ ६॥

स्वभावयुक्तं नगरम् आपत्काले तु भारत ।
गोपयामास राजेन्द्र सर्वतस्समलङ्कृतम् ॥ ७॥
आर्तिं च परमां राजा जगाम सह भार्यया ।
दशार्णपतिना सार्धं विरोधे भरतर्षभ ॥ ८॥
कथं सम्बन्धिना सार्धं न मे स्याद्विग्रहो महान् ।
इति सञ्चिन्त्य मनसा देवतामर्चयत् तदा ॥ ९॥

---

1. ब-ङ-म-मा—त्वया च प्रागभिहितं
2. म—श्लोकोऽयं न दृश्यते  3. ख-ब-ङ—च तस्य, स मन्त्रिगुप्तो

तं तु दृष्ट्वा तदा राजन् देवी [1]दैवपरं तदा ।
अर्चां प्रयुञ्जानमथो भार्या वचनमब्रवीत् ॥ १०॥

भार्या—

दैवानां प्रतिपत्तिश्च सत्या साधुमता तदा ।
[2]दैवतानि च सर्वाणि पूज्यन्तां भूरिदक्षिणैः ॥ ११॥
अग्नयश्चापि हूयन्तां दाशार्णप्रतिषेधने ॥ १२

अयुद्धेन निवृत्तिं च मनसा चिन्तय प्रभो ।
दैवतानां प्रसादेन सर्वमेतद्भविष्यति ॥ १३
मन्त्रिभिर्मन्त्रितं सार्धं त्वया पृथुललोचन ।
पुरस्यास्याविनाशाय यच्च राजंस्तथा कुरु ॥ १४
दैवं हि मानुषोपेतं भृशं सिद्ध्यति पार्थिव ।
परस्परविरोधात्तु नानयोस्सिद्धिरस्ति वै ॥ १५
तस्माद्विधाय नगरे विधानं सचिवैस्सह ।
अर्चयस्व यथाकामं दैवतानि विशाम्पते ॥ १६

भीष्मः—

एवं सम्भाषमाणौ तु दृष्ट्वा शोकपरायणौ ।

---

1. म-मा—दैवपरं
2. ख-ग-म-मा—सा तु दुःखार्णवं प्राप्य न स्यादर्चयतां भृशम् ।
[अधिकः पाठः]
घ-ङ—सख्यं दशार्णपं प्राप्य नस्स्यादर्चयतां भृशम् ।
[अधिकः पाठः]

शिखण्डिनी तदा कन्या व्रीडितेव तपस्विनी ॥ १७

ततस्सा चिन्तयामास मत्कृते दुःखितावुभौ ।
इमाविति ततश्चक्रे मतिं प्राणविनाशने ॥ १८

एवं सा निश्चयं कृत्वा भृशं शोकपरायणा ।
[1]निर्जगाम गृहं त्यक्त्वा गहनं निर्जनं वनम् ॥ १९

[2]यक्षेणर्द्धिमता राजन् स्थूणाकर्णेन पालितम् ॥ १९॥
तद्भयादेव [3]च जनो विसर्जयति तद्वनम् ॥ २०

तत्र च स्थूणभवनं सुधामृत्तिकलेपनम् ।
[4]लाजोत्थापितधूमाढ्यम् उच्चप्राकारतोरणम् ॥ २१

तत् प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप ।
अनश्नती बहुतिथं शरीरमुदशोषयत् ॥ २२

दर्शयामास तां यक्षस् स्थूणो मध्वक्षसंयुतः ॥ २२॥

स्थूणाकर्णः—

किमर्थोऽयं तवारम्भः करिष्ये ब्रूहि मा चिरम् ॥ २३

भीष्मः—

अशक्यमिति सा यक्षं पुनः पुनरुवाच ह ।
करिष्यामीति वै क्षिप्रं प्रत्युवाचाथ गुह्यकः ॥ २४

---

1. मा—जगाम भवनं　　2. मा—यक्षेण धीमता
3. ध-ङ-म—वचनं । मा—च वनं
4. ग—राजोपचारधूमाढ्यम् ।
ख-च—राजोपलेपधूमाढ्यं मञ्च । ङ—राजोपलेपधूपाढ्यमुच्च ।

स्थूणाकर्णः—

धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे ।
अदेयमपि दास्यामि ब्रूहि यत् ते विवक्षितम् ॥ २५

भीष्मः—

ततश्शिखण्डी तत् सर्वम् अखिलेन न्यवेदयत् ।
तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत ॥ २६

शिखण्डी—

आपन्नो मे पिता यक्ष न चिराद्विनशिष्यति ।
अभियास्यति सक्रोधो दशार्णाधिपतिर्हि तम् ॥ २७
मन्निमित्तं महोत्साहस् स हेमकवचो नृपः ॥ २७॥
तस्माद्रक्षस्व मां यक्ष मातरं पितरं च मे ॥ २८
प्रतिज्ञातो हि भवता दुःखप्रति[1]शमो मम ।
भवेयं पुरुषो यक्ष त्वत्प्रसादादनिन्दितः ॥ २९
यावदेव स राजा वा नोपयाति पुरं मम ।
तावदेव महायक्ष प्रसादं कुरु गुह्यक ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

1. ङ-म-मा—नयो

## ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥

स्थूणाकर्णेन शिखण्डिन्यै पुनः पुंस्त्वप्रत्यर्पणप्रतिज्ञापनपूर्वकं तदीयस्त्रीत्वस्वीकारेण स्वीयपुंस्त्वसमर्पणम् ॥ १ ॥ दाशार्णकेन उपायात् शिखण्डिनः पुंस्त्वं निर्धार्य स्वपुरगमनम् ॥ २ ॥ अत्रान्तरे स्थूणगृहमागतेन कुबेरेण तं प्रति स्त्रीत्वधारणस्य शिखण्डिमरणावधिकत्वरूपशापदानम् ॥ ३ ॥ पुंस्त्वप्रत्यर्पणाय गतेन शिखण्डिना स्थूणात् तद्वृत्तान्तमुपलभ्य हर्षात् स्वगृहागमनम् ॥ ४ ॥ इत्थं भीष्मेण दुर्योधनं प्रति शिखण्डिना सह स्वेन युद्धाकरणे कारणाभिधानम् ॥ ५ ॥

---

भीष्मः—

शिखण्डिवाक्यं श्रुत्वाऽथ स यक्षो भरतर्षभ ।
प्रोवाच मनसा चिन्त्य दैवेनोपनिपीडितः ॥ १
भवितव्यं यथा तद्धि मम दुःखाय कौरव ॥ १॥

स्थूणाकर्णः—

भद्रे कामं करिष्यामि समयं तु निबोध मे ॥ २
स्वं ते पुंस्त्वं प्रदास्यामि स्त्रीत्वं धारयितास्मि ते ।
कञ्चित् कालं तु ते दास्ये पुँल्लिङ्गं स्वमिदं तव ॥ ३
आगन्तव्यं त्वया काले सत्यं चैव वदस्व मे ॥ ३॥
प्रभुस्सङ्कल्पसिद्धोऽस्मि कामचारी विहङ्गमः ।
मत्प्रसादात् पुरं चैव त्राहि बन्धूंश्च केवलम् ॥ ४॥
स्त्रीलिङ्गं धारयिष्यामि [1]तवेदं पार्थिवात्मजे ।

---

1. ङ-मा—त्वदीयं

सत्यं मे प्रतिजानीहि करिष्यामि [1]प्रियं तव ॥ ५॥

शिखण्डी—

प्रतिदास्यामि भगवन् [2]पुँल्लिङ्गं तव सुव्रत ।
किञ्चित् कालान्तरं स्त्रीत्वं धारयस्व निशाचर ॥ ६॥

प्रतियाते [3]दशार्णे तु पार्थिवे हेमवर्मणि ।
कन्यैव हि भविष्यामि पुरुषस्त्वं भविष्यसि ॥ ७॥

भीष्मः—

इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप ।
अन्योन्यस्यानभिद्रोहे तौ सङ्क्रामयतां ततः ॥ ८॥

स्त्रीलिङ्गं धारयामास स्थूणो यक्षोऽथ भारत ।
यक्षरूपं च तद्दीप्तं शिखण्डी प्रत्यपद्यत ॥ ९॥

ततश्शिखण्डी पाञ्चाल्यः पुंस्त्वमासाद्य भारत ।
विवेश नगरं हृष्टः पितरं च समासदत् ॥ १०॥

यथावृत्तं तु तत् सर्वम् आचख्यौ द्रुपदस्य तत् ।
मातुश्च रहिते राजन् प्रसादं यक्षजं तदा ॥ ११॥

द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत् परम् ।
सभार्यस्तच्च सस्मार महेश्वरवचस्तदा ॥ १२॥

ततस्सम्प्रेषयामास दशार्णाधिपतेर्नृपः ।

---

1. ङ-मा—हितं 2. ग-घ-ङ-मा—लिङ्गं पुनरिदं तव ।
3. घ—तु दाशार्णे

पुरुषोऽयं मम सुतश्[1]श्रद्धत्तां मे भवानिति ॥ १३॥

अथ दाशार्णको राजा सहसाऽभ्यागमत् तदा ।
पाञ्चालराजं द्रुपदं दुःखशोकसमन्वितः ॥ १४॥

ततः काम्पिल्यमासाद्य दशार्णाधिपतिस्ततः ।
प्रेषयामास सत्कृत्य दूतं ब्रह्मविदां वरम् ॥ १५॥

हिरण्यवर्मा—

ब्रूहि मद्वचनाद्दूत पाञ्चाल्यं तं नृपाधमम् ॥ १६

यन्मे कन्यां स्वकन्यार्थे वृतवानसि दुर्मते ।
फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशयः ॥ १७

भीष्मः—

एवमुक्तश्च तेनासौ ब्राह्मणो राजसत्तम ।
दूतः प्रयातो नगरं दाशार्णनृपचोदितः ॥ १८

तत आसादयामास पुरोधा द्रुपदं पुरे ॥ १८॥

[2]तस्मिन् पाञ्चालको राजा गामर्घ्यं च सुसत्कृतम् ।
प्रापयामास राजेन्द्र सह तेन शिखण्डिना ॥ १९॥

तां पूजां नाभ्यनन्दत् स वाक्यं चेदमुवाच ह ।
यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्मणा ॥ २०॥

यत् तेऽह[3]मधमाचार दुहित्राऽस्म्यभिवञ्चितः ।
तस्य पापस्य करणात् फलं प्राप्नुहि दुर्मते ॥ २१॥

---

1. ङ—श्रद्दधातु  2. ख-घ-ङ-मा—सोऽस्मै
3. ख-ग-घ-ङ—मपचारेण

देहि युद्धं नरपते ममाद्य रणमूर्धनि ।
उद्धरिष्यामि सद्यस्त्वां सामात्यसुतबान्धवम् ॥ २२॥

तदुपालम्भसंयुक्तं श्रावितः किल पार्थिवः ।
दशार्ण[1]पतिदूतेन मन्त्रिमध्ये पुरोधसा ॥ २३॥

[2]अब्रवीद्भरतश्रेष्ठ द्रुपदः प्रणयानतः ॥ २४

द्रुपदः—

यदाह मां भवान् ब्रह्मन् सम्बन्धिवचनाद्वचः ।
अस्योत्तरं प्रतिवचो [3]दूतो राज्ञो वदिष्यति ॥ २५

भीष्मः—

ततस्सम्प्रेषयामास द्रुपदोऽपि महात्मने ।
हिरण्यवर्मणे दूतं ब्राह्मणं वेदपारगम् ॥ २६

तमागम्य तु राजानं दशार्णाधिपतिं तदा ।
तद्वाक्यमाददे राजन् यदुक्तं द्रुपदेन ह ॥ २७

ब्राह्मणः—

आगमः क्रियतां व्यक्तं कुमारोऽयं सुतो मम ।
मिथ्यैतदुक्तं केनापि तन्न श्रद्धेयमित्युत ॥ २८

भीष्मः—

ततस्स राजा द्रुपदस्य श्रुत्वा
विमर्शयुक्तो युवतीर्वरिष्ठाः ।
सम्प्रेषयामास सुचारुरूपाश्
शिखण्डिनं स्त्री पुमान् वेति वेत्तुम् ॥ २९

---

1. ग-घ-ङ—नृपदूतेन अ-क-ख-म—पतिना चोक्तो ।
2. अ-क-ख-म—अभव 3. मा—दूत एव

ताः प्रेषितास्तत्त्वभावं विदित्वा
[1]प्रीत्या राज्ञे तच्छशंसुर्हि सर्वम् ।
शिखण्डिनं पुरुषं कौरवेन्द्र
दशार्णराजाय महानुभावम् ॥ ३०

ततः कृत्वा तु राजा स आगमं [2]प्रीतिमानथ ।
सम्बन्धिना समागम्य हृष्टो मासमुवास ह ॥ ३१

शिखण्डिने च मुदितः प्रादाद्वित्तं जनेश्वरः ।
हस्तिनोऽश्वांश्च गाश्चैव दासीर्बहुशतास्तथा ॥ ३२

पूजितश्च प्रतिययौ [3]निमन्त्र्य तनयां किल ॥ ३२॥

विनीतकिल्बिषे प्रीते हेमवर्मणि पार्थिवे ।
प्रतियाते दशार्णे तु हृष्टरूपा शिखण्डिनी ॥ ३३॥

कस्यचित्त्वथ कालस्य कुबेरो नरवाहनः ।
लोकयात्रां प्रकुर्वाणस् स्थूणस्यागान्निवेशनम् ॥ ३४॥

स तद्गृहस्योपरि वर्तमान
आलोकयामास धनाधिगोप्ता ।
स्थूणस्य यक्षस्य विवेश वेश्म
स्वलङ्कृतं माल्यगुणैर्वि[4]चित्रैः ॥ ३५॥

---

1. ङ—गता । म-मा—प्रीता 2. ङ-म-मा—प्रीतमानसः
3. अ-क-ग-म—निर्भर्त्स्यं । ब-ङ-मा—निवर्त्य
4. ङ-म-मा—चित्तम् ,

लाजैश्च गन्धैश्च तथा वितानैर्
अभ्यर्चितं धूपनधूपितं च ।
ध्वजैः पताकाभिरलङ्कृतं च
भक्ष्यान्नपेयामिषदत्तमोदम् ॥ ३६॥

तत् स्थानं तस्य दृष्ट्वा तु सर्वतस्समलङ्कृतम् ।
[1]मणिरत्नसुवर्णानां मालाभिः परिपूरितम् ॥ ३७॥

नानाकुसुमगन्धाढ्यं सिक्तसम्मृष्टशोभितम् ॥ ३८

अथाब्रवीद्यक्षपतिस् तान् यक्षाननुगांस्तदा ॥ ३८॥

कुबेरः—

स्वलङ्कृतामिदं वेश्म स्थूणस्यामितविक्रमाः ।
नोपसर्पति मां चैव कस्माद्य स मन्दधीः ॥ ३९॥

यस्माज्जानन् स मन्दात्मा मामसौ नोपसर्पति ।
तस्मात् तस्मै महादण्डो धार्यस्स्यादिति मे मतिः ॥ ४०॥

यक्षाः—

द्रुपदस्य सुता राजन् राज्ञो जाता शिखण्डिनी ।
तस्या निमित्ते कस्मिंश्चित् प्रादात् पुरुषलक्षणम् ॥ ४१॥

अग्रहील्लक्षणं स्त्रीणां स्त्रीभूता तिष्ठते गृहे ।
नोपसर्पति तेनासौ [2]सव्रीडस्स्त्रीस्वरूपवान् ॥ ४२॥

---

1. ङ-म-मा—अर्धद्वयं नास्ति
2. ग-घ-ङ—व्रीडितस्स्त्रीस्वरूपतः । म—सव्रीडं ते स्वरूपतः ।
मा—सव्रीडः स्त्रीस्वरूपतः ।

एतस्मात् कारणाद्राजन् स्थूणो न त्वाऽद्य पश्यति ।
श्रुत्वा कुरु यथा न्याय्यं विमानमिह तिष्ठताम् ॥ ४३॥

भीष्मः—

आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत् ।
कर्तास्मि निग्रहं तस्य प्रत्युवाच पुनः पुनः ॥ ४४॥
सोऽभ्यगच्छत यक्षेन्द्रम् आहूतः पृथिवीपते ।
स्त्रीस्वरूपो महाराज तस्थौ व्रीडासमन्वितः ॥ ४५॥
तं शशापाथ सङ्क्रुद्धो धनदः कुरुनन्दन ॥ ४६

कुबेरः—

एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः ॥ ४६॥

भीष्मः—

ततोऽब्रवीद्यक्षपतिर्महात्मा
यस्माददास्त्ववमत्येह यक्षान् ।
शिखण्डिनो लक्षणं पापबुद्धे
स्त्रीलक्षणं चाग्रहीः पापकर्मन् ॥ ४७॥

अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत् त्वया कृतम् ।
तस्मादद्यप्रभृत्येव स्त्री त्वं सा पुरुषस्तथा ॥ ४८॥
ततः प्रसादयामासुर् यक्षा वैश्रवणं किल ।
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः ॥ ४९॥
ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः ।
सर्वान् यक्षगणांस्तात शापस्यान्तचिकीर्षया ॥ ५०॥

[1]शिखण्डिनि हते यक्षास् स्वं रूपं प्रतिपत्स्यते ।
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ॥ ५१॥

इत्युक्त्वा भगवान् देवो यक्षराजस्सुपूजितः ।
प्रययौ सहितस्सर्वैर् निमेषान्तरचारिभिः ॥ ५२॥

स्थूणस्तु शापं सम्प्राप्य तत्रैव न्यवसत् तदा ।
समये चागमत् तूर्णं शिखण्डी तं क्षपाचरम् ॥ ५३॥

सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति ।
तमब्रवीत् ततस्स्थूणः प्रीतोऽस्मीति पुनः पुनः ॥ ५४॥

आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम् ।
सर्वमेव यथावृत्तम् आचचक्षे शिखण्डिने ॥ ५५॥

यक्षः—

शप्तो वैश्रवणेनाहं त्वत्कृते पार्थिवात्मज ।
गच्छेदानीं यथाकामं चर लोकान् यथासुखम् ॥ ५६॥

दिष्टमेतत् पुरा मन्ये न शक्यमतिवर्तितुम् ।
[2]गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ॥ ५७॥

भीष्मः—

एवमुक्तश्शिखण्डी तु स्थूणयक्षेण भारत ।
क्षिप्रं जगाम नगरं हर्षेण [3]महता वृतः ॥ ५८॥

---

1. ब—हते शिखण्डिनि रणे
2. अ-क—नास्तीदमर्थम्
3. म-मा—ब समन्वितः

पूजयामास विविधैर् गन्धमाल्यैर्मनोरमैः ।
द्विजातीन् देवतांश्चैव चैत्यानथ चतुष्पथान् ॥ ५९॥

द्रुपदस्सह पुत्रेण सिद्धार्थेन शिखण्डिना ।
मुदं च परमां लेभे पाञ्चाल्यस्सह बान्धवैः ॥ ६०॥

शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव ।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ॥ ६१॥

प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः ।
शिखण्डी सह युष्माभिर् धृष्टद्युम्नश्च पार्षतः ॥ ६२॥

मम त्वेतच्चरास्तात यथावत् प्रत्यवेदयन् ।
जडान्धबधिराकारा ये मुक्ता द्रुपदे मया ॥ ६३॥

एवमेव महाराज स्त्री पुमान् द्रुपदात्मजः ।
स सम्भूतः कुरुश्रेष्ठ शिखण्डी रथसत्तमः ॥ ६४॥

ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता ।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ६५॥

नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ६६॥

व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ॥ ६७

स्त्रियां स्त्रीपूर्वके चापि स्त्रीनाम्नि स्त्रीस्वरूपिणि ।
न मुञ्चेयमहं बाणम् इति कौरवनन्दन ॥ ६८

न हन्यामहमेतेन कारणेन शिखण्डिनम् ।
एतत् तत्त्वमहं वेद जन्म तात शिखण्डिनः ॥ ६९
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ।
यदि भीष्मस्स्त्रियं हन्यात् [1]सन्तः कुर्युर्विगर्हणाम् ॥ ७०
नैनं तस्माद्धनिष्यामि दृष्ट्वाऽपि समरे स्थितम् ॥ ७०॥

सञ्जयः—

एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ७१॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ७१॥ श्लोकाः ]

---

## ॥ त्र्यशीत्यधिकशततमोऽध्यायः ॥

---

दुर्योधनेन भीष्मादीन् प्रति युष्माभिः कियता कालेन समग्रपरसेनाक्षपणं कर्तुं शक्यमिति प्रश्ने तैः पृथक् पृथक् तदुत्तरदानम् ॥ १ ॥

---

सञ्जयः—

प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ १

---

1. मा—हन्यादात्मानमप्युत ।

दुर्योधनः—

पाण्डवेयस्य गाङ्गेय यदेतत् सैन्यमुत्तमम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ २

भीमार्जुनप्रभृतिभिर् महेष्वासैर्महाबलैः ।
लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ३

अप्रधृष्यमनावार्यम् उद्धूतमिव सागरम् ।
सेनासागरमक्षोभ्यम् अपि देवैर्महाहवे ॥ ४

केन कालेन गाङ्गेय क्षपयेथा महाद्युते ॥ ४॥

आचार्यो वा महेष्वासः कृपो वा सुमहाबलः ।
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ॥ ५॥
दिव्यास्त्रविदुषस्सर्वे भवन्तो हि बले मम ॥ ६

एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ७

अनेनाहं विधानेन सन्नद्धस्सततोत्थितः ।
क्षपयेयं महत् सैन्यं केन कालेन भारत ॥ ८

भीष्मः—

अनुरूपं कुरुश्रेष्ठ त्वय्येतत् पृथिवीपते ।
बलाबलममित्राणां [1]तेषां यदिह पृच्छसि ॥ ९

1. ख-ग-घ-ङ—बलं च मम

शृणु राजन् मम रणे या शक्तिः परमा भवेत् ।
शस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ॥ १०

आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चितम् ॥ ११

हन्यामहं महाभाग पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागं [1]प्रागाह्निकं मम ॥ १२

राज्ञां तु दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकम् एष भागो मतो मम ॥ १३

अनेनाहं विधानेन सन्नद्धस्सततोत्थितः ।
क्षपयेयं महत् सैन्यं कालेनानेन भारत ॥ १४

मुञ्चेयं यदि शस्त्राणि महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ १५

सञ्जयः—

श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्ततः ।
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ १६

आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ १७

1. ग-घ-ङ—भागं निजं मम। ख-म—भागाह्निकं

द्रोणः—

स्थविरोऽस्मि महाबाहो मन्दप्राणविचेष्टितः ।

शस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ १८

यथा भीष्मश्शान्तनवो मासेनेति मतिर्मम ।

एषा मे परमा शक्तिर् एतन्मे परमं बलम् ॥ १९

सञ्जयः—

द्वाभ्यामेव तु मासाभ्यां कृपश्शारद्वतोऽब्रवीत् ।

द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ॥ २०

[1]कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ २०॥

तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ।

जहास सस्वनं हासं वाक्यं चेदमुवाच ह ॥ २१॥

भीष्मः—

न हि यावद्रणे पार्थं [2]बाणशङ्खधनुर्धरम् ।

वासुदेवसमायुक्तं रथेनोद्यन्तमुद्यतम् ॥ २२॥

समागच्छसि राधेय तेनैवमभिमन्यसे ।

शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[अस्मिन्नध्याये २३॥ श्लोकाः]

---

1. ङ—पञ्चभिर्दिवसैः कर्णः प्रतिजज्ञे महारथः ।
2. म-मा—खड्ग

## ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥

युधिष्ठिरेण चारमुखात् भीष्मादिभिः स्वस्वशक्तिप्रकाशनं निशम्य अर्जुनं प्रति तच्छक्तिनिवेदनचोदने तेन तत्कथनम् ॥ १ ॥

सञ्जयः—

एतच्छ्रुत्वा तु कौन्तेयस् सर्वान् भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ १

युधिष्ठिरः—

धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।
ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् ॥ २

दुर्योधनः किलापृच्छद् आपगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्ता सेनामिति प्रभो ॥ ३

मासेनेति च तेनोक्तो धार्तराष्ट्रस्सुदुर्मतिः ।
तावता चापि कालेन द्रोणोऽपि प्रतिजज्ञिवान् ॥ ४

गौतमो द्विगुणं कालम् उक्तवानिति नश्श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५

तथा दिव्यास्त्रवित् कर्णस् सम्पृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं ससैन्यं प्रत्यजानत ॥ ६

तस्मादहमपीच्छामि श्रोतुमर्जुन तत्त्वतः ।
कालेन कियता शत्रून् क्षपयेरिति संयुगे ॥ ७

सञ्जयः—

एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जयः ।
वासुदेवं समीक्ष्येदं वचनं चेदमब्रवीत् ॥　८

अर्जुनः—

सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव बलं तव ॥　९

अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनैव वासुदेवसहायवान् ॥　१०

सामरानपि लोकांस्त्रीन् सर्वान् स्थावरजङ्गमान् ।
भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः ॥　११

[1]यावदिच्छेद्धरिरयं तावदस्ति न चान्यथा ॥　११॥

यत्तद्घोरं पशुपतिः प्रादादस्त्रं [2]महन्मम ।
कैराते द्वन्द्वयुद्धे तु तदिदं मयि वर्तते ॥　१२॥

[3]यद्युगान्ते पशुपतिस् सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥　१३॥

तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न तु द्रोणसुतो राजन् कुत एव तु सूतजः ॥　१४॥

न तु युक्तं रणे जेतुं दिव्यैरस्त्रैः पृथग्जनम् ।
आर्जवेनैव युद्धेन विजेष्यामो वयं परान् ॥　१५॥

---

1. अ-क-ख-ग-म-मा—इदमर्धं न दृश्यते ।
2. ख-ग-ङ—वरं । म-मा—परं　3. अ-क—अर्धद्वयं नास्ति ।

तथेमे पुरुषव्याघ्रास् सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविद्वांसस् सर्वे युद्धाभिनन्दिनः ॥ १६॥

वेदान्तावभृथस्नातास् सर्वे एतेऽपराजिताः ।
निहन्युस्समरे सेनां देवानामपि पाण्डव ॥ १७॥

शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ १८॥

विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
[1]शङ्खश्चैव महाबाहुर् हैडिम्बश्च महाबलः ॥ १९॥

[2]पुत्रोऽस्याञ्जनपर्वा तु महाबलपराक्रमः ।
शैनेयश्च महाबाहुस् सहायो रणकोविदः ॥ २०॥

[3]अभिमन्युश्च बलवान् द्रौपद्याः पञ्च चात्मजाः ।
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादनेऽपि च ॥ २१॥

क्रोधाद् यं पुरुषं पश्येस् तथा शक्रसमद्युते ।
स क्षिप्रं न [4]भवेद्व्यक्तम् इति त्वां वेद्मि कौरव ॥ २२॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥१८४ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

1. ङ-म-मा—अर्धद्वयं न दृश्यते 2. घ—इतः सार्धः श्लोको नास्ति ।
3. म-इदमर्धं नास्ति 4. ग-घ-ङ-म—भवेच्चापि तथा तद्वेत्थ

## ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥

दुर्योधनेन त्रेधा विभज्य सेनानां प्रस्थापनम् ॥ १ ॥ सर्वेषां शिबिर-प्रवेशः ॥ २ ॥

वैशम्पायनः—

ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान् प्रति ॥ १

आप्लाव्य शुचयस्सर्वे स्रग्विणश्शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिनस् स्वस्ति वाच्य हुताग्नयः ॥ २

सर्वे ब्रह्मविदश्शूरास् सर्वे सुचरितव्रताः ।
सर्वे [1]कामकृतश्चैव सर्वे चाहवलक्षणाः ॥ ३

आहवेषु पराँल्लोकान् जिगीषन्तो महाबलाः ।
एकाग्रमनसस्सर्वे श्रद्दधानाः परस्य च ॥ ४

विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैस्सह ।
प्रययुस्सर्वे एवैते भारद्वाजपुरोगमाः ॥ ५

अश्वत्थामा शान्तनवस् सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये नृपाः ॥ ६

गान्धारराजश्शकुनिः प्राच्योदीच्याश्च सर्वशः ।

---

1. ब-ङ-म-मा—कर्म

शकाः किराता यवनाश् शिबयोऽथ वसातयः ॥ ७

स्वैस्स्वैरनीकैस्सहिताः परिवार्य महारथाः ॥ ७॥

एते महारथास्सर्वे द्वितीये निर्ययुर्बले ॥ ८

कृतवर्मा सहानीकस् त्रिगर्तश्च महारथः ।
दुर्योधनश्च नृपतिर् भ्रातृभिः परिवारितः ॥ ९

शलो भूरिश्रवाश्शल्यः कौसल्योऽथ बृहद्बलः ।
एते पश्चादवर्तन्त धार्तराष्ट्रपुरोगमाः ॥ १०

ते [1]समेत्य यथान्यायं धार्तराष्ट्रा महाबलाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठन्त दंशिताः ॥ ११

दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलङ्कृतम् ॥ १२

न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ १३

तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यश् शतशोऽथ सहस्रशः ॥ १४

पञ्चयोजनविस्तीर्णं मण्डलं तद्रणाजिरम् ।
सेनानिवेशांस्ते राजन्नाविशञ् छतसङ्घशः ॥ १५

---

1. ख-ग-घ-ङ-म-मा—समेताः पथा यात्वा योत्स्यमाना महारथाः ।
[पाठान्तरम्]

तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् ।
विविशुश्शिबिराण्यत्र द्रव्यवन्ति सहस्रशः ॥　　१६

तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥　　१७

सनागाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधवन्दिनः ॥　　१८

वणिजो गणिका[1]श्चारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तान् कौरवो राजा विधिवत् पर्यरक्षत ॥　　१९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

## ॥ षडशीत्यधिकशततमोऽध्यायः ॥

---

युधिष्ठिरेणापि त्रेधा विभज्य स्वसेनानां प्रेषणम् ॥ १ ॥

---

**वैशम्पायनः—**

तथैव राजा कौन्तेयो [2]धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान् वीरांश् चोदयामास भारत ॥　　१

---

1. ङ-मा—वारा
2. ङ—भ्रातृभिः परिवारितः ।　मा—निवेशस्याभिरक्षणे ।

चेदिकाशिकरूशानां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ २

विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।
पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ३

ते शूराश्चित्रवर्माणस् तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ॥ ४

अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ॥ ४॥

अथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ॥ ५॥

[1]तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ ६॥

सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ॥ ७

अभिमन्युं [2]बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान् प्राहिणोत् पाण्डुनन्दनः ॥ ८

भीमं च युयुधानं च पाण्डवं च धनञ्जयम् ।
द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ॥ ९

भाण्डं समारोपयतां चरतां सम्प्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ॥ १०

---

1 ङ—मा—अर्धश्लोकद्वयं न दृश्यते 2. व-ङ—च सौभद्रं

स्वयमेव ततः पश्चाद् विराटद्रुपदान्वितः ।
[1]अथापरैर्महीपालैस् सह प्रायान्महीपतिः ॥ ११

भीम[2]धन्वायनी सेना धृष्टद्युम्नेन पालिता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १२

ततः पुनरनीकानि [3]न्यंयोजयत बुद्धिमान् ।
मोहयन् धृतराष्ट्रस्य पुत्राणां बुद्धिविस्रवम् ॥ १३

द्रौपदेयान् महेष्वासान् अभिमन्युं च भारत ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ १४

[4]दश चाश्वसहस्राणि द्विसहस्राणि दन्तिनाम् ।
अयुतं च पदातीनां रथान् पञ्चशतं तथा ॥ १५

भीमसेनं च दुर्धर्षं प्रथमं [5]प्रादिशद्बलम् ।
मध्यमे च विराटं च जयत्सेनं च मागधम् ॥ १६

महारथौ महात्मानौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ ॥ १७
अन्वयातां तदा मध्ये वासुदेवधनञ्जयौ ॥ १७॥

---

1. ग-घ-ङ-मा—तथाऽन्यैः पृथिवीपालैस् सह प्रायान्महारथः । [पाठान्तरम्]
2. ग-घ-ङ-मा—धन्वायती सेना धृष्टद्युम्नपुरस्कृता ।
3. ङ—व्यादिदेश युधिष्ठिरः
4. ख-ग-घ-ङ—हयान् पञ्चसहस्राणि । म—दश पञ्चसहस्राणि ।
5. ख-घ-ङ—व्यादिशद्बलम्

[1]बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा हयाश्शूरैरधिष्ठिताः ॥ १८॥

पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ॥ १९

पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
[2]सहस्रशोऽन्वयुः पश्चाद् अग्रतश्च सहस्रशः ॥ २०

युधिष्ठिरो यत्र सैन्ये [3]यत्र चैव च फल्गुनः ।
तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ २१

तत्र नागसहस्राणि हयानामयुतानि च ॥ २१॥

[4]चेकितानस्स्वसैन्येन महता पार्थिवर्षभः ।
धृष्टकेतुश्च चेदीनां प्रणेता तत्र वाहिनीम् ॥ २२॥

सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः ।
वृतश्शतसहस्रेण रथानां प्राणदद्बली ॥ २३॥

क्षत्रदेवब्रह्मदेवौ रथस्थौ पुरुषर्षभौ ।
जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ॥ २४॥

भक्ष्यं भोज्यं च यत् किञ्चिद् यानं युग्यं च सर्वशः ॥ २५

---

1. घ-ङ—ततस्तु पृथिवीपालाः नष्टमित्येव मेनिरे।
अन्तरिक्षगतास्सर्वे देवास्सेन्द्रपुरोगमाः ॥ [अधिकः पाठः]
2. ङ—अर्धद्वयं न दृश्यते
3. अ-क-घ-ङ-म—स्वयमेव बलार्णवे
4. अ-क—कोशयोरेव इत आरभ्य एकादश श्लोका दृश्यन्ते।

तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्वं कलत्रं च यत् किञ्चित् कृशदुर्बलम् ॥ २६
कोशसञ्चयवाहाश्च कोष्ठागारास्तथैव च ।
गजानीकेन सङ्गृह्य शनैः प्रायाद्युधिष्ठिरः ॥ २७
तमन्वयात् सत्यधृतिस् सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान् वसुदानश्च पुत्रः काश्यस्य वै विभुः ॥ २८
रथाधिपतिसाहस्रा ये तेषामनुयायिनः ।
हयानां नव कोट्यश्च महतां किङ्किणीकिनाम् ॥ २९
गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः ॥ ३०
षष्टिनागसहस्राणि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन् युधि सैन्ये महात्मनः ॥ ३१
क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच् चलन्त इव पर्वताः ॥ ३२
एवं तस्य बलं भीष्मं कुन्तीपुत्रस्य धीमतः ॥ ३२॥
तथा रथसहस्राणि पदातीनां च भारत ॥ ३३
यदाश्रित्याथ युयुधे धार्तराष्ट्रं सुयोधनम् ।
ततोऽन्ये [1]शतशः पश्चात् सहस्रायुतशो नराः ॥ ३४
नर्दन्तः प्रययुस्तेषाम् अनीकानि सहस्रशः ॥ ३४॥

---

1. मा—गणशः पश्चात् सहस्रशतशो

तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
वादयन्ति स्म संहृष्टास् सहस्रायुतशो नराः ॥ ३५॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
उद्योगपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
॥ ६० ॥ अम्बोपाख्यानपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ३५॥ श्लोकाः]
॥ अम्बोपाख्यानपर्व समाप्तम् ॥ ॥ उद्योगपर्व च समाप्तम् ॥ ५ ॥
॥ अस्मिन्नुद्योगपर्वणि श्लोकाः ६६६७॥* ॥

---

अतःपरं भीष्मपर्व भविष्यति । तस्यायमाद्यः श्लोकः ॥

---

जनमेजयः—
कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः ।
पार्थिवास्सुमहात्मानो नानादेशसमागताः ॥ १

---

* यद्यपि अस्मिन् पर्वणि पर्वसङ्ग्रहाध्यायोक्तरीत्या ६६९८ श्लोकैर्भाव्यम्; तथाऽपि ६६६७॥ श्लोका एवोपलभ्यन्ते ॥

॥ श्रीरस्तु ॥

## महाभारतस्य उद्योगपर्वविषयाणां

# अक्षरमातृकाक्रमेण सूचनम्

अध्यायः-पुटम्

अध्यायः-पुटम्

॥ श्रीः ॥

## उद्योगपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३४ | १ | त दृष्ट्वा | तं दृष्ट्वा |
| ४१ | १६ | भरतषभ | भरतर्षभ |
| ५१ | ६ | विंष्णुँ | विंष्णुं |
| ५५ | १३ | ऋंषिभि | ऋषिभि |
| ७४ | १५ | व्रीडा | व्रीडा |
| ८२ | ७ | कथयध्वं | कथय त्वम् |
| ११३ | १४ | त्वाभिऽनन्दामि | त्वाऽभिनन्दामि |
| ११५ | ७ | वैश्यापूत्रः | वैश्यापुत्रः |
| ११९ | ५ | पर्व चतुर्थो | पर्वणि चतुर्थो |
| १२० | १९ | यद्युद्यष्मासु | यद्यद्युष्मासु |
| १२१ | १५ | यान्मां | यन्मां |
| १२४ | ११ | धार्तराष्ट्र्स्य | धार्तराष्ट्रस्य |
| १३२ | १ | भूतपर्वं | भूतपूर्व |
| १३५ | ५ | पारलोक्यं | पारलौक्यं |
| १६० | १ | प्राञ्जिलिश्च | प्राञ्जलिश्च |
| १६८ | ४ | परिच्छेर्जधन्यम् | परिपृच्छेर्जघन्यम् |
| २०० | २१ | रथ्यँम् | रथ्यम् |
| २०८ | १६ | घालाच्च | बालाश्च |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३०९ | १७ | कुचतसः | कुचेतसः |
| २१८ | ३ | ब्रुस्य | बृस्य |
| २१९ | १९ | क्रुद्धा | क्रुद्धौ |
| २९४ | १४ | -तन्प्रश्न | तत्प्रश्न |
| ३१५ | १४ | कूर्वते | कुर्वते |
| ३३६ | ८ | धार्तराष्ट्रानतप्स्यत् | धार्तराष्ट्रोऽन्वतप्स्यत् |
| ,, | १६ | धार्तराष्ट्रानतप्स्यत् | धार्तराष्ट्रोऽन्वतप्स्यत् |
| ३३८ | ८ | पराङ्मुस्वं | पराङ्मुखं |
| ३४५ | १ | व्वासा | व्यासा |
| ३५२ | १८ | ततोऽहि | ततो हि |
| ३५५ | १५ | गस्त्रं | चास्त्रं |
| ३६९ | १३ | कुन्त्री | कुन्ती |
| ,, | १९ | कुन्त्री | कुन्ती |
| ३७५ | १७ | उरु | ऊरु |
| ३८६ | १८ | कष्णः | कृष्णः |
| ४१८ | २१ | श्लाकायं | श्लोकोऽयं |
| ४३४ | ४ | गम्मीरः | गम्भीरः |
| ४९८ | १४ | पीणा | पीना |
| ५१२ | ७ | नगराणि | नगराणि च |
| ५५६ | २ | व्यतीथाय | व्यतीयाय |
| ५६८ | १७ | परिवसरः | परिवत्सरः |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ५७३ | २३ | इदमध | इदमर्धं |
| ७११ | १४ | यावद्धलं | यावद्बलं |
| ७२९ | १७ | रहते | रहिते |
| ७३९ | १६ | त्वमवर्तिथाः | त्वमवर्तथाः |
| ७७९ | १० | प्रतिजानिहि | प्रतिजानीहि |
| ७८९ | ३ | वंशश् त्वया | वंशस् त्वया |
| ८०१ | १७ | कृतास्त्री | कृतास्त्रो |
| ८०७ | १७ | यैया | ययौ |
| ८१८ | १५ | पाण्डेवेयां | पाण्डवेयौ |
| ८४५ | २८ | पारुष | पौरुष |
| ८५० | १९ | पोरुषो | पुरुषो |
| ८६८ | १५ | सव | सर्व |
| ८८१ | १३ | वीरस | वीरस् |
| ९७३ | ५ | — | भीष्मः— |

PRINTED BY V. RAMASWAMY SASTRULU & SONS,
AT THE 'VAVILLA' PRESS, MADRAS.—1932.